January 1933.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 421.

# वादवारिधिः ।

महामहोपाध्याय-
श्रीगदाधरभट्टाचार्यादिविपश्चिद्भिर्विरचितः ।
काशीविश्वविद्यालय वेदान्तप्रधानाध्यापक-दार्शनिक-
प्रवरश्रीबालकृष्णमिश्रेण निर्ध्यातः ।
नित्यानन्दवेदविद्यालय प्रधानाध्यापक पण्डितवर
श्रीढुण्डिराजशास्त्रिणा संशोधितः ।

# VÂDA VÂRIDHI

*By*

M. M. S'RI GADÂDHARA BHATTÂCHÂRYA
and others.

*Edited by*

*Pandit S'ri Bâlakrishna Mis'ra,*
Vice-Principal, Hindu University, Benares,
and
*Pandit Dhundhirâj Shâstri,*
Principal, N. Veda Vidyālaya, Benares.

FASCICULUS I–१.

*PUBLISHED & SOLD BY THE SECRETARY*
CHOWKHAMBA SANSKRIT SERIES OFFICE,
*Benares City.*

1933

# वादवारिधौ

## प्रत्यक्षखण्डकल्लोले

## (१)अनुद्भूतरूपादिखण्डनवादवीचिः ।

### तत्र उद्भूतत्वानुद्भूतत्वस्वरूपनिर्वचनम् ।

ननु रूपं द्विविधमुद्भूतमनुद्भूतं च । तत्र घ्राणरसनचक्षुःपिशाचादीनां भर्जनकपालस्थवह्न्याद्यूष्मणोश्चानुद्भूतं रूपमुद्भूतरूपं च घटपटादीनाम् । न च तादृशद्वैविध्ये मानाभावः, उद्भूतत्वानुद्भूतत्वयो रूपनिष्ठधर्मयोरनभ्युपगमेऽपि क्षतिविरहादिति वाच्यम् । द्रव्यचाक्षुषं प्रति सामान्यतो रूपत्वेन कारणत्वे घ्राणादीनामपि चाक्षुषापत्त्या उद्भूतरूपत्वेनैव तत्र हेतुत्वं घ्राणादिरूपव्यावृत्तमित्यवश्याभ्युपेयत्वात् । एवं स्पर्शोऽप्युद्भूतानुद्भूतभेदेन द्विविधः । तत्र घ्राणरसनचक्षुस्त्वक्पिशाचादीनां प्रभावाष्पयोश्चानुद्भूतः स्पर्शः, घटपटादीनामनिन्द्रियवायुभर्जनकपालस्थवह्न्याद्यूष्मसौरादितेजःप्रभृतीनां चोद्भूतः स्पर्शः । न च स्पर्शस्य तादृशद्वैविध्ये मानभावः, उद्भूतत्वानुद्भूतत्वयोः स्पर्शनिष्ठधर्मयोरनभ्युपगमेऽपि क्षतिविरहादिति वाच्यम् । द्रव्यस्पार्शने सामान्यतः स्पर्शत्वेन कारणत्वे घ्राणादीनां प्रभावाष्पयोश्च स्पार्शनापत्त्या उद्भूतस्पर्शत्वेनैव तत्र हेतुत्वं, तच्चोद्भूतत्वं घ्राणादिस्पर्शप्रभावाष्पव्यावृत्तमित्यवश्यमभ्युपगमात् । एवं रसोऽप्युद्भूतानुद्भूतभेदेन द्विविधः । घ्राणरसनमणिवज्रादीनामनुद्भूतो रसः उद्भूतो रसश्च गुडादीनाम् । न च तादृशद्वैविध्ये मानाभावः, रसरासनं प्रति सामान्यतो रसत्वेन कारणत्वे रसनसंयुक्तप्रकृष्टमहत्त्ववत्समवायसंनिकर्षेण घ्राणमणिवज्रादीनामपि रसोपलब्ध्यापत्त्या उद्भूतरसत्वेनैव तत्र हेतुत्वं, तच्चोद्भूतत्वं घ्राणादिरसव्यावृत्तमित्यवश्याभ्युपगमात् । एवं गन्धोऽप्युद्भूतानुद्भूतभेदेन द्विविधः । तत्र घ्राणपाषाणमणिवज्रादीनामनुद्भूतो गन्धः, उद्भूतो गन्धश्च घटपटचंपकादीनाम् । न च तादृशद्वैविध्ये मानाभावः, गन्धघ्राणजत्वावच्छिन्नं प्रति सामान्यतो गन्धत्वेनैव हेतुत्वे घ्राणसंयुक्तप्रकृष्टमहत्त्ववत्समवायलक्षणसन्निकर्षेण पाषाणादीनामपि गन्धोपलब्ध्यापत्त्या उद्भूतगन्धत्वेनैव तत्र हेतुत्वं, तच्चोद्भूतत्वं पाषाणादिगन्धव्यावृत्तमित्यवश्याभ्युपेयत्वात् । न

च गन्धघ्राणजत्वावच्छिन्नं प्रति गन्धत्वेनैव कारणत्वं घ्राणसंयुक्तमहदुद्भू-तरसवत्समवायस्य सन्निकर्षतया च न घ्राणादीनां गन्ध इत्येवास्तु किं-गन्धनिष्ठोद्भूतत्वकल्पनेन, निर्गन्धस्यापि रसवतो जलस्य सत्त्वेनोक्तयु-क्त्या रसनिष्ठोद्भूतत्वस्यावश्यकत्वादिति वाच्यम् । अनन्तरसानां सन्नि-कर्षकारणतावच्छेदककोटौ प्रवेशमपेक्ष्योद्भूतगन्धत्वेन गन्धस्य कार-णताया एव लघुत्वात् । धूमस्य नीरसत्वे तदीयगन्धग्रहे उक्तसन्निकर्ष-स्य व्यभिचाराच्चेति नैयायिकसिद्धान्तः ।

तत्र रूपनिष्ठोद्भूतत्वानुद्भूतत्वे कः पदार्थः ? किमुभयमेव जातिः ? अथ वोद्भूतत्वं जातिस्तदभावोऽनुद्भूतत्वम् ? अथवा अनुद्भूतत्वंजातिस्तद-भाव उद्भूतत्वम् ? इति चेत् ।

अत्र सिद्धान्तानुयायिनो नैयायिकाः । अनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वं न तूद्भूतत्वं जातिस्तदभावोऽनुद्भूतत्वम्, नीलत्वपीतत्वशुक्ल-त्वादिना सङ्करात् ।

अथैवमनुद्भूतत्वमपि कथं जातिः नीलत्वादिना सङ्करात् । न चानुद्भू-तत्वं नीलत्वपीतत्वादीनां सर्वेषामेव विरुद्धमनुद्भूतरूपस्यातीन्द्रियतया तत्र नीलत्वादिसत्त्वे मानाभावादिति वाच्यम् । तथासति तत्र रूपत्वादि-सत्त्वेपि मानाभावात्, घ्राणादावनुद्भूतरूपात्मकधर्मिसत्त्वेऽपि मानाभा-वाच्च । पृथिवीत्वादे रूपत्वावच्छिन्नव्याप्यतया घ्राणादावनुद्भूतरूपस्य तत्र रूपे रूपत्वस्य च सिद्धिरिति विभाव्यते, तदा रूपत्वस्य नीलाद्यन्यतमत्व-व्याप्यतया नीलत्वादेरपि तत्रावश्यकत्वात् ।

नव्यास्तु नीलत्वादेर्यस्य कस्यचिदेकस्य तद्व्याप्यमिति वा-च्यं विनिगमकाभावात्, विनिगमकाभावेन सर्वेषामेव व्याप्यत्वा-भ्युपगमे च नीलत्वपीतत्वादीनामेव परस्परं-सङ्करप्रसङ्गादिति चेत् । सत्यम् । नीलत्वपीतत्वव्याप्यं नानैवानुद्भूतत्वमनुद्भूतत्वाभाव-कूटवत्त्वमेवोद्भूतत्वम्, तद्रूपत्वेनैव द्रव्यचाक्षुषं प्रति जनकत्वं तादृशा-भावकूटवत्त्वस्यानुगतत्वात्, उद्भूतत्वस्यैव नीलत्वपीतत्वव्याप्यनाना-जातित्वे च तेन रूपेण द्रव्यचाक्षुषं प्रति जनकत्वस्य परस्परं व्यभिचारा-पत्तेः । न च तथापि घ्राणादिनिष्ठमनुद्भूतरूपं नीलात्मकं पीताद्यात्मकं वेत्यत्र विनिगमकाभाव इति वाच्यम् । विनिगमकाभावेन व्याप्यवृत्ति-नीलपीतादिनानानुद्भूतरूपाणामेव तत्राभ्युपगमात् ।

वस्तुतस्त्वनुद्भूतत्वं शुक्लत्वव्याप्यमेव सर्वेषामेवानुद्भूतं शुक्लमित्यभ्यु-पगमात्, शुक्लरूपस्य च घ्राणाद्यात्मकपृथिव्यामपि सम्भवात् । न च शुक्लत्वव्याप्योत्कर्षापकर्षाभ्यां समं साङ्कर्यमिति वाच्यम् । अनुद्भूत-

रूपस्यात्यन्तापकृष्टरूपतया तत्रोद्भूतशुक्लसाधारणोत्कर्षसत्त्वे मानाभावात्। न च तथापि भास्वरत्वमादाय साङ्कर्यं दुर्वारं तेजसो भास्वररूपवत्त्वनियमेन चक्षुरादिरूपे भास्वरत्वस्यावश्यकत्वात्, तादृशनियमानभ्युपगमे तेजसो रूपवत्त्वनियमस्याप्यपह्नवसम्भवेन तत्रानुद्भूतरूपस्याप्यसिद्धिप्रसङ्गादिति वाच्यम्। अनुद्भूतत्वस्य भास्वरत्वव्याप्यविरुद्धभेदेन द्विविधत्वात्, तादृशानुद्भूतत्वाभावद्वयवद्रूपत्वेन चाक्षुषं प्रति हेतुता।

अथ सर्वेषामेवानुद्भूतरूपं शुक्लमित्यभ्युपगमे अनुद्भूतत्वमेव नीलत्वपीतत्वादिसकलशुक्लत्वविरुद्धजातिव्यापिका घ्राणादिनिष्ठानुद्भूतशुक्लरूपव्यावृत्ता द्रव्यचाक्षुषजनकत्वावच्छेदकत्वेन सिद्धा जातिस्तु लाघवात्। अनुद्भूताभावद्वयवद्रूपत्वेन द्रव्यचाक्षुषं प्रति जनकत्वे गौरवात्। न च शुक्लत्वतद्व्याप्यभास्वरत्वमादाय साङ्कर्यमिति वाच्यम्। शुक्लत्वतद्व्याप्यभास्वरत्वयोरनुद्भूतत्वव्याप्यविरुद्धभेदेन द्विविधत्वात्। अनेकजातिकल्पनं तदवच्छिन्नं प्रति पाकावयवरूपयोरनेककार्यकारणभावकल्पनं च फलमुखं,फलमुखं गौरवं च न दोषायेति सिद्धान्त इति चेन्न।

नीलत्वपीतत्वादीनां रूपत्वसाक्षाद्व्याप्यत्वनियमात्, भास्वरत्वस्य रूपत्वसाक्षाद्व्याप्यजातिसाक्षाद्व्याप्यत्वनियमाच्च। तादृशनियमानभ्युपगमे पृथिव्यादे रूपवत्त्वनियमस्याप्यपह्नवसम्भवेनानुद्भूतरूपस्यासिद्धिप्रसङ्गात्।

एवं स्पर्शनिष्ठानुद्भूतत्वमपि स्पर्शत्वादिव्याप्या नानाजातिः, जलस्पर्शनिष्ठानुद्भूतत्वं शीतत्वव्याप्यं, तैजसस्पर्शनिष्ठानुद्भूतत्वमुष्णत्वव्याप्यं, पृथिवीवायुस्पर्शनिष्ठानुद्भूतत्वमनुष्णाशीतत्वं व्याप्यम्, तदभावकूटस्यानुगतत्वात्। उद्भूतस्पर्शत्वस्यैव शीतत्वादिव्याप्यनानाजातित्वे उद्भूतस्पर्शत्वेन द्रव्यस्पार्शनं प्रति जनकत्वस्य परस्परं व्यभिचारापत्तेः। रसनिष्ठानुद्भूतत्वमपि तिक्तमधुरत्वादिव्याप्या नाना जातिः। घ्राणरसनादिकं च विनिगमनाभावात्तिक्तमधुराद्यनुद्भूतरसवदेव। वस्तुतो रसनिष्ठानुद्भूतत्वं मधुरत्वव्याप्यमेव सर्वं एवानुद्भूतरसो मधुर इत्यभ्युपगमात्। रसनाद्यात्मकजलनिष्ठरसेऽपि तस्य सत्त्वेन तिक्तत्वादिव्याप्यत्वासम्भवात्, 'अपां मधुर एव रस' इति नियमात्। तादृशानुद्भूतत्वाभाववद्रसत्वमेवोद्भूतरसत्वम्, तेनैव रूपेण रसनासनत्वादिव्याप्यनानाजातित्वे च रसरासनत्वावच्छिन्नं प्रति तेन रूपेण जनकत्वस्य परस्परव्यभिचारापत्तेश्च। गन्धनिष्ठानुद्भूतत्वं च विनिगमकाभावेन द्विविधम्, एकं सुरभित्वव्याप्यमपरं चासुरभित्वव्याप्यम्, तदभावद्वयवद्गन्धत्वमेवोद्भूतगन्धत्वम् तेनैव रूपेण

गन्धघ्राणजत्वावच्छिन्नं प्रति जनकत्वम् । उद्भूतगन्धत्वस्यैव जातित्वे सुरभ्यसुरभ्योरेव क्वचित्कचित्सत्त्वेन सुरभित्वादिकमादाय साङ्कर्यापत्तेः, नानात्वाभ्युपगमे च गन्धघ्राणजत्वावच्छिन्नं प्रति तेन रूपेण जनकत्वस्य परस्परं व्यभिचारापत्तेः ; घ्राणपाषाणादिकं च सुरभ्यसुरभ्यनुद्भूतगन्धवदेव विनिगमकाभावादित्याहुः ॥ इति उद्भूतत्वानुद्भूतत्वस्वरूपनिर्वचनम् ॥

## अनुद्भूतरूपादिखण्डनम् ।

अत्र मीमांसकानुयायिनो नव्यनैयायिकाः । तादृशरूपादिद्वैविध्ये मानाभावः, सामान्यतो द्रव्यचाक्षुषं प्रति रूपत्वेन द्रव्यस्पार्शनं प्रति स्पर्शत्वेन रसरासनत्वावच्छिन्नं प्रति रसत्वेन गन्धघ्राणजत्वावच्छिन्नं प्रति गन्धत्वेन लाघवेनैव हेतुत्वात् । नचैवं घ्राणरसनचक्षुःपिशाचादीनामपि चाक्षुषापत्तिः, तेषां प्रभावाष्पयोः स्पार्शनापत्तिः; घ्राणरसनमणिवज्रादिवृत्तिरसानामपि रासनापत्तिः, घ्राणपाषाणमणिवज्रादिगन्धानामपि घ्राणजापत्तिरिति वाच्यम् । तेषां नीरूपत्वनिःस्पर्शत्वनीरसत्वनिर्गन्धत्वाभ्युपगमात् । एवं यत्र यत्रानुद्भूतरूपरसगन्धस्पर्शवत्त्वं नैयायिकसिद्धान्तिभिरभ्युपेयते तत्रैव नीरूपनीरसनिर्गन्धनिःस्पर्शत्वाभ्युपगमात् लाघवात्, तेषां रूपादिमत्त्वे मानाभावाच्च, द्रव्यत्वादेरिव पृथिवीत्वादेरपि रूपादिमत्त्वव्याप्यत्वे मानाभावात् । नचैवं प्रत्यक्षसिद्धरूपादिमदवयव्यानारम्भका एव परमाणवो घ्राणादिकमारभन्ते इति नियतारम्भवादिमते साधु शोभते भूतपरमाणूनामपि रूपादिरहिततयाऽवयवरूपादिविरहादेवावयविनि घ्राणादौ रूपाद्यनुत्पत्तेः सुवचत्वात् । य एव परमाणवः प्रत्यक्षसिद्धरूपादिमत्पृथिव्यादिकमारभन्ते त एव घ्राणादिकमप्यारभन्ते इत्यनियतारम्भवादिनये तु न सङ्गच्छते प्रत्यक्षसिद्धरूपादिमदारम्भकतान्यथानुपपत्त्या परमाणुषु रूपादेरावश्यकत्वेऽवयवरूपादिक्रमेण घ्राणादिष्वपि रूपाद्युत्पत्तौ बाधकाभावादिति वाच्यम् । अनियतारम्भनयेऽपि समवायसम्बन्धेन रूपाद्युत्पत्तिं प्रति तादात्म्यसम्बन्धेन घ्राणाद्यारम्भकद्व्यणुकत्वेन प्रतिबन्धकतया तत्र रूपाद्यनुत्पादात्, द्व्यणुकेरूपाद्यनुत्पत्तौ अवयववृत्तिरूपाद्यभावादेव घ्राणादौ त्रसरेण्वादितदवयवपरम्परायां रूपाद्युत्पत्तेरसम्भवात् । घ्राणाद्यारम्भकत्वं च साक्षात्परम्परासाधारणतदवयवत्वसम्बन्धेन घ्राणादिमत्त्वम् । परमाणुवारणाय द्व्यणुकत्वप्रवेशः । द्व्यणुकत्वं च विलक्षणपरिमाणवत्त्वम् । यद्वा घ्राणाद्यारम्भकजन्यावयवत्वेन प्रतिबन्धकत्वम् । घ्राणाद्यारम्भकजन्यावयवत्वं च

साक्षात्परम्परासाधारणतदवयवत्वकालिकविशेषणत्वोभयसम्बन्धेन घ्राणादिमत्त्वम् । साक्षात्परम्परासाधारणतदवयवत्वं च तन्निष्ठसमवायसम्बन्धावच्छिन्नसंयोगाद्याधारतावच्छेदकताविशेषवत्त्वम् । अस्तु वा समवायसम्बन्धेन रूपाद्युत्पत्तौ तादात्म्यसम्बन्धेन घ्राणादिनैव प्रतिबन्धकत्वं लाघवात् । नचैवं घ्राणाद्यवयवे रूपाद्युत्पत्तिर्दुर्वारेति वाच्यम् । एतदनुरोधेनैव घ्राणत्वादेरवयवावयविवृत्तिजातित्वाभ्युपगमात् ।

अथैवं घ्राणरसनादिभेदेन तादृशबहुतरप्रतिवध्यप्रतिबन्धकभावकल्पनामपेक्ष्य घ्राणादावनुद्भूतरूपादिकल्पनैव लघीयसी, द्रव्यचाक्षुषादिकं प्रति उद्भूतरूपत्वादिना हेतुत्वादेवानुद्भूतरूपादिसत्त्वेऽपि चाक्षुषाद्यनुत्पादात् । न च तत्रानुद्भूतरूपाभ्युपगमेऽप्यनियतारम्भनयेऽपि घटपटादावुद्भूतरूपवत्यनुद्भूतरूपोत्पादवारणायानुद्भूतरूपं प्रति घटपटादीनामनन्तप्रतिबन्धकत्वं दुर्वारम्, अनियतारम्भनयेऽनुद्भूतरूपं प्रति उद्भूतरूपस्यासमवायिकारणताया व्यभिचारेण दुर्वचत्वादिति वाच्यम् । अनुद्भूतरूपं प्रति सामान्यतस्तदितररूपत्वेनैव तादात्म्यसम्बन्धेन प्रतिबन्धकत्वात् । न च तथाप्यनियतारम्भनये घ्राणादावुद्भूतरूपोत्पत्तिवारणाय उद्भूतरूपं प्रति घ्राणत्वादिना प्रतिबन्धकत्वमावश्यकम्, उद्भूतरूपं प्रति उद्भूतरूपस्यासमवायिकारणत्वाभ्युपगमेपि घ्राणाद्यारम्भकद्व्यणुकेपि उद्भूतरूपापत्तेर्दुर्वारत्वादिति वाच्यम् । निरुक्तप्रतिबन्धकाभावाद्यात्मकानुद्भूतरूपसामग्रीसत्त्वेनानुद्भूतरूपस्यैव घ्राणादावुत्पादात्, नीलेतरघटत्वनिश्चयस्यादिवदनुद्भूतेतररूपत्वात्मकस्योद्भूतरूपत्वस्यार्थसमाजग्रस्तत्वेन कार्यतानवच्छेदकतया तदवच्छिन्नापादनासम्भवात् । यदि चानुद्भूतरूपाभ्युपगमेऽवयवरूपजन्यतावच्छेदकजातिद्वयमेकमनुद्भूतत्वव्याप्यमपरं च तद्विरुद्धम्, अन्यथा साङ्कर्यापत्तेः, तथाच घ्राणादौ तदारम्भकद्व्यणुके चानुद्भूतत्वविरुद्धावयवरूपजन्यतावच्छेदकवैजात्यावच्छिन्नापत्तिवारणाय तादृशजात्यवच्छिन्नं प्रति घ्राणत्वादिना प्रतिबन्धकत्वमनियतारम्भनये तथाप्यावश्यकमिति सूक्ष्ममीक्ष्यते, तदापि न तादृशजात्यवच्छिन्नं प्रति घ्राणत्वादिना प्रातिस्विकरूपेण प्रतिबन्धकत्वम्, अपि तु सामान्यतोऽनुद्भूतरूपवत्त्वेनैव तादात्म्यसम्बन्धेनोद्भूतरूपत्वावच्छिन्नं प्रति प्रतिबन्धकत्वमतो लाघवमिति चेन्न ।

घ्राणादावनन्तानुद्भूतरूपतद्ध्वंसतदुभयकार्यकारणभावातिरिक्तानुद्भूतत्वजातिकल्पनां द्रव्यचाक्षुषादिकं प्रति उद्भूतरूपत्वादिना गुरुधर्मेण कारणत्वकल्पनां चापेक्ष्य रूपत्वाद्यवच्छिन्नं प्रति घ्राणत्वादिना कतिपयप्रतिबन्धकत्वकल्पनाया एव युक्तत्वात् ।

वस्तुतस्त्वनियतारम्भनये रूपत्वाद्यवच्छिन्नं प्रति तादात्म्यसम्ब-
न्धेन घ्राणादिना घ्राणाद्यारम्भकद्व्यणुकत्वादिना वा प्रतिबन्धकत्वमेव नो-
पेयं क्रियासंयोगकार्यकारणभावोक्तयुक्त्या तत्तद्व्यक्तित्वविशिष्टसमवाय-
सम्बन्धेन सत्त्वावच्छिन्नोत्पत्तिं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वस्या-
वश्यकतया यावद्विशेषसामग्रीबाधादेव घ्राणादौ रूपाद्युत्पत्तेरसम्भवात्,
घटपटादिरूपतत्तद्व्यक्तिसमवेतातिरिक्तरूपादेरलीकत्वात्। नचैवं घ्राणा-
दावनुद्भूतरूपत्वादिना प्राचीनेनानियतारम्भनयेऽनुद्भूतरूपं प्रति तादात्म्य-
सम्बन्धेन तदितररूपवतोऽनुद्भूतेतररूपत्वावच्छिन्नं प्रति तादात्म्यस-
म्बन्धेनानुद्भूतरूपवतश्च प्रतिबन्धकत्वं नोपेयमुक्तक्रमेण यावद्विशेषसा-
मग्रीविरहादेवातिप्रसङ्गवारणसम्भवात्, तथाच जरन्मते को विशेष इति
वाच्यम्। अनन्तानुद्भूतरूपतद्ध्वंसतदुभयकार्यकारणभावातिरिक्तानु-
द्भूतत्वजातिकल्पनाया द्रव्यचाक्षुषं प्रत्युद्भूतरूपत्वेन गुरुधर्मेण कारणत्वक-
ल्पनायाश्च जरन्मते विशेषत्वात्। तेन रूपादेरुद्भूतत्वानुद्भूतत्वरूपद्वैवि-
ध्यखण्डनम्, द्रव्यचाक्षुषादिकं प्रति उद्भूतरूपत्वादिना कारणत्वकल्पने च
गौरवान्मानाभावाच्च। परन्तु घ्राणादीनां नीरूपत्वनिःस्पर्शत्वाभ्युपगम
एवानियतारम्भनये न युक्तः, रूपस्पर्शभेदेन घ्राणादेः प्रतिबध्यप्रतिबन्ध-
कभावकल्पनामपेक्ष्य लाघवाल्लौकिकविषयतासम्बन्धेन प्रत्यक्षत्वावच्छि-
न्नोत्पत्तिं प्रत्येव घ्राणत्वादिना प्रतिबन्धकत्वं रूपस्पर्शौ तु तेषु वर्त्तेते
एवेत्यभ्युपगमस्यैव युक्तत्वात्। न च तावता घ्राणादेः प्रत्यक्षतावारणेऽपि
तद्वृत्तिरूपस्पर्शादेः तद्वृत्तिघ्राणत्वादिजातेश्च प्रत्यक्षापत्तिर्दुर्वारा
चक्षुःसंयुक्तरूपवन्महत्समवायादिलक्षणस्य सन्निकर्षस्य सत्त्वात्, समवेत-
त्वसम्बन्धेनापि प्रत्यक्षत्वावच्छिन्नं प्रति घ्राणत्वादिना प्रतिबन्धकत्वो-
पगमे तद्वृत्तिसत्ताद्रव्यत्वपृथिवीत्वादेरपि घटादावप्रत्यक्षत्वापत्तेः, तद्-
वृत्तिरूपस्पर्शादीनां तु तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वोपगमे चानन्तप्रति-
बध्यप्रतिबन्धकभावकल्पनापत्तरिति वाच्यम्। घ्राणादेरप्रत्यक्षत्वे
तद्वृत्तिरूपस्पर्शादेरपि प्रत्यक्षासम्भवात्, चक्षुःसंयुक्तचाक्षुषसम-
वायत्वक्संयुक्तत्वाचसमवायत्वाभ्यामेव चक्षुःसंयुक्तसमवायादिलक्षण-
सन्निकर्षस्य कारणत्वाभ्युपगमात्। चाक्षुषत्वादिकं चोपलक्षणं
न तु विशेषणम्, तेन घटादेः पूर्वं चाक्षुषादिविरहेऽपि तद्वृत्ति-
गुणकर्मजातीनां न प्रत्यक्षानुपपत्तिः। न च त्वक्संयुक्तत्वाचस-
मवायत्वेन कारणत्वे वायूष्मादिवृत्तिस्पर्शादेरपि प्रत्यक्षं न स्यात्
त्वाचसमवायविरहादिति वाच्यम्। नव्यनैयायिकैर्वायूष्मा-
देरपि त्वाचाङ्गीकारात्। तस्मादनियतारम्भनये घ्राणादीनां रूपस्पर्श-

वत्त्वमेव युक्तम् । किन्तु यत्र रूपवत्त्वं प्रत्यक्षसिद्धम् नतु स्पर्शवत्त्वं तस्य नियतानियतारम्भोभयमते एव निःस्पर्शत्वं युक्तं, यथा प्रभावाष्पयोः । एवं यत्र स्पर्शवत्त्वं प्रत्यक्षसिद्धं न तु रूपवत्त्वं तस्य नियतारम्भानियतारम्भोभयमत एव नीरूपत्वं युक्तं, यथा भर्जनकपालस्थवह्न्याद्यूष्मणः, तत्र तत्र प्रतिबध्यप्रतिबन्धकभावद्वयकल्पनाविरहात् लौकिकविषयतासम्बन्धेन प्रत्यक्षत्वेन प्रतिबध्यत्वमपेक्ष्य समवायसम्बन्धेन रूपत्वादिना प्रतिबध्यत्वस्यैव युक्तत्वाच्चेति कस्यचित्प्रलपितमप्यपास्तम् । घ्राणादावनन्तरूपस्पर्शतद्ध्वंसकल्पनामपेक्ष्य रूपस्पर्शभेदेन घ्राणादेः प्रतिबध्यप्रतिबन्धकभावद्वयकल्पनाया एव न्याय्यत्वात् तन्मतेपि प्रत्यक्षं प्रति घ्राणादेःप्रतिबन्धकत्वस्यावश्यकत्वात् , एकस्यैव प्रतिबध्यप्रतिबन्धकभावस्य समधिकत्वात् , एकस्यामेव व्यक्तौ चाक्षुषादिव्यक्तीनां कालभेदेनानन्ततया तन्मते सन्निकर्षकारणतावच्छेदकशरीरगौरवप्रसङ्गाच्च । न च कार्यकारणभावकल्पनाह्रासे अनन्तव्यक्तिकल्पनापि न दोषायेति सर्वसिद्धम् , अत एव सन्निकर्षकारणतावच्छेदकशरीरगौरवमप्यकिञ्चित्करम् , कार्यकारणभावकल्पनाह्रासे कारणतावच्छेदकशरीरगौरवमपि न दोषायेत्यस्यापि सर्वसिद्धत्वादिति वाच्यम् । घ्राणादिनिष्ठाप्रामाणिकानन्तरूपस्पर्शव्यक्तीनां तद्ध्वंसं प्रति च तद्व्यक्तित्वेनानन्तकार्यकारणभावानां कल्पनीयतया कार्यकारणभावबाहुल्यस्यैव प्रसङ्गात् । किञ्च रूपस्पर्शभेदेन घ्राणादेर्न प्रतिबध्यप्रतिबन्धकभावद्वयम्, अपि तु सामान्यतो मूर्तविशेषगुणत्वावच्छिन्नं प्रत्येव तस्य प्रतिबन्धकत्वम् । मूर्तविशेषगुणत्वं प्रतिबध्यतावच्छेदकतया सिद्धो रूपत्वादिव्यापको जातिविशेषः, स च द्रवत्वद्वयसाधारणो द्रवत्वद्वयव्यावृत्तो वा, नातो विशेषद्रवत्वत्वद्वयमादाय साङ्कर्यम् । एतच्च न विशेषगुणव्यवहारनियामकं तेनातिप्रसक्तिरप्रसक्तिर्वा न दोषाय, अनन्तरूपस्पर्शकल्पनामपेक्ष्यैकजातिकल्पनाया एव युक्तत्वात् ।

वस्तुतस्तु रूपादिकं प्रति घ्राणादेः प्रतिबन्धकत्वमेव नोपेयम् , समवायिकारणानां तत्तद्व्यक्तित्वेन हेतुतया यावद्विशेषसामग्रीविरहादेव तत्र रूपाद्युत्पत्तेरसम्भवात् । नच तदवयवानां निःस्पर्शत्वे घ्राणाद्यारम्भकत्वानुपपत्तिः द्रव्यारम्भकत्वेन स्पर्शवत्त्वस्यावश्यकत्वे तव नये सामान्यतः स्पर्शवत्त्वेन द्रव्यस्पार्शनकारणतया तेषामपि स्पार्शनापत्तिरिति वाच्यम् । निःस्पर्शत्वेऽपि भूतत्वेन द्रव्यारम्भकत्वसम्भवात् । भूतत्वं हि द्रव्यारम्भकतावच्छेदकतया सिद्धो मूर्त्तत्वव्याप्यो जातिविशेषः, आकाशे भूतव्यवहारश्च भाक्तः, लाघवात् जातेरेव भूतपदप्रवृत्तिनिमित्तत्वात् ।

वस्तुतस्तु द्रव्यं प्रति पृथक् समवायिकारणस्य कारणत्वे माना-

भावः । सामान्यतो द्रव्यत्वेन विशिष्य [ तत्तद्व्यक्तिसमवेतत्वसम्बन्धेन ] तत्तद्व्यक्तित्वेन वा समवायिकारणस्य कारणताया आवश्यकत्वात्, अन्यथाऽवयविनि द्रव्योत्पत्तिवारणप्रकारेण तत्तद्व्यक्तिरूपयावद्विशेषसमवायिकारणबाधेनैवातिप्रसङ्गभङ्गादिति प्राहुः ॥

इति अनुभूतरूपादिखण्डनवादवीचिः ॥ १ ॥

## अथ (२)एकपाणिवादवीचिः प्रारभ्यते ॥

"चक्षुः परहिताकांक्षी न स्पृशेदेकपाणिने"त्यत्र निषेधविधित्वं सर्ववादिसिद्धम् ।

नन्वेकपाणिनेत्यत्रैकपदस्य एकत्वसंख्यावत्त्वं पारिभाषिकैकत्ववत्त्वं वाऽर्थः ? आद्ये चक्षुर्द्वये हस्तद्वयस्पर्शेऽपि प्रत्यवायः स्यात् द्रव्यमात्रस्यैवैकत्वसंख्यावत्त्वात् । द्वितीये हि स्वभिन्नपाण्यवच्छिन्नचक्षुःसंयोगाभाववत्त्वम्, एककालीनत्वसम्बन्धेन स्वभिन्नपाणिप्रतियोगिकचक्षुःसंयोगाभाववत्वं वा तत्त्वम् ? नाद्यः, हस्तद्वयेनैकचक्षुःस्पर्शेऽपि प्रत्यवायानापत्तेः तत्र पाणौ तादृशैकत्ववत्त्वाभावात्, हस्तद्वयेनोभयचक्षुःस्पर्शेऽपि तदापत्तेः स्वभिन्नापरपाणिप्रतियोगिकचक्षुःसंयोगस्य स्वस्मिन्नसत्त्वेन तादृशैकत्ववत्त्वात् । न द्वितीयः, एकहस्तेन भिन्नव्यक्तिचक्षुःस्पर्शे अपरहस्तेन स्वीयचक्षुःस्पर्शे प्रत्यवायाभावापत्तेः, एककालीनत्वसम्बन्धेन तादृशसंयोगाभावरूपैकत्ववत्त्वाभावात् । न च चक्षुर्द्व्यापकीभूतपाणिप्रतियोगिकचक्षुःसंयोगाभाववत्त्वं तथा वक्तव्यं, तेनैकहस्तेनैकचक्षुःस्पर्शे सुतरामेव प्रत्यवायः चक्षुर्द्व्यापकीभूतपाणिप्रतियोगिकचक्षुःसंयोगस्याभावादिति वाच्यम् । एकहस्तेनोभयचक्षुःस्पर्शे प्रत्यवायाभावापत्तेः । न च तादृशसम्बधेन स्वभिन्नपाणिप्रतियोगिस्वप्रतियोगिकसंयोगाश्रयचक्षुरवच्छेद्यावच्छेदकीभूतचक्षुःसंयोगाभाववत्त्वं तत्त्वम्, तेन नोक्तदोषः, भिन्नव्यक्तिचक्षुषः स्वप्रतियोगिकसंयोगाश्रयचक्षुरवच्छेदकीभूतात्मनोऽवच्छेदकत्वाभावादिति वाच्यम् । एवं सत्यपि हस्तद्वयेनैकचक्षुःस्पर्शेऽपि प्रत्यवायाभावप्रसङ्गात् तस्य तादृशसंयोगवत्त्वात्, इति चेत् ।

मैवम् । एककालीनत्वसम्बन्धेन स्वावच्छेद्यावच्छेदकीभूतस्वभिन्नपाण्यवच्छिन्नस्वप्रतियोगिकसंयोगाश्रयचक्षुर्भिन्नचक्षुःसंयोगाभाववत्वस्य तदर्थत्वात्, अस्ति हि एकपाणिप्रतियोगिकैकचक्षुःस्पर्शे तादृशसम्बन्धेन, स्वं पाणिः, तदवच्छेद्य आत्मा, तदवच्छेदकीभूतोऽपरपाणिः स्वप्रतियोगिकसंयोगाश्रयचक्षुर्भिन्नं यदपरं चक्षुः तयोः संयोगाभावो यस्तत्त्वमिति

नोक्तदोषाणामवकाशः। अत्र चक्षुःपदं गोलकपरम्, अन्यथा चक्षुषोऽतीन्द्रियतया तदसम्भवः स्यात्। परहिताकांक्षीत्यस्य परहितविषयकेच्छावानित्यर्थः, पाणिनेत्यत्र तृतीयायाः प्रतियोगित्वमवच्छिन्नत्वमर्थः, स्पृशधातोः संयोग एवार्थः, निषेधविधेः पापजनकत्वमर्थः, इत्थञ्च तादृशैकत्ववत्पाणिप्रतियोगिकचक्षुःसंयोगः पापजनक इति बोधः। एवं च विलक्षणप्रत्यवायं प्रति तादृशैकत्ववद्धस्तावच्छिन्नचक्षुःसंयोगत्वेनैव हेतुत्वम्। कार्यतावच्छेदिका प्रत्यासत्तिः समवायः, कारणतावच्छेदिका च स्वाश्रयावच्छेदकत्वम्, स्वं संयोगः तदाश्रयं चक्षुः तदवच्छेद्यत्वमात्मनीति वर्तत एव कार्याधिकरणवृत्तित्वं कारणस्येति न कोऽपि दोषः।

अथवा तद्धस्तप्रतियोगिकचक्षुःसंयोगाभावविशिष्टतद्धस्तान्यहस्तावच्छिन्नचक्षुःसंयोगत्वेन हेतुत्वम्। प्रत्यासत्तिश्च पूर्ववत्। एवमन्यदपि सुधीभिर्विभावनीयमिति दिक् इति।

इति महामहोपाध्यायश्रीगदाधरभट्टाचार्यविरचितैकपाणिवादवीचिः समाप्तः॥ २॥

## अथ (३)त्वङ्मनःसंयोगहेतुत्वखण्डनवादवीचिः।

त्वङ्मनोयोगस्य ज्ञानत्वावच्छिन्नं प्रति जन्यज्ञानत्वावच्छिन्नं प्रति वा हेतुत्वे मानाभावः॥

अथ स्वापोत्तरद्वितीयादिक्षणे ज्ञानोत्पत्तिवारणाय जन्यज्ञानमात्रं प्रति त्वङ्मनोयोगस्य हेतुत्वमावश्यकम्, आत्मनो विभुतया पुरीतन्मनःसंयोगात्मकसुषुप्तिसमये पुरीतदवच्छेदेनात्ममनःसंयोगस्याप्युत्पत्तेः, आत्ममनःसंयोगं विना श्वासप्रश्वासहेतुजीवनयोनियत्नानुत्पत्तेश्च; एतेनात्ममनःसंयोगस्यात्ममनःसंयोगत्वेन मनःसंयोगत्वेन वा नासमवायिकारणत्वं गौरवात्, अपितु वैजात्येन, सुष्वापकालीनात्ममनःसंयोगे च नैतादृशवैजात्यं तस्य फलबलकल्प्यत्वादतः सुषुप्तौ न ज्ञानोत्पत्तिरित्यपि परास्तम्। विजातीयात्ममनःसंयोगस्यासमवायिकारणस्य कार्यतावच्छेदकं न जन्यज्ञानत्वं, किन्तु लाघवात् ज्ञानेच्छादिसाधारणं जन्यात्मविशेषगुणत्वं, तथाच श्वासप्रश्वासहेतुजीवनयोनियत्नान्यथानुपपत्त्या विजातीयात्ममनःसंयोगस्यापि तदानीमावश्यकत्वात्। त्वङ्मनःसंयोगस्तु तदा नास्ति, "यदा मनस्त्वचमपि परिहृत्य पुरीततमनुविशति तदा सुषुप्तिः" इत्यभिधानात्। न च सुषुप्तिदशायां ज्ञानोत्पत्तिवारणाय जन्यज्ञानमात्रं प्रति प्राणमनःसंयोगस्यैव हेतुत्वमभ्युपेयते न तु

त्वङ्मनोयोगस्येति वाच्यम् । त्वक्घ्राणवाय्वोरेव तुल्यतया विनिगमकाभावादिति ॥

मैवम् । सुषुप्तिदशायां कीदृशं ज्ञानमापद्यते ? न तावच्चाक्षुषादि, चक्षुरादिभिर्मनःसंयोगस्याभावादेव तदानीं तदनुपपत्तेः । नाप्यनुमित्यादि, परामर्शाद्यभावात् । नापि स्मृतिः, उद्बोधकस्य फलबलकल्प्यत्वात् । न चात्ममनःसंयोगस्य सत्त्वात्तदानीमात्मादिमानसापत्तिरतस्तद्वारणाय जन्यज्ञानत्वावच्छिन्नं प्रति मानसत्वावच्छिन्नं प्रति च त्वङ्मनोयोगस्य हेतुत्वमावश्यकमिति वाच्यम् । ज्ञानाद्यात्मकविशेषगुणाविषयकात्मादिमानसस्यालीकतया सुषुप्तिकाले ज्ञानादिविरहादेव सुषुप्त्यनन्तरमात्मादिमानसानुत्पत्तेः । सुष्वापप्रयोजकमनःक्रियोत्पत्तिकाले तादृशमनःपूर्वदेशविभागोत्पत्तिकाले वा तस्य ज्ञानादेराशुविनाशितया सुषुप्त्युत्पत्तिकाले चात्ममनःसंयोगस्यासमवायिकारणस्य पूर्वमभावादेव ज्ञानाद्यनुत्पत्तेः । न च मनःपूर्वदेशविभागकालोत्पन्नस्यापेक्षाबुद्ध्यात्मकज्ञानस्य सुषुप्त्युत्पत्तिकालेऽवस्थानसम्भव इति वाच्यम् । तदानीमपेक्षाबुद्ध्यात्मकज्ञानोत्पादे मानाभावात्, अपेक्षाबुद्धेरपि क्षणत्रयावस्थायित्वे मानाभावाच्च । न च सुष्वापप्रयोजकमनःपूर्वसंयोगनाशकालोत्पन्नज्ञानादेः सुषुप्तिदशायामवस्थानसम्भव इति वाच्यम् । असमवायिकारणस्य कार्यसहभावेन हेतुतया मनःपूर्वसंयोगनाशदशायां ज्ञानोत्पादासंभवात् । न च यस्य समवायिकारणनाशात् कार्यनाशः तस्यैव कार्यसहभावेन हेतुतया मनःसंयोगस्य कार्यसहभावेनासमवायिकारणत्वे मानाभाव इति वाच्यम् । त्वङ्मनोयोगस्यातिरिक्तस्य कारणत्वापेक्षया तावन्मात्रकल्पनाया एव लघुत्वात् । न चात्ममनःसंयोगस्यात्ममनःसंयोगत्वेन मनःसंयोगत्वेन वा नासमवायिकारणत्वं, किन्तु लाघवात्संयोगत्वेन, तथाच यत्किञ्चित्संयोगे कार्यसहवृत्तित्वमस्त्येवेति वाच्यम् । त्वङ्मनोयोगस्यातिरिक्तकारणत्वकल्पनापेक्षयाऽऽत्ममनःसंयोगवृत्तिवैजात्येनैव कार्यसहवृत्तिरूपाऽसमवायिकारणत्वमात्रकल्पनाया एव लघुत्वात् । न चात्ममनःसंयोगस्य कार्यसहवृत्तितया हेतुत्वेऽपि यत्र मनःक्रियया न पुरीतन्मनःसंयोगात्मकसुषुप्त्युत्पादः, किन्तु पूर्वदेशसंयुक्त एव मनसि पुरीतत्संयोगरूपसुषुप्तिः तत्र स्वापोत्पत्तिप्राक्काले ज्ञानोत्पत्तिसम्भव इति वाच्यम् । तादृशपुरीततिक्रियया पुरीतन्मनःसंयोगस्य सुषुप्तित्वविरहात्, "यदा मनस्त्वचमपि परिहृत्य पुरीततमनुविशति तदा सुषुप्तिरि"त्यभिधानात् ।

केचित्तु सुष्वापानन्तरं ज्ञानोत्पादवारणाय जन्यज्ञानत्वावच्छिन्नं

प्रत्यात्ममनःसंयोगस्यैव सुष्वापकालीनमनःसंयोगव्यावृत्तवैजात्येन हेतुत्वमुपेयते, न तु त्वङ्मनोयोगस्य । न च विनिगमकाभावात् त्वङ्मनोयोगस्यापि वैजात्येन हेतुत्वं दुर्वारम्, ज्ञानेच्छासाधारणजन्यात्मविशेषगुणत्वावच्छिन्नं प्रत्यात्ममनःसंयोगस्य पृथगसमवायिकारणतायास्तवापि आवश्यकत्वात् इति वाच्यम् । आत्ममनःसंयोगस्य वैजात्येन हेतुत्वे समवायस्य प्रत्यासत्तितया प्रत्यासत्तिलाघवात्, त्वङ्मनोयोगस्य हेतुत्वेऽवच्छेदकत्वस्यैव प्रत्यासत्तित्वे गौरवात्, कर्मसंयोगजन्यतावच्छेदकवैजात्यस्याधिकस्य कल्पने (१) गौरवापत्तेश्चेत्याहुः ।

तदसत् । उक्तक्रमेणैव सुषुप्त्यनन्तरं ज्ञानोत्पत्त्यादेर्वारणसम्भवेनात्ममनःसंयोगस्याप्यतिरिक्तकारणत्वकल्पने मानाभावात् ।

मिश्रास्तु सुषुप्त्यनन्तरं ज्ञानोत्पत्तिवारणाय चर्ममनःसंयोग एव जन्यज्ञानसामान्ये हेतुरभ्युपेयते, न तु त्वङ्मनोयोगः । न च विनिगमनाविरहः, जन्यज्ञानसामान्ये त्वङ्मनोयोगस्य हेतुत्वे रसादिसाक्षात्कारकाले त्वचा द्रव्यग्रहापत्तेः, सामान्यसामग्र्यास्त्वङ्मनोयोगस्यावश्यकत्वात् । रसादिसाक्षात्कारसामग्र्याः प्रतिबन्धकत्वाभ्युपगमेऽतीव गौरवादित्याहुः ।

तदप्यसत् । रसादिसाक्षात्कारकाले द्रव्येण समं त्वक्सन्निकर्षे एव मानाभावेन तदभावादेव त्वचा द्रव्यसाक्षात्कारापत्तेरभावात्, तावता मानसत्वावच्छिन्नं प्रति त्वङ्मनोयोगस्य हेतुत्वे बाधकाभावाच्च । एवमुक्तक्रमेणैव सुषुप्त्यनन्तरं ज्ञानानुत्पादसम्भवे चर्ममनोयोगस्यापि हेतुत्वे मानाभावः ।

केचित्तु सुषुप्त्यनन्तरं ज्ञानोत्पत्तिवारणाय शरीरमनःसंयोग एव ज्ञानसामान्ये जन्यज्ञानसामान्ये वा हेतुरुपेयते, न तु त्वङ्मनोयोगः, शरीरसंयोगस्य त्वक्संयोगव्याप्यतया सुषुप्तिदशायां त्वङ्मनोयोगस्येव शरीरमनोयोगस्यापि हेतुत्वात् । न च शरीरत्वमपेक्ष्य त्वक्त्वस्य जातिरूपतया लघुत्वेन त्वङ्मनोयोग एव हेतुरुचित इति वाच्यम् । शरीरमनःसंयोगस्य हि न शरीरमनःसंयोगत्वेन हेतुत्वं येन शरीरत्वप्रवेशः,—किन्तु शरीरनिष्ठतया मनःसंयोगत्वेन, समवायावच्छेदकत्वघटितसामानाधिकरण्यं प्रत्यासत्तिः । कारणदिशि समवायः, कार्यदिशि चावच्छेदकत्वम् । त्वङ्मनोयोगस्य हेतुत्वे त्वक्त्वसंयोग-

(१) अत्र 'त्वङ्मनः संयोगस्य हेतुत्वे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वकल्पने' इति पाठो युक्तः प्रतिभाति ।

त्वयोरवच्छेदककोटिप्रवेशस्यावश्यकतया गौरवात् । न च त्वङ्मनोयोगस्यापि त्वङ्मनोयोगत्वेन न हेतुत्वम्, अपि तु वैजात्येनातो न त्वक्त्वसंयोगत्वयोः प्रवेश इति वाच्यम् । तथाप्यतिरिक्तकल्पनामपेक्ष्य मनस्त्वेन हेतुताया लघुत्वादिति प्राहुः ।

तदप्यसत् । स्वापोत्तरज्ञानप्रसंगस्योक्तक्रमेणाप्यवारणात् । शरीर-मनःसंयोगस्याप्यतिरिक्तकारणत्वे मानाभावादिति संक्षेपः ॥

इति त्वङ्मनोयोगस्य जन्यज्ञानहेतुत्वखण्डनवादवीचिः ॥ ३ ॥

## अथ (४)विशिष्टवैशिष्ट्यवादवीचिः ।

विशिष्टवैशिष्ट्यबुद्धिश्चतुर्विधा (१) विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमिति न्यायेन, (२) एकत्र द्वयमिति न्यायेन, (३) विशिष्टे वैशिष्ट्य(क)मिति न्यायेन, (४)विशिष्टस्य वैशिष्ट्यमिति न्यायेन चेति भेदात् । न च विशिष्टे वैशिष्ट्यमिति न्यायेन विषयितायां मानाभावः, तादृशविषयित्वस्य केनापि प्रामाणिकेनालिखनादिति वाच्यम् । विशिष्टस्य वैशिष्ट्यमिति न्यायेन विषयितावत् (ख)तादृशविषयित्वस्याप्यनुभवसिद्धत्वेन दुरपह्नवत्वात्, प्रामाणिकालिखनस्याकिञ्चित्करत्वात् । विशेष्यतावच्छेदकपक्षधर्म्मितावच्छेदकपक्षयोर्बहुषु स्थानेषु प्रामाणिकैर्लिखितत्वेन फलतस्तादृशविषयित्वस्यापि लिखनात् । यद्धर्म्मविशिष्टेऽनन्तवशिष्ट्यं भासते तादृशधर्म्मस्यैव विशेष्यतावच्छेदकपक्षधर्म्मितावच्छेदकपक्षप्रतिपाद्यत्वात्, "अनुभवसिद्धो विशिष्टवैशिष्ट्यबुद्धीनां विशेषणता( तादृशविषयिता )विशेष" इति परामर्शग्रन्थे आचार्य्यानुमानव्याख्यानावसरे भट्टाचार्य्यैरेव लिखितत्वाच्च । तत्र विशिष्टवैशिष्ट्यबुद्धीनामित्यर्थाद्विशिष्टस्य वैशिष्ट्यमिति न्यायेन विशिष्टप्रतियोगिकवैशिष्ट्यावगाहिबुद्धिभिन्नायामपि विशिष्टानुयोगिकवैशिष्ट्यावगाहिन्यां—द्रव्यं पर्वतः सत्तावान् इत्यादिबुद्धौ विशेष्यतावच्छेदकद्रव्यत्वपर्वतत्वसमानकालीन सत्ताभानात् ॥ तत्राद्यद्वयं प्रति विशेषणज्ञानमेव हेतुः, तृतीयं प्रति तु विशेष्यतावच्छेदकप्रकारकविशेष्यज्ञानं हेतुः, एवं विशेषणतावच्छेदकसत्तात्वप्रकारकसत्ताज्ञानमपि हेतुः । रजतरजतत्वद्रव्यद्रव्यत्वादिनिर्विकल्पकानन्तरमेकत्र द्वयमिति न्यायेन रजतत्वादिविशेष्यतावच्छे-

( क ) विशिष्टानुयोगिकवैशिष्ट्यमित्यर्थः ।
( ख ) विशिष्टप्रतियोगिकवैशिष्ट्यमित्यर्थः ।
( ग ) विशिष्टे वैशिष्ट्यमिति न्यायेन ।

दकताद्दृशज्ञानानुदयस्य सर्वानुभवसिद्धत्वात् । विशिष्टे वैशिष्ट्यमिति न्यायेन रजतत्वविशिष्टानुयोगिकद्रव्यत्ववैशिष्ट्यावगाहि रजतं द्रव्यमिति ज्ञानानुदयात् । दण्डपुरुषकुण्डलानीत्यादिसमूहालम्बनज्ञानानन्तरं सत्यपि पुरुषेन्द्रियसन्निकर्षे विशेष्यतावच्छेदकपुरुषत्वप्रकारकपुरुषविशेष्यकज्ञानस्य कारणस्य पूर्व सत्त्वेपि एकत्र द्वयमिति न्यायस्य बलवत्त्वात् । एवं दण्डपुरुषावित्यत्रापि बोध्यम् । प्रथमतः निर्विकल्पक इति विलम्बोपस्थितिकतया तृतीयचतुर्थयोः न्याययोः न प्रवृत्तिः, दुर्बलत्वात् । आद्यद्वयन्याययोः निर्विकल्पकादिविशेषणज्ञानानन्तरं प्रवृत्तिः शीघ्रोपस्थितिकत्वात् , दंडी पुरुषः कुंडलीत्यत्र दण्डादिविशेष्यतावच्छेदककुण्डलादिवैशिष्ट्यज्ञानानुत्पादस्य सर्वानुभवसिद्धत्वाच्च । चतुर्थं प्रति तु विशेषणतावच्छेदकप्रकारकविशेषणज्ञानं हेतुः रजतरजतत्वनिर्विकल्पकानन्तरं सत्यपि रजतभूतलयोः सन्निकर्षे विशेष्ये विशेषणमिति न्यायेन रजतवत् भूतलमिति ज्ञानोदयेऽपि 'विशिष्टस्य वैशिष्ट्यमि'ति न्यायेन तादृशज्ञानानुदयस्य सर्वानुभवसिद्धत्वात् । दण्डपुरुषावितिसमूहालम्बनज्ञानानन्तरं सत्यप्यधिकरणेन्द्रियसन्निकर्षे दण्डविशिष्टपुरुषनिरूपितवैशिष्ट्यविषयिताशालिनो दण्डिपुरुषवान् देश इति ज्ञानस्यानुत्पत्तेरनुभवसिद्धत्वाच्चेति सिद्धान्तः ।

तत्र तस्य केन रूपेण हेतुत्वमिति उच्यते–विशिष्टस्य वैशिष्ट्यमिति न्यायेन विशिष्टवैशिष्ट्यबुद्धिर्हि विशिष्टनिरूपितवैशिष्ट्यबुद्धिः विशिष्टविशिष्टनिरूपितवैशिष्ट्यबुद्धिरित्यादिक्रमेण एकैकविशिष्टवैशिष्ट्यबुद्ध्या नानाविधा पूर्वपूर्वविषयिताव्यापिका(१) । तत्र विशिष्टनिरूपितवैशिष्ट्यबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्य स्वरूपतस्तत्प्रकारकतद्विशेष्यकज्ञानत्वेन कारणत्वम् । प्रथमं तत्पदं विशेषणतावच्छेदकपरम् , द्वितीयं तत्पदं विशेषणपरम् । जातित्वरूपेण रजतत्वप्रकारकाद्रजतज्ञानात् स्वरूपतो रजतत्वप्रकारकरजतत्वज्ञानसहज्ञानाज्जातित्वरूपेण रजतत्वविशिष्टरजतवैशिष्ट्यप्रत्यक्षोत्पत्तावपि स्वरूपतो रजतत्वविशिष्टरजतवैशिष्ट्यप्रत्यक्षानुत्पत्त्या स्वरूपतस्त्वान्तर्भावः । (२)अथवा जातित्वस्वरूपेण रजतत्वप्रकारकाद्रजतत्वनिर्विकल्पकसहज्ञानाज्जातिमत्त्वानिति विशिष्टवैशिष्ट्यप्रत्यक्षोत्पत्तावपि रजतवानिति विशिष्टवैशिष्ट्यप्रत्ययानुत्पत्त्या स्वरूपतस्त्वान्तर्भावः । न च जाति-

---

(१) विषयिता व्यापिका उच्यते इति परेणान्वयः ।
(२) इष्टापत्तौ दोषान्तरमाह अथवेति ।

स्वरूपेण रजतत्वप्रकारकज्ञानानन्तरं रजतत्वनिर्विकल्पकमेव न सम्भवति रजतत्वविशिष्टज्ञानसामग्रीसत्त्वादिति वाच्यम् । लौकिकसन्निकर्षस्यैव निर्विकल्पकविषयितया विशिष्टज्ञानसामग्रीसत्त्वेऽपि निर्विकल्पकोत्पत्तौ बाधकाभावात् । यद्वा यत्रादौ रजतत्वनिर्विकल्पकं रजतेन्द्रियसन्निकर्षनाशश्चेत्येकः कालः, ततो जातित्वरूपेण रजतत्वप्रकारकं जातिमानिति स्मरणं सन्निकर्षान्तरोत्पत्तिश्चेत्येकः कालः, तदनन्तरं रजतवानितिविशिष्टवैशिष्ट्यप्रत्यक्षापत्तिः । एवं यत्राऽऽदौ मनसा सुखसुखत्वादिनिर्विकल्पकं ततो जातिस्वरूपेण सुखत्वप्रकारकं जातिमदिति स्मरणं मानससामग्रीमपेक्ष्य स्मृतिसामग्र्या (१)बलवत्त्वात्, ततः सुखवानितिविशिष्टवैशिष्ट्यावगाहिमानसप्रत्यक्षापत्तिरतः स्वरूपतस्त्वान्तर्भावः । रजतत्वादिप्रकारकशुक्त्यादिज्ञानात् द्रव्यत्वादिप्रकारकरजतज्ञानकालीनाद्रजतत्वविशिष्टरजतवैशिष्ट्यज्ञानानुदयात् तद्विशेष्यकत्वान्तर्भावः । अत एव पर्वतो वह्निमानित्याद्यनुमितौ वह्नित्वरूपेण पर्वतीयवह्निभानार्थं सामान्यलक्षणायाः प्रत्यासत्तित्वादर इति नैयायिकसम्प्रदायः मीमांसकानामपि । स्वतन्त्रनैयायिकनये तु तत्प्रकारकज्ञानत्वेन कारणत्वं, न तु तद्विशेष्यकत्वान्तर्भावः गौरवाद्विशेष्यभेदेनानन्तकार्य्यकारणभावप्रसङ्गाच्च । रजतत्वादिप्रकारकशुक्त्यादिज्ञानादपि सति विशेषणीभूतरजतज्ञाने रजत्वविशिष्टरजतवैशिष्ट्यज्ञानस्येष्टत्वात् । न चैवं सामान्यलक्षणायाः प्रत्यसत्तित्वविलोपः, साध्यतावच्छेदकसम्बन्धेन दृष्टान्तीयसाध्यज्ञानादेव साध्यतावच्छेदकरूपेण पक्षीयसाध्यज्ञानसम्भवादिति वाच्यम् । तद्विलोपस्येष्टत्वात् । ( स्वतन्त्रनैयायिकनये ) सत्यपि रजतत्वप्रकारकरजतविशेष्यकानुबुद्धसंस्कारे रजतभूतलयोः सन्निकर्षसत्त्वे विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमिति न्यायेन ज्ञानस्य जायमानत्वेऽपि रजतवद् भूतलमिति विशिष्टवैशिष्ट्यभानानुदयात् ज्ञानत्वान्तर्भावः । न चैवं रजतज्ञानम्, अथ रजतेच्छा रजतद्वेषो वा तत इच्छात्वस्य द्वेषत्वस्य वा निर्विकल्पकं ज्ञाननाशश्चेत्येकः कालः, तदनन्तरं रजतमिच्छामि रजतं द्वेष्मीति वाऽनुव्यवसायः कथं स्यात्, तस्यापि रजतत्वविशिष्टवैशिष्ट्यज्ञानत्वात्, तदव्यवहितपूर्वञ्च रजत्वप्रकारकरजतज्ञानविरहादिति वाच्यम् । इच्छात्वादिनिर्विकल्पकाले मनसा रजतत्वप्रकारेण रजत-

(१) न च स्मृतिसामग्र्या मानसं प्रति अनुगतप्रतिबन्धकत्वासम्भवात् तद्घटकीभूतोद्बोधकानामननुगमात् अनन्तप्रतिबध्यप्रतिबन्धक भावकल्पने गौरवमेव विनिगमकम् अणुरपि विशेषोऽध्यवसायक इति न्यायात् इति वाच्यम् । फलमुखगौरवस्यादोषत्वात् ।

स्योपनीतभाने वाधकाभावात्। न च तथापि रजतज्ञानमथ रजतेच्छा ततो रजतकृतिर्ज्ञाननाशश्चेत्येकः कालः, ततः कृतित्वनिर्विकल्पकम् इदानीं रजतस्योपनीतभानासम्भवः ज्ञानस्य सन्निकर्षस्य पूर्वं नाशात्, तदनन्तरं च रजतं करोमीत्यनुव्यवसायः कथं स्यात्, तस्यापि रजतत्वविशिष्टवैशिष्ट्यज्ञानत्वादिति वाच्यम्। तत्र कृतित्वादिनिर्विकल्पकानन्तरं नियमतो रजत्वादिप्रकारेण स्मृतिकल्पनात् मानससामग्रीमपेक्ष्य स्मृतिसामग्र्या बलवत्त्वात्॥ तत्प्रकारकत्वञ्च विशेषणतानियामकसम्बन्धेन ग्राह्यम्, तेन न एकसम्बन्धेन तत्प्रकारकज्ञानादन्यसम्बन्धेन तद्विशिष्टस्य वैशिष्ट्यबुद्धिः॥ कार्य्यतावच्छेदकञ्च स्वरूपतस्तद्धर्म्मावच्छिन्नतन्निष्ठप्रकारताकानुभवत्वम्। तद्धर्म्मपदं विशेषणतावच्छेदकपरं, द्वितीयतत्पदं विशेषणपरम्। कारणतावच्छेदके तद्विशेष्यकत्वप्रवेशात् कार्य्यतावच्छेदके तन्निष्ठत्वप्रवेशः, अन्यथा तत्प्रकारकतद्विशेष्यकज्ञानं विनापि तदवच्छिन्नान्यनिष्ठप्रकारकानुभवोत्पत्त्या व्यभिचारापत्तेः स्वतन्त्रनैयायिकनये कारणतावच्छेदके तद्विशेष्यकत्वाप्रवेशात् कार्य्यतावच्छेदकेऽपि तन्निष्ठत्वं नोपादेयम्। कारणतावच्छेदके स्वरूपतस्तत्प्रवेशात् कार्य्यतावच्छेदकेऽपि तत्प्रवेशः, अन्यथा स्वरूपतो रजतत्वप्रकारकज्ञानं विनापि जातित्वरूपेण रजतत्वप्रकारकात् जातिमानिति ज्ञानात् जायमाने जातिमत्वानिति रजतत्वविशिष्टवैशिष्ट्यावगाहिज्ञाने व्यभिचारापत्तिः। वह्नित्वरूपेण वह्न्यन्तरज्ञानासमवहिताद्वह्नित्वरूपेण च महानसीयवह्निमात्रविषयकात् स्मरणात्मकपरामर्शात् वह्नित्वरूपेण निखिलवह्निविषयकानुमितिवारणाय प्रत्यक्षत्वमपहायानुभवत्वप्रवेशः।

ननु तथापि स्वतन्त्रनैयायिकनये तद्विशेष्यकत्वतन्निष्ठप्रकारकत्वयोर्द्वयोः कारणत्वकार्यतावच्छेदकाघटकतया प्रत्यक्षत्वमपहायानुभवत्वप्रवेशो न युक्तः प्रत्यक्षत्वानुभवत्वयोः समशरीरत्वेपि अनुभवत्वस्य व्यापकधर्म्मत्वात्, अगुरुव्याप्यधर्म्मसंभवे व्याप्यधर्म्मेण कारणत्वस्येव कार्य्यत्वस्यापि कल्पनात्। नचैवमनुमित्युपमितिशाब्दबोधानामसंग्रह इति वाच्यम्। तेषामसंग्रहेऽपि क्षतिविरहात्। परामर्शातिदेशवाक्यार्थज्ञानपदार्थोपस्थितीनामेव विशेषणतावच्छेदकप्रकारकज्ञानत्वनियमेन तेषां कारणतयैवातिप्रसङ्गभङ्गात्। न चानुमित्यसंग्रहे वह्नित्वरूपेण वह्न्यन्तरज्ञानासमवहितात् वह्नित्वरूपेण महानसीयवह्निमात्रविषयकस्मरणात्मकपरामर्शोदयादपि वह्नित्वरूपेण निखिलवह्न्यनुमानापत्तिरिति वाच्यम्। स्वतन्त्रनैयायिकानामिष्टत्वात्, अन्यथाऽनुभवत्वस्य कार्य्य-

तावच्छेदकत्वेऽपि तन्नये तद्विशेष्यकत्वतन्निष्ठप्रकारत्वयोः कारणत्वकार्य्यतावच्छेदकाघटकतया तदापत्तेर्दुर्वारत्वात्। न च तथाप्यनुमित्यसंग्रहे अप्रसिद्धसाध्यकानुमितेरपि साध्यतावच्छेदकविशिष्टसाध्यप्रकारकत्वापत्तिरिति वाच्यम्। भावसाध्यकानुमितेः प्रतियोग्यविशेषिताभावसाध्यकानुमितेश्च अप्रसिद्धसाध्यकत्वाभावात्। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिविशेषिताभाववैशिष्ट्यबुद्धिश्च न स्वरूपतो विशेषणतावच्छेदकीभूतप्रतियोगिविषयिकेति।

मैवम्। प्रत्यक्षत्वस्य कार्य्यतावच्छेदकत्वे घटो गन्धवान् पृथिवीत्वादित्यादौ असुरभिगन्धबाधज्ञानदशायामज्ञातसुरभिगन्धस्यापि सुरभित्वेन गन्धविधेयकानुमित्यापत्तेः, सुरभिभिन्नगन्धत्वेन गन्धबाधज्ञानस्येवासुरभित्वरूपजातिविशेषरूपेण गन्धबाधज्ञानस्यापि सुरभित्वप्रकारकगन्धानुमितिहेतुत्वात्, अत एव प्रत्यक्षमणिदीधितौ ज्ञप्तिवादे अप्रसिद्धप्रामाण्यसाध्यकानुमानप्रकरणे "न त्वज्ञातसुरभिगन्धस्यासुरभिगन्धबाधे ज्ञायमानगन्धानुमितिर्जात्वपि सुरभित्वेन गन्धं विषयीकरोति" इति भट्टाचार्य्याः। एवञ्च प्रत्यक्षत्वस्य कार्य्यतावच्छेदकत्वे पर्वतो द्रव्यवान् धूमादित्यादावपि वह्नित्वशून्यद्रव्याभाववान् पर्वत इत्यादि स्वरूपतो वह्नित्वविषयकस्मरणदशायामज्ञातवह्नित्वावच्छिन्नवह्निकस्यापि वह्नित्वेन वह्निविधेयकानुमित्यापत्तिः वह्न्यन्तरद्रव्यत्वेन बाधज्ञानस्येव वह्नित्वशून्यत्वेन द्रव्यत्वेन बाधज्ञानस्यापि वह्नित्वरूपेण वह्निविधेयकानुमितिहेतुत्वात्। यद्धर्म्मावच्छिन्नस्य तु स्वप्रकारकव्याप्यत्वपरामर्शस्वघटितबाधज्ञानयोरन्यतरज्ञानं विनानुमितिसम्भवे यद्धर्म्मविशिष्टवैशिष्ट्यबुद्धेः कार्य्यतायां प्रत्यक्षत्वस्यैव कार्यतावच्छेकत्वे चेष्टापत्तिरिति॥ विशिष्टविशिष्टनिरूपितवैशिष्ट्यबुद्धिं प्रति विशेणतावच्छेदकतावच्छेदकप्रकारकविशेषणतावच्छेदकविशिष्टविशेषणज्ञानस्य कारणत्वन्तु स्वरूपतस्तद्धर्म्मविशिष्टतत्प्रकारकतद्विशेष्यकज्ञानत्वेन। प्रथमतत्पदं विशेषणतावच्छेदकतावच्छेदकपरं, द्वितीयतत्पदं विशेषणतावच्छेदकपरं, तृतीयतत्पदं विशेषणपरम्। जातित्वरूपेण रजतत्वविशेषणकरजतप्रकारकस्मरणाद्रजनमिति (३) स्मरणसहकृताद्रजतवत्त्वानिति विशिष्टविशिष्टनिरूपितवैशिष्ट्यबुद्धिवारणाय स्वरूपतस्त्वान्तर्भावः।

मीमांसकानुयायिस्वतन्त्रनैयायिकनये तु स्वरूपतस्तद्धर्म्मविशिष्टप्रकारकज्ञानत्वेनैव कारणत्वम्, नतु द्वितीयस्य तृतीयस्य वा तत्पदस्य प्रवेशः गौरवात्, विशेषणतावच्छेदकप्रकारकविशेषणभेदेनान्तकार्य्यकारण-

भावप्रसङ्गाच्च विशेषणतावच्छेदकतावच्छेदकरूपेणैव स्वरूपतः रजतत्वेन शुक्तिप्रकारककुडयविशेषणकज्ञानेऽपि स्वरूपतः रजतत्वेन रजतविशेषणतावच्छेदकैकघटविशेषणकभूतलविशेष्यकज्ञानस्येष्टत्वात्। स्वतन्त्रनैयायिकनये तु स्वरूपतस्तद्धर्म्मविशिष्टावच्छिन्नप्रकारताकानुभवत्वावच्छिन्नं प्रति स्वरूपतस्तद्धर्म्मविशिष्टप्रकारकज्ञानत्वेन कारणत्वम्, वस्तुप्रकारकैकवस्तुविशेषणकज्ञानेऽपि विशेषणतावच्छेदकरूपेण वस्त्वन्तरविशेषणतावच्छेदकैकवस्त्वन्तरविशेषणकज्ञानस्येष्टत्वात्, अतएव पर्वतो वह्निमानित्यादौ विशेषणतावच्छेदकतया वह्निव्याप्यधूमवान् पर्वत इति परामर्शे पर्वतीयवह्न्यादिभानार्थमपि न सामान्यलक्षणा प्रत्यासत्तिरावश्यकी। ज्ञानत्वान्तर्भावस्तु पूर्व्ववदनुद्बुद्धसंस्कारवारणाय। रजतरजतादिविषयकेच्छाद्वेषकृतीनां विशिष्टविषयोपधानेन साक्षात्कारे व्यभिचारवारणमपि पूर्व्ववत्। तद्धर्मविशिष्टत्वञ्च विशेषणतावच्छेदकतावच्छेदकतानियामकसम्बन्धेन, प्रकारता च विशेषणतावच्छेदकतानियामकसम्बन्धेन ग्राह्या, प्रयोजनञ्चोक्तप्रायम्। न च रजतरजतत्वनिर्विकल्पकविशेष्येन्द्रियसन्निकर्षाभ्यां विशेष्ये विशेषणमिति न्यायेनोत्पन्नाद्रजतवद्भितिज्ञानाद्रजतवत्त्वानिति विशिष्टविशिष्टनिरूपितवैशिष्ट्यबुद्धिर्न स्यादिति वाच्यम्। इष्टत्वात्, विशिष्टविशिष्टनिरूपितवैशिष्ट्यबुद्धिम्प्रति विशिष्टनिरूपितवैशिष्ट्यबुद्धेर्विशिष्टविशिष्टादिनिरूपितवैशिष्ट्यबुद्धिम्प्रति च विशिष्टविशिष्टादिनिरूपितवैशिष्ट्यबुद्धेर्हेतुत्वादन्यथा वह्निव्याप्यवत्पर्व्वतवान् देश इति विशिष्टविशिष्टनिरूपितवैशिष्ट्यप्रत्यक्षे पर्वतविशेष्यकवह्निव्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्य्यताशालिज्ञानत्वरूपस्यानुमितिलक्षणस्य दीधित्युक्तातिव्याप्तेरसङ्गतत्वापत्तेः। कार्य्यतावच्छेदकञ्चास्य स्वरूपतस्तद्धर्म्मविशिष्टतदवच्छिन्नतन्निष्ठप्रकारताकानुभवत्वम्। प्रथमतत्पदं विशेषणतावच्छेदकतावच्छेदकपरं, द्वितीयतत्पदं विशेषणतावच्छेदकपरं, तृतीयतत्पदं विशेषणपरम्। अवच्छिन्नान्तं प्रकारताविशेषणम्। कारणतावच्छेदके विशेषणतावच्छेदकविशेषणयोर्वैशिष्ट्यप्रवेशात्, कार्य्यतावच्छेदकेपि विशिष्टतत्प्रवेशः, अन्यथा व्यभिचारापत्तेः। स्वतन्त्रनैयायिकनये तु कारणतावच्छेदके विशेषणतावच्छेदकविशेषणयोर्वैशिष्ट्याप्रवेशात्कार्य्यतावच्छेदकेपि तयोर्विशिष्यानन्तर्भावः करणीयः। रजतत्वविशिष्टरजतप्रकारकज्ञानं विनापि तादृशसंस्कारात् जायमानरजतवत्त्वानितिविशिष्टविशिष्टनिरूपितवैशिष्ट्यावगाहिस्मरणे व्यभिचारवारणाय बुद्धित्वमपहायानुभवत्वप्रवेशः। वह्निस्वरूपेण वह्न्यन्तरप्रकारकज्ञान-

समवहिताद्वह्नित्वरूपेण महानसीयवह्निमात्रप्रकारकात् स्मरणात्मक-परामर्शादपि वह्नित्वरूपेण निखिलवह्निमद्विधेयकानुमितेर्नैयायिकसम्प्रदायसिद्धतया तद्वारणाय प्रत्यक्षत्वस्य परित्यागः।

अथ स्वतन्त्रन्यायनये विशिष्य विशेषणतावच्छेदकविशेषणयोः कारणत्वकार्यत्वावच्छेदकाघटकतया स्वरूपतस्तद्धर्म्मविशिष्टावच्छिन्नप्रकारताकप्रत्यक्षत्वमेव कार्य्यतावच्छेदकं प्रत्यक्षत्वस्य बुद्धित्वव्याप्यधर्म्मत्वात्। तत्पदं विशेषणतावच्छेदकतावच्छेदकपरम्। अनुमित्युपमित्योरसङ्ग्रहेऽपि क्षतिविरहात्। परामर्शातिदेशवाक्यार्थज्ञानयोः कारणतयैवातिप्रसङ्गविरहात्। न च तथापि शाब्दबोधासंग्रहः, खण्डशो नानापदार्थविषयकसमूहालम्बनस्मरणादप्येकपदार्थविशिष्टापरपदार्थवैशिष्ट्यावगाहिशाब्दबोधानुत्पत्त्या पदजन्यैकपदार्थप्रकारकापरपदार्थविशेष्यकज्ञानस्यैव पृथक्ताद्दृशशाब्दधीहेतुत्वस्यावश्यकतया तदसङ्ग्रहेऽपि क्षतिविरहात्, अत एव "महावाक्यार्थज्ञानं प्रति पदजन्यैकपदार्थप्रकारकापरपदार्थज्ञानरूपावान्तरवाक्यार्थज्ञानकारणतायामतिरिक्तपदजन्यत्वं प्रविष्टम्" इत्यनुमितिलक्षणे भट्टाचार्य्या इति।

मैवम्। अनुमित्यसङ्ग्रहे धूमऽव्यापाकवह्न्यभाववान् ह्रद इत्यादिप्रतियोगिव्यापकतावगाहिपरामर्शजन्या ह्रदे धूमाभाव इत्याद्यप्रसिद्धसाध्यकानुमितिरिव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिविशेषिताभाववैशिष्ट्यबुद्धिः–ह्रदो धूमाभाववानिति बुद्धिः स्यात्। न च तादृशपरामर्शस्य साध्यविशेष्यकानुमितिं प्रत्येव हेतुतया न ततस्तादृशानुमितिसङ्ग्रह इति वाच्यम्। साध्याप्रसिद्धिसत्त्वदशायां धूमाभाव इति साध्यविषयकज्ञानकाले तादृशपरामर्शादेव ह्रदो धूमाभाववानिति, प्रतियोगितावच्छेदकविशिष्टप्रतियोगिविशेषिताभाववैशिष्ट्यावगाह्यनुमितेरप्युत्पादात्। न च यत्र विशेषणतावच्छेदकधर्म्मावच्छिन्नप्रतियोगिताकत्वं विशेषणतावच्छेदकतानियामकः सम्बन्धः, तत्रानुमतिसाधारणानुभवत्वस्यैव कार्य्यतावच्छेदकत्वमस्तु, तदन्यस्थाने प्रत्यक्षत्वमेव व्याप्यधर्म्मत्वात्, विशेषणतावच्छेदकभेदेनेव विशेषणतावच्छेदकनियामकसम्बन्धभेदेनापि कार्य्यकारणभावादिति वाच्यम्। तदन्यस्थाने प्रत्यक्षत्वस्य कार्य्यतावच्छेदकत्वे पर्वतो वह्निमान् धूमादित्यादौ पर्वताभाववद्वह्निरिति बाधज्ञानदशायामज्ञातपर्वतवह्निकस्यापि पर्वतत्वरूपेण वह्न्यनुमित्यापत्तेः, पर्वतवदितरत्वेन बाधज्ञानस्येव पर्वताभाववत्त्वेन बाधज्ञानस्यापि च पर्वतवद्वह्न्यनुमितिहेतुत्वात्, घटो गन्धवत्त्वात् पृथिवीत्वादित्यादौ असुरभिमद्बाधज्ञान-

दशायामज्ञातसुरभिमत्कस्यापि सुरभिमत्त्वरूपेणानुमित्यापत्तेः । यद्धर्म्मावच्छिन्नविशिष्टस्य स्वप्रकारकव्याप्यत्वपरामर्शस्वघटितबाधज्ञानयोरन्यतरं विनानुमितिसम्भवः तद्धर्मविशिष्टविशिष्टवैशिष्ट्यबुद्धेः कार्य्यतायां प्रत्यक्षत्वस्यैवावच्छेदकत्वे इष्टापत्तेरिति । एवं विशिष्टविशिष्टवैशिष्ट्यबुद्धिं प्रति एकैकतत्पदमेकैकविशिष्टपदञ्च वर्जयित्वा कार्य्यकारणभावो निर्वक्तव्यः । नन्वेवंरूपेण विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वे द्रव्यं रजतं चेति समूहालम्बननिर्धर्म्मितावच्छेदककरजतत्वप्रकारकनिश्चयात् तेजो रजतं द्रव्यञ्चेति भिन्नधर्म्मितावच्छेदककरजतत्वप्रकारकनिश्चयाच्च रजतद्रव्यवदिदमिति रजतत्वांशे द्रव्यत्वधर्म्मितावच्छेदककरजतविशिष्टवैशिष्ट्यबोधापत्तिः । इष्टापत्तौ च द्रव्यं रजतं नवेति संशयानन्तरं रजतद्रव्यवदिदमिति रजतत्वांशे द्रव्यत्वधर्म्मितावच्छेदककरजतत्वविशिष्टवैशिष्ट्यबोधापत्तिर्दुर्वारा, संशयस्यापि रजतत्वप्रकारकज्ञानत्वात् । न च तदनन्तरं रजतभेदस्यापि विशिष्टवैशिष्ट्यबोधसम्भवात् न तथा बोध इति वाच्यम् । तथापि रजतत्वांशे संशयाकारस्य तादृशविशिष्टवैशिष्ट्यबोधस्य दुर्वारत्वात् । न चेष्टापत्तिः । विशेषणतावच्छेदकांशे संशयाकारस्य विशेषणतावच्छेदकांशे स्वनिष्ठाप्रामाण्यविषयकस्य तदभावेनाहार्य्यविशिष्टवैशिष्ट्यबोधस्य न्यायमीमांसादिसकलशास्त्रसिद्धान्तासिद्धत्वात् । अत एव "दण्डी रक्तो नवेति संशयानन्तरं रक्तदण्डवानितिज्ञानानुदयादि"ति अनुमितिलक्षणे भट्टाचार्य्याः । दण्डत्वधर्म्मितावच्छेदककरक्तत्वविशिष्टवैशिष्ट्यज्ञानानुदयादिति तदर्थः । स च तत्रैव सुव्यक्तः । अत एव व्याप्त्यंशे निश्चयत्वप्रवेशभीत्या व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शस्यैव नियमतोऽनुमितिहेतुत्वाभ्युपगमः, अन्यथा धूमो वह्निव्याप्यो नवेति संशयोत्तरोत्पन्नात् वह्निव्याप्यत्वतदभाववद्धूमवान् पर्वत इति व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शादनुमितिवारणाय व्याप्त्यंशे निश्चयत्वप्रवेशस्यावश्यकतया तयमाभ्युपगमस्य व्यर्थत्वापत्तेः । न च कारणतावच्छेदके ज्ञानत्वेनेत्यनेन निश्चयत्वप्रवेशान्नायमतिप्रसङ्गः द्रव्यं रजतं नवेति संशयानन्तरमसति निश्चये रजतत्ववदिदमितिनिर्द्धर्म्मितावच्छेदककविशिष्टबोधोऽपि नेष्यत इति वाच्यम् । तथाऽपि द्रव्यं रजतं नवेति द्रव्यं रजतं चेति समूहालम्बननिर्धर्म्मितावच्छेदककनिश्चयानन्तरं तेजो रजतं द्रव्यं चेति विभिन्नधर्म्मितावच्छेदककनिश्चयानन्तरं वा द्रव्यं रजतं नवेति संशयेऽपि रजतद्रव्यवदिदमिति विशिष्टवैशिष्ट्यबोधापत्तेर्दुर्वारत्वात् । न च विशिष्टनिरूपितवैशिष्ट्यविषयकत्वस्य विशेषणतावच्छेदकांशे निश्चयत्वव्याप्यता यन्मते पठ्यते

सधर्म्मितावच्छेदककतद्विषयकप्रत्यक्षनिश्चयं प्रति लौकिकसंशयसाधारणसमानधर्म्मितावच्छेदककतदभावज्ञानत्वेन च प्रतिबन्धकत्वम्, तन्मते प्रतिबन्धकसत्त्वादेव द्रव्यं रजतं नवेति संशयानन्तरमपि रजतद्रव्यवदिदमिति न विशिष्टवैशिष्ट्यबोधः, रजतवदिदमिति निर्धर्म्मितावच्छेदककविशिष्टवैशिष्ट्यबोधोत्पत्त्या च द्रव्यं रजतं नवेति संशयानन्तरमपि रजतवदिदमितिविशिष्टवैशिष्ट्यबोधः सर्वसिद्ध एवेति वाच्यम्। तन्मतेऽप्यभावांशे निश्चिताप्रामाण्यकाद्द्रव्यं रजतं नवेति संशयाद्रजतद्रव्यवदिदमिति रजतत्वविशिष्टवैशिष्ट्यबोधस्य दुर्वारत्वात् निश्चिताप्रामाण्यकतदभावज्ञानस्यैव प्रतिबन्धकत्वात्, द्रव्यं रजतं नवेति अलौकिकरजतत्वसंशयाद्रजतवदिदमितिरजतत्वांशे लौकिकस्य रजतत्वविशिष्टवैशिष्ट्यबोधस्य दुर्वारत्वाच्च लौकिकं प्रत्यलौकिकज्ञानस्याप्रतिबन्धकत्वात्, द्रव्यं रजतं नवेत्यादि एकेन्द्रियजन्यलौकिकसंशयाद्रजतद्रव्यवदिदमितिचाक्षुषादिलौकिकरजतत्वविशिष्टवैशिष्ट्यबोधस्य दुर्वारत्वाच्च लौकिकप्रत्यक्षं प्रति भिन्नेन्द्रियजन्याभावाज्ञानस्याप्रतिबन्धकत्वात्, द्रव्यं रजतं नवेति समानेन्द्रियजलौकिकरजतत्वसंशयादपि रजतद्रव्यवदिदमिति आहार्य्यस्येच्छाप्रयोज्यत्वात् लौकिकरजतत्वविशिष्टवैशिष्ट्यबोधस्य दुर्वारत्वात्। न च आहार्य्यानाहार्य्यलौकिकालौकिकसाधारणसमानधर्मितावच्छेदककरजतत्वादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षसामान्यं प्रत्येवाप्रामाण्यज्ञानास्कन्दितानास्कन्दितलौकिकालौकिकसंशयनिश्चयसाधारण्येन समानधर्म्मितावच्छेदककतदभावज्ञानत्वेनातिरिक्तप्रतिबन्धकत्वाभ्युपगमाद् द्रव्यं रजतं नवेति संशयानन्तरं न रजतद्रव्यवदिदमिति रजतत्वांशे द्रव्यत्वधर्म्मितावच्छेदककविशिष्टवैशिष्ट्यबोधः, एकैकविशेषणतावच्छेदकस्थल एव धर्म्मितावच्छेदकभेदेनानन्तविधप्रतिबध्यप्रतिबन्धकभावस्यानया रीत्याऽभ्युपगमात्।

अथैवं द्रव्यं न रजतमिति गृहीतप्रामाण्यकनिश्चयानन्तरं द्रव्यं रजतमिति चाक्षुषादिलौकिकनिश्चयेपि रजतद्रव्यवदिदमिति चाक्षुषादिरूपं लौकिकविशिष्टवैशिष्ट्यप्रत्यक्षमिति चेन्न। तत्र विपरीतज्ञाननाशानन्तरं चतुर्थक्षण एव विशिष्टवैशिष्ट्यप्रत्यक्षाभ्युपगमात् क्षणैकापलापस्यादोषत्वादित्याहुः। तदसत्। अपेक्षाबुद्ध्यात्मकविपरीतज्ञानस्थले क्षणद्वयापलापापत्तेः, समानधर्म्मितावच्छेदककतदभावज्ञानाभावस्य कारणत्वे गौरवात्। किञ्चैवं यत्रादौ द्रव्यं रजतमित्यलौकिकं ज्ञानं ततः स्वनिष्ठाप्रामाण्यविषयकं द्रव्यं न रजतमिति लौकिकप्रत्यक्षं तत्र, यत्र वाऽऽदौ स्वनिष्ठाप्रामाण्यविषयकं द्रव्यं रजतमिति लौकिकं प्रत्यक्षं

ततो द्रव्यं रजतमित्यलौकिकज्ञानं तत्र च तदनन्तरं रजतद्रव्यवदिदमिति विशिष्टधीर्न स्यात्, न स्याच्च द्रव्यत्वं धर्म्मितावच्छेदकीकृत्य तत्समानाधिकरण्येन रजतत्वतदभावयोः समुच्चयाद्द्रव्यत्वसामाधिकरण्येन रजतद्रव्यवदिदमिति विशिष्टवैशिष्ट्यधीः । यदि च विशेष्यतावच्छेदकसामानाधिकरण्येन विशेषणतावच्छेदकविशिष्टवैशिष्ट्यधियम्प्रति तदवच्छेदेनतदभावज्ञानं प्रतिबन्धकं, तदवच्छेदेनोक्तधियं प्रति तु विशेषणतावच्छेदकाभावज्ञानमेव विरोधीति प्रतिबध्यप्रतिबन्धकभावभेदोऽभ्युपेयते, तदा द्रव्यत्वसामानाधिकरण्येन रजतत्वाभावविषयकात् द्रव्यं रजतं नवेति संशयानन्तरमपि द्रव्यत्वसामानाधिकरण्येन रजतत्वविषयकसंशयात् ततो रजतद्रव्यवदिदमितिविशिष्टधियो दुर्वारत्वादिति ।

मैवम् । विशिष्टनिरूपितवैशिष्ट्यबुद्धिर्द्विविधा विशेषणतावच्छेदकांशे निर्द्धर्म्मितावच्छेदिका, तदंशे सधर्म्मितावच्छेदिका च । तत्राद्यं प्रति संशयनिश्चयसाधारणं विशेषणतावच्छेदकप्रकारज्ञानमेव हेतुः रजतमिति निर्द्धर्मितावच्छेदककनिश्चयादिव द्रव्यं रजतं नवेति संशयानन्तरमपि रजतवदिदमिति रजतत्वांशे निर्द्धर्म्मितावच्छेदककविशिष्टवैशिष्ट्यबोधस्य सकलसम्प्रदायसिद्धत्वात् । कार्य्यतावच्छेदके कारणतावच्छेदके वा न तस्य निर्द्धर्म्मितावच्छेदकत्वान्तर्भावः, किन्तु निर्द्धर्म्मितावच्छेदकसधर्म्मितावच्छेदकसाधारणपूर्वोक्तधर्म्माभ्यामेव कार्य्यकारणभावः । द्वितीयं प्रति तु पूर्वोक्तरीत्या समानधर्म्मितावच्छेदकविशेषणतावच्छेदकप्रकारकनिश्चयत्वेनैव हेतुता, एकैकविशेषणतावच्छेदकस्थले एव धर्म्मितावच्छेदकभेदेनानन्तकार्य्यकारणभावस्यानायत्या ऽभ्युपगमात् । निश्चयत्वघटकदलद्वयञ्चैकत्र द्वयमिति न्यायेनावच्छेदकमतो विशेषणविशेष्यभावे विनिगमकाभावान्न गुरुतरकार्य्यकारणभावद्वयम् । एतेन विशिष्टविशिष्टादिनिरूपितवैशिष्ट्यबुद्धिरपि व्याख्याता । नचैवमेवास्तां किं कार्य्यकारणभावद्वयेन रजतमित्यादिनिर्द्धर्म्मितावच्छेदकज्ञानानन्तरं द्रव्यं रजतं नवेत्यादिसंशयानन्तरं जायमाने रजतवदिदमित्यादिनिर्द्धर्म्मितावच्छेदकज्ञाने विशिष्टनिरूपितवैशिष्ट्यविषयतानभ्युपगमेऽपि क्षतिविरहादिति वाच्यम् । तत्रापि विशिष्टनिरूपितवैशिष्ट्यविषयित्वस्यानुभवसिद्धत्वात् अन्यथाऽनन्तकार्य्यकारणभावापत्त्या सर्वत्रैव तादृशविषयिताविशेषापलापस्यायुक्तत्वात । न चास्तु तत्रापि तादृशविषयिता तथापि सामान्यतो विशेषणतावच्छेदकप्रकारकज्ञानस्य तत्र हेतुत्वे मानाभावः, विशिष्टानुभवसामान्यकारणाद्विशेषणज्ञानादेव तदुत्पत्तेरिति वाच्यम् । तथासति रजतरजतत्वनिर्विकल्पकधर्म्मीन्द्रियसन्निकर्षानन्तरं

विशेष्ये विशेषणमिति न्यायेन जायमाने रजतवदिदमितिज्ञाने, दण्डपुरुषावित्यादिसमूहालम्बनधर्म्मीन्द्रियसन्निकर्षानन्तरमुक्तन्यायेन जायमाने दण्डपुरुषवानितिज्ञाने च तादृशविषयित्वापत्तेः, तदभावत्वप्रकारकतद्धर्म्मावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षत्वरूपगुरुतरधर्म्मावच्छिन्नं प्रति तत्तत्प्रतियोगितावच्छेदकज्ञानस्य कारणत्वकल्पनापत्तेश्च, अन्यथा निर्विकल्पकादपि विशिष्टे वैशिष्ट्यमितिन्यायेन घटो नास्तीति प्रत्यक्षापत्तेः। न च तवापि निर्विकल्पकात् केवलविशेष्ये विशेषणमिति न्यायेन घटो नास्तीति लौकिकप्रत्यक्षापत्तिर्दुर्वारेति वाच्यम्। अभावप्रत्ययो हि प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यमर्यादां नातिशेते इति नियमादभावलौकिकप्रत्यक्षसामग्रीविरहादेव निर्विकल्पकस्मरणानन्तरं प्रत्यक्षानुत्पादात् विशिष्टनिरूपितवैशिष्ट्यबुद्धिसामान्यकारणस्य विशेषणतावच्छेदकप्रकारकज्ञानस्यैव प्रतियोगितावच्छेदकप्रकारकज्ञानस्यापि अभावलौकिकप्रत्यक्षसामग्र्यन्तर्गतत्वात्।

केचित्तु विशेषणतावच्छेदकांशे निर्द्धर्मितावच्छेदककविशिष्टवैशिष्ट्यबोधं प्रत्यपि विशेषणतावच्छेदकप्रकारकनिश्चय एव हेतुः, परन्तु तत्र कार्य्यकारणभावे धर्म्मितावच्छेदकस्यानन्तर्भावः निर्द्धर्म्मितावच्छेदकनिश्चयस्यापि हेतुत्वात्। द्रव्यं रजतं न वेत्यादिसंशयानन्तरमसति निश्चये रजतवदिदमित्यादिनिर्द्धर्म्मितावच्छेदककविशिष्टवैशिष्ट्यबोधोऽपि नेष्यते, अन्यथा धूमो वह्निव्याप्यो नवेति संशयानन्तरं व्याप्त्यंशे निर्द्धर्म्मितावच्छेदककव्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शापत्त्याऽनुमित्युत्पादापत्तेरित्याहुः।

ननु विशेषणतावच्छेदकांशे निर्धर्म्मितावच्छेदककविशिष्टवैशिष्ट्यबोधम्प्रति निश्चयात्मन एव समानधर्म्मितावच्छेदककविशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वेऽपि विशेषणतावच्छेदकांशे संशयात्मको विशिष्टवैशिष्ट्यबोधो दुर्वारः। यत्रादौ स्वनिष्ठाप्रामाण्यविषयको द्रव्यं रजतमितिनिश्चयो रजतत्वाभावोपस्थितिश्च, तत्र तदनन्तरं रजतत्वांशे संशयात्मकस्य रजतत्वतदभाववद्द्रव्यवदिदमिति रजतत्वविशिष्टवैशिष्ट्यबोधस्यापत्तौ बाधकाभावात्। न चागृहीतप्रामाण्यकविशेषणतावच्छेदकप्रकारकनिश्चयस्यैव हेतुत्वाभ्युपगमात् न तत्र रजतत्वविशिष्टवैशिष्ट्यबोधसम्भव इति वाच्यम्। तथासति परामर्शनिष्ठाप्रामाण्यग्रहाभाववत् तन्निष्ठाप्रामाण्यग्रहाभावानामपि पृथगेव हेतुतयाऽनन्तकार्य्यकारणभावप्रसङ्गात्। गृहीताप्रामाण्यकविशेषणतावच्छेदकप्रकारकज्ञानानन्तरमपि विशिष्टवैशिष्ट्यबोधस्याभ्युपगमात्। न चोक्तस्थले रजतत्वतदभा-

वयोरेकस्यैव निश्चयात्मकविशिष्टबोधस्योत्पत्त्या तस्यैव कार्य्यसहव- र्त्तित्वेन प्रतिबन्धकतया न संशयसम्भवः, विशेषणतावच्छेदकांशे संशयाकारविशिष्टवैशिष्ट्यबोधाभ्युपगमेऽपसिद्धान्तापत्त्या तथैव कल्प- नादिति वाच्यम्। तथापि यत्रादौ द्रव्यविशेष्यकं रजतत्वप्रकारकं ज्ञानं रजतत्वाभावप्रकारकञ्च ज्ञानमप्रमेति सामान्यतोऽप्रामाण्यविष- यको द्रव्यं रजतमितिनिश्चयस्तत्र तदनन्तरं रजतत्वांशे संशयाकारस्य र- जतत्वतदभाववद्द्रव्यवदिदमिति विशिष्टवैशिष्ट्यबोधस्य दुर्वारत्वात्, तत्रैकैककोटिनिश्चयोत्पत्त्यभ्युपगमेऽपि तस्याप्रामाण्यज्ञानासमवहिततया प्रतिबन्धकत्वासम्भवादिति चेत्।

सत्यम्, परन्तु तत्रैवोपनयलक्षणसन्निकर्षसत्त्वे फलीभूतसंशयस्य सामान्यतोऽप्रामाण्यविषयकत्वे बाधकाभावात्, विशेषणतावच्छेदकां- शे स्वनिष्ठाप्रामाण्याविषयकस्यैव विशेष्यतावच्छेदकांशे संशयाभाव- विशिष्टवैशिष्ट्यबोधस्य सिद्धान्तासिद्धत्वात्। न च तथापि यत्र विशे- ष्यतावच्छेदकद्रव्यत्वसामानाधिकरण्येन द्रव्यं रजतमिति निश्चयो रजतत्वाभावोपस्थितिश्च तत्र तदनन्तरं विशेष्यतावच्छेदकद्रव्य- त्वावच्छेदतत्सामानाधिकरण्याभ्यां रजतत्वतदभावकोटिकरजतत्व- तदभाववद्द्रव्यवदिदमिति संशयात्मकविशिष्टवैशिष्ट्यबोधो दुर्वारः, वि- शेष्यतावच्छेदकसामानाधिकरण्येन रजतवत्तानिश्चयात् तदवच्छेदेन रजतत्वविशिष्टवैशिष्ट्यबोधासम्भवात्। अत्र रजततदभावयोरेकस्यैव निश्चयात्मकविशिष्टबोधोत्पत्त्या विशेष्यतावच्छेदकसामानाधिकरण्येनो- भयोरेव समुच्चयात्मकनिश्चयोत्पत्त्या वा तस्यैव कार्य्यसहवर्त्तितया प्रति- बन्धकत्वेन संशयासम्भवाच्च विशेषणतावच्छेदकांशे संशयाकारविशि- ष्टवैशिष्ट्यबोधाभ्युपगमेऽपसिद्धान्तापत्त्या तथैव कल्पनात्। न च तथापि विशेषणतावच्छेदकप्रकारकनिश्चयसत्त्वे विशेषणतावच्छेदका- भावांशे आहार्य्यलौकिकात्मको विशेषणतावच्छेदकांशे च लौकिकसंशया- कारो विशिष्टवैशिष्ट्यबोधो दुर्वार इति वाच्यम्। विशेषणतावच्छेदकांशे तादृशसंशयात्मकस्य विशिष्टवैशिष्ट्यबोधस्याभ्युपगमात् विशेषणताव- च्छेदकांशेऽनाहार्य्यस्यैव विशिष्टवैशिष्ट्यबोधस्य सिद्धान्तसिद्धत्वात्। न चैवं व्याप्त्यंशे निश्चयत्वप्रवेशभीत्या व्याप्तिविशिष्टवैशिष्ट्यावगाहि- परामर्शत्वेन हेतुत्वाभ्युपगमेपि वह्निव्याप्यो धूम इति निश्चयोत्तरोत्पन्नस्य व्याप्त्यभावांशे आहार्यात्मकवह्निव्याप्यत्वतदभाववद्धूमवान् पर्वत इति परामर्शस्य व्याप्त्यंशे संशयात्मकस्यानुमितिजनकत्वापत्तिर्दुर्वारेति वाच्यम्। वह्निव्याप्यत्वतदभाववद्धूमवान् पर्वत इति व्याप्त्यंशे समु-

च्छयाकारपरामर्शस्यैव तस्यानुमितिजनकताया इष्टत्वादिति समासः।

एतेन विशिष्टे वैशिष्ट्यमिति न्यायेन विशिष्टवैशिष्ट्यबुद्धौ विशेष्यतावच्छेदकप्रकारकविशिष्टज्ञानस्य हेतुहेतुमद्भावो व्याख्यातः।

इयांस्तु विशेषो यद्विशेषणतावच्छेदकादिप्रकारकज्ञानस्य कार्य्यतावच्छेदके तद्धर्म्मावच्छिन्नप्रकारकत्वं घटकम्। अत्र तद्धर्म्मावच्छिन्नविशेष्यताकत्वं, कार्य्यतावच्छेदकमत्र प्रत्यक्षत्वमेव व्याप्यधर्म्मत्वात् अनुमित्युपमितिशाब्दबोधानामसंग्रहस्येष्टत्वात्परामर्शशाब्दज्ञानयोर्विशेष्यतानवच्छेदकस्य धर्म्मस्यानुमित्युपमित्युद्देश्यतावच्छेदकत्वात्। अत एव ह्रदे धूमाभाव इत्याद्यप्रसिद्धसाध्यकानुमितेः साध्यतावच्छेदकविशिष्टसाध्यविशेष्यतापि नानुपपन्ना। नचैवं पक्षतावच्छेदकरूपेणैकपरामर्शादितोपि पक्षतावच्छेदकरूपेणान्यपक्षकानुमित्यापत्तिरिति वाच्यम्। परामर्शाद्यविषयीभूतपक्षकस्यानुमित्यादिविषयत्वानङ्गीकर्तृनये पक्षतावच्छेदकरूपेण स्वतन्त्रोपस्थितस्य परामर्शाद्यविषयीभूतस्य पक्षस्यानुमित्यादौ भानवारणाय परामर्शादेस्तत्तत्पक्षान्तर्भावेण कारणत्वस्यावश्यकतया तत्र तद्वारणात्। तदन्यतमे चेष्टापादनात्।

केचित्तु विशेषणतावच्छेदकविशेष्यतावच्छेदकादिप्रकारकज्ञानयोः न पृथक् पृथक् कार्य्यकारणभावः करणतावच्छेदकभेदाभावस्य सर्वसिद्धत्वात्। विशेष्यतात्वप्रकारतात्वमपहाय सामान्यतस्तद्धर्म्मावच्छिन्नसांसर्गिकविषयतानिरूपितविषयताकत्वस्य कार्य्यतावच्छेदकघटकत्वाभ्युपगमे कार्य्यतावच्छेदकस्यापि सम्भवात् अवच्छिन्नान्तं द्वितीयविषयताविशेषणम्। आदिना विशिष्टविशिष्टादिनिरूपितवैशिष्ट्यबोधस्थले तद्धर्म्मविशिष्टादिपरिग्रहः। सांसर्गिकविषयतावारणाय निरूपितान्तं विषयताविशेषणम्, तथाचानुभवत्वमेवोभयोः कार्य्यतावच्छेदकघटकम्। न चैवं ह्रदे धूमाभाव इत्याद्यप्रसिद्धसाध्यकानुमितिः कथं स्यादिति वाच्यम्। तत्र प्रतियोगिपक्षयोरेकत्र द्वयमिति न्यायेनाभावत्वविशिष्टेपिप्रकारत्वाभ्युपगमात्।

ननु तथापि विशेष्यतावच्छेदकप्रकारकज्ञानस्यापि सामान्यतोऽनुभवत्वस्यैव कार्य्यतावच्छेदकत्वे पक्षतावच्छेदकतानियामकसम्बन्धेन साध्यवदन्यावृत्तित्वरूपसाध्यव्याप्यत्वविशिष्टपक्षतावच्छेदकप्रकारिकानुमितिः पक्षतावच्छेदकावच्छेदेनानुमितिः तज्जनकीभूतः पक्षतावच्छेदकावच्छेदेन परामर्शः साध्यव्याप्यहेतुमदन्यावृत्तित्वहेतुव्याप्यत्वविशिष्टपक्षतावच्छेदकतानियामकसम्बन्धेन पक्षतावच्छेदकप्रकारकपरामर्शः केवलान्वयिसाध्यकपक्षतावच्छेदकावच्छेदेनानुमितिश्च खण्डशः प्रसिद्धा

नियमतो भ्रमरूपैवेति पारिभाषिकमते तादृशसाध्यव्याप्यत्वविशिष्टसमवायसम्बन्धेन पर्वतत्वादिप्रकारकज्ञानं विनापि तादृशहेतुव्याप्यत्वविशिष्टसमवायादिसम्बन्धेन पर्वतत्वादिप्रकारकात् परामर्शात् पर्वतत्वाद्यवच्छेदेनानुमितिः कथं स्यात्। न च यत्र तादृशसाध्यव्याप्यत्वविशिष्टसम्बन्धो विशेष्यतावच्छेदकतानियामकस्तत्र कार्य्यतावच्छेदके प्रत्यक्षत्वमेव घटकं न त्वनुभवत्वं विशेषणत्वविशेष्यत्वावच्छेदकतानियामकसम्बन्धभेदेन कार्य्यकारणभावभेदादिति वाच्यम्। तथासति पर्वतवान् धूमादित्यादौ वह्निमदन्यावृत्तित्वरूपवह्निव्याप्यत्वविशिष्टसमवायसम्बन्धेन पर्वतत्वप्रकारकपर्वतज्ञानं विनापि तेन सम्बन्धेन पर्वतत्ववतो बाधज्ञानसहकारात् तादृशवह्निव्याप्यत्वविशिष्टसमवायसम्बन्धेन पर्वतत्ववतोऽपि अनुमित्यापत्तेरिति चेन्न।

तादृशपरिभाषालघुत्वेऽपि स्वत एव इष्टत्वात् तादृशपरिभाषावादिना बाधादिसहकारात् व्यापकतावच्छेदकधर्म्मसम्बन्धाभ्यामनुमित्यभ्युपगमे त्वेकसम्बन्धेन व्यापकतावच्छेदकवतो बाधादिज्ञानादपरसम्बन्धेन व्यापकतावच्छेदकस्यानुमितौ विधेयतावच्छेदकतया भानानभ्युपगमाच्च क्वापि प्रामाणिकग्रन्थे तथालिखनविरहात्। अत एव बाधादिसहकारात् पक्षतावच्छेदकधर्म्मप्रकारेण कदाचिदनुमित्युपगमेऽपि एकसम्बन्धेन पक्षतावच्छेदकवति बाधादिज्ञानादपरसम्बन्धेन पक्षतावच्छेदकस्यानुमितौ पक्षे प्रकारतया भानमपि तैर्नाभ्युपेयते, तथाच साध्यव्याप्यत्वविशिष्टस्य विशेषणतावच्छेदकतादिनियामकसम्बन्धत्वे प्रत्यक्षत्वमेव तन्नये कार्य्यतावच्छेदकघटकमतो न काप्यनुपपत्तिरिति प्राहुः॥

॥ इति विशिष्टवैशिष्ट्यवादवीचिः(४) समाप्तः॥

## अथ (५) विशिष्टवैशिष्ट्यबोधवादवीचिः।

### गदाधरभट्टाचार्यविरचितः।

तद्धर्म्मनिर्विकल्पकानन्तरन्तद्विशिष्टवैशिष्ट्यबोधानुदयात्तत्र तद्धर्मप्रकारकं ज्ञानं कारणम्। विशिष्टवैशिष्ट्यबोधश्च द्विविधः–विशिष्टप्रतियोगिको वैशिष्ट्यबोधो विशिष्टानुयोगिको वैशिष्ट्यबोधश्च। यथा कारणतावच्छेदकत्वमेव कारणादौ विशेषणत्वं यथा वा शक्त्यवच्छेदकत्वमेव शक्ये विशेषणत्वं तथा प्रतियोगित्वानुयोगित्वयोरवच्छेदकत्वमेव प्रतियोग्यनुयोगिनोर्विशेषणत्वमिति तदवच्छिन्नप्रतियोगिताकत्वमेव तद्वि-

शिष्टप्रतियोगिकत्वम् , तदवच्छिन्नानुयोगिताकत्वमेव च तद्विशिष्टानुयोगिकत्वम् , न तु विशेषणविशेष्योभयपर्याप्तप्रतियोगिताकत्वं तद्विशिष्टप्रतियोगिताकत्वम् तादृशोभयपर्याप्तानुयोगिताकत्वं तद्विशिष्टानुयोगिताकत्वम्, भूतलाद्यनुयोगिकदण्डादिविशिष्टपुरुषादिवैशिष्ट्यप्रतियोगितायाः दण्डादिविशिष्टपुरुषादिनिष्ठकुण्डलादिवैशिष्ट्यानुयोगितायाश्च दण्डाद्यवृत्तितया दण्डाद्यन्तर्भावेण तत्पर्याप्त्यसम्भवात् , तयोर्दण्डादिनिष्ठत्वे भूतल रुषादौ पुरुषकुण्डलादेरिव भूतलदण्डादौ दण्डकुण्डलादेर्विशिष्टधीप्रमात्वप्रसङ्गात , तत्र तदभावात्तत्रप्रसङ्गाच्च । वैशिष्ट्यप्रतियोगित्वानुयोगित्वयोरवच्छेदकत्वे तद्वैशिष्ट्यसमयावच्छेदेन तद्वृत्तित्वं तन्त्रं विभिन्नकालावच्छिन्नवृत्तिकयोरवच्छेद्यावच्छेदकभावविरहात् , तद्वैशिष्ट्यप्रतियोगित्वानुयोगित्वयोश्च वैशिष्ट्यस्वरूपानतिरिक्ततया तद्वैशिष्ट्यावच्छेदककालावच्छेदेनावर्त्तमानयोः तत्प्रतियोगित्वानुयोगित्वयोः समानकालावच्छिन्नत्वासम्भवेन तदवच्छेदकत्वासम्भवात् । अतो यदा भूतले पुरुषवैशिष्ट्यन्तदन्यकाल एव च पुरुषे दण्डवैशिष्ट्यन्तदा न भूतले दण्डविशिष्टपुरुषवैशिष्ट्यमपि तु दण्डोपलक्षिततद्वैशिष्ट्यमेव । एवं यत्र विभिन्नसमयावच्छेदेनैव पुरुषे दण्डकुण्डलयोर्वैशिष्ट्यं तत्र न एकविशिष्टानुयोगिकमपरवैशिष्ट्यमपि त्वेकोपलक्षितानुयोगिकमेव । अत एव च एततावच्छेदकविशिष्टे साध्यवैशिष्ट्यं गन्धप्रागभावकालीनघटो गन्धवान् पृथिवीत्वादित्यत्रानुमितिर्नावगाहते, अपि तु सामानाधिकरण्यमात्रं साध्यस्येत्युपाध्यायाः(१) । एवं तद्धर्मसामानाधिकरण्यस्य सामानाधिकरण्यसम्बन्धेन तद्धर्मस्य वा वैशिष्ट्यप्रतियोगितावच्छेदकत्वे वशिष्ट्यानुयोगिनस्तादृशसामानाधिकरण्यनिरूपकाधिकरणत्वं तन्त्रम् , अतो गुणान्यत्वसामानाधिकरण्येन सामानाधिकरण्यसम्बन्धेन गुणान्यत्वेन वा विशिष्टस्य सत्त्वादेर्गुणादौ न वैशिष्ट्यम् । नचैवं भूतलादिदेशस्य पटादिसमयवृत्तित्वविशेषविशिष्टघटाद्यधिकरणत्वानुपपत्तिरेवेति वाच्यम् । तत्सम्बन्धघटितसामानाधिकरण्यादेस्तत्सम्बन्धप्रतियोगितावच्छेदकत्वे (तत्सम्बन्धप्रतियोगितावच्छेदकप्रतियोगिकत्वे )(२)एव वा उक्तस्य नियामकत्वात्, कालिकसम्बन्धेन महाकालान्यवृत्तित्वविशिष्टघटादेस्तेन सम्बन्धेन वैशिष्ट्यं महाकाले नोपेयत एव । एवं च महाकालो घटवान्काल-

---

(१) वैशिष्ट्यस्य गन्धप्रागभाववान् घटो न गन्धवान् पृथ्वीत्वादित्यनुमिताववगाहने सल्लिङ्गपरामर्शादिविभ्रमः स्यादिति तदसहमानास्तादृशानुमितेर्विशिष्टवैशिष्ट्यावगाहित्वं नानुमन्यन्ते यज्ञपत्युपाध्यायाः इति मि० पु० पाठः ।

(२) ( ) चिह्नान्तर्गतपाठो सि० पु० नास्ति ।

परिमाणादित्यादौ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणाभावाप्रसिद्धिशङ्का दीधितिकृतां कथंचिदुपपादनीया । इत्थञ्च वैशिष्ट्यप्रतियोगिताऽनुयोगितावच्छेदकप्रकारकज्ञानयोर्विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वपर्यवसानात् विशेषणतावच्छेदकविशेष्यतावच्छेदकप्रकारकज्ञानन्तद्धेतुरिति प्रवादः, वैशिष्ट्यप्रतियोगित्वादेरेव विशेषणत्वादिपदार्थत्वात् । वैशिष्ट्यांशे विशिष्टनिरूपितत्वविशिष्टानुयोगिकत्वावगाहिबुद्धावेव विशेषणतानुयोगितावच्छेदकप्रकारकज्ञानं हेतुः न तु वास्तवविशिष्टनिरूपितविशिष्टानुयोगिकवैशिष्ट्यबुद्धौ, तेन दण्डादिप्रतियोगिकस्य तदनुयोगिकस्य च संयोगसमवायादिरूपवैशिष्ट्यस्य निखिलस्यैव दण्डत्वादिविशिष्टनिरूपितत्वेऽपि दण्डत्वादिनिर्विकल्पकानन्तरं विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमितिरीत्या एकत्र द्वयमितिरीत्या च दण्डी पुरुषः दण्डो रूपवानित्यादिप्रत्ययस्य नानुपपत्तिः, न वा पीतः शङ्खो नास्तीत्यादिबुद्धेः शङ्खत्वाद्यवच्छिन्नप्रतियोगितांशे पीतत्वाद्यवच्छिन्नत्वभ्रमात्मिकाया वास्तवपीतत्वादिविशिष्टनिरूपितवैशिष्ट्यानवगाहित्वेऽपि पीतत्वादिनिर्विकल्पकानन्तरमापत्तिः ।

अथ सोन्दडोपाध्यायमते शशीयतया शृङ्गं नास्ति समवायितया वाच्यत्वं नास्तीत्याद्याकारिकायाः व्यधिकरणधर्मावच्छिन्नाभावबुद्धेः शशीयत्वसमवायित्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपतद्धर्मविशिष्टनिरूपितत्वावगाहितया तत्तद्धर्मप्रकारेण शृङ्गवाच्यत्वादिरूपविशेषणज्ञानं विना तादृशबुद्ध्यनुदयप्रसङ्गः । न च शृङ्गं शशीयं वाच्यत्वं समवायीति भ्रमानन्तरमेव तादृशबुद्ध्युपगमान्न दोष इति वाच्यम् । शृङ्गं न शशीयं वाच्यत्वं न समवायीति विशेषदर्शनदशायामपि तादृशप्रतीत्योरानुभविकत्वात्तदपलापे सर्वत्रैव तदपलापसम्भवात् सोन्दडोपाध्यायमतस्यात्यन्तनिर्युक्तिकत्वापत्तेः । तादृशविशेषदर्शनकालीनतद्बुद्धेः शृङ्गवाच्यत्वादौ शशीयत्वसमवायित्वाद्यभावावगाहितास्वीकारे सर्वत्रैव तत्सम्भवेन तद्दोषतादवस्थ्यादिति चेत् ।

सत्यम् । उक्त एव दोषस्तन्मतपरित्यागे बीजम् । दीधितिकृतापि तद्विशिष्टज्ञानस्याभावधीहेतुत्वादिति मूलं विशेषणतावच्छेदकप्रकारकविशेषणज्ञानरूपकारणबाधप्रदर्शनपरतयैव व्याख्यातम् । अस्य च दोषस्य नावकाशः विशेषदर्शनदशायामाहार्यविशेषणतावच्छेदप्रकारकविशेषणज्ञानस्य सम्भवात् तद्बलादेव व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रतीतिः सम्भवतीति । । न चानाहार्यमेव विशेषणतावच्छेदकप्रकारकज्ञानं विशिष्टप्रत्ययहेतुर्गौरवात् । अत एव शङ्खो न पीत इत्यादिविशषदर्शनवतापि

प्रतारकेण पीतः शङ्खोऽत्र नास्ति किन्तु द्वीपान्तरे इत्यादिवाक्यं प्रयुज्यते, नहि वाक्यार्थमजानानस्य वाक्यरचना सम्भवति, येन पीतः शङ्खो नास्तीत्याद्याकारकविशिष्टवैशिष्ट्यबोधमन्तरेणापि विशेषदर्शनवता तादृशं वाक्यं प्रयोक्तव्यम्। यदि चानाहार्य एव विशेषणतावच्छेदकप्रकारकबोधो विशिष्टवैशिष्ट्यप्रत्ययहेतुः, अन्यथा दण्डो रक्त इत्याद्याकाराहार्यनिश्चयानन्तरं रक्तारक्तदण्डो नास्तीत्याद्याकारस्य विशेषणतावच्छेदकांशे संशयात्मकस्यापि विशिष्टवैशिष्ट्यबोधस्यापत्तेः, विशिष्टवाक्यार्थबोधमन्तरेणापि तत्प्रकारकतद्विशेष्यकज्ञानत्वादिना वाक्यार्थज्ञानेन परकीयतादृशज्ञानेच्छया वाक्यप्रयोगः सम्भवतीति न प्रतारकस्य पीतः शङ्खो नास्तीत्यादिप्रतीतेरावश्यकतेति मन्यते, तदापि न क्षतिः वैशिष्ट्यप्रतियोगितांशे विशेषणतावच्छेदकविशेषितमवच्छिन्नत्वं यत्र संसर्गघटकतया भासते तत्रैव विशेषणतावच्छेदकप्रकारकज्ञानस्यापेक्षिततया स्वावच्छिन्नप्रतियोगिताकानुयोगित्वसम्बन्धेनाभावांशे शशीयत्वादिप्रकारकस्य शशीयतया शृङ्गं नास्तीत्याकारकव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रत्ययस्योक्तविशेषदर्शनदशायां निष्प्रत्यूहत्वात्। दण्डी चैत्रः घटो नास्तीत्याद्याकारकविशिष्टवैशिष्ट्यबोधे तु दण्डत्वघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वविशिष्ट एव संयोगानुयोगित्वादिः संबन्ध इति तत्र दण्डत्वघटत्वादिज्ञानापेक्षा। यदि च तत्रापि शुद्ध एव संयोगानुयोगित्वप्रतियोगित्वादिश्चैत्राभावादौ दण्डघटादेस्संसर्गः, दण्डत्वघटत्वादेस्तु स्वावच्छिन्नप्रतियोगिताकसंयोगतथाविधानुयोगित्वादिकं तथा, तदा स्वावच्छिन्नप्रतियोगिताकत्वविशिष्टसंसर्गावच्छिन्ना या विशेषणपारतन्त्र्येण विशेष्यनिरूपिततद्धर्मप्रकारता तच्छालिबुद्धावेव विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणता कल्पनीया। शशीयतया शृङ्गं नास्तीत्यादौ चाभावांशे तादृशसम्बन्धेन शशीयत्वादेः स्वातन्त्र्येणैव प्रकारता न तु विशेषणीभूतशृङ्गादिपारतन्त्र्येण तस्य शृङ्गादावविशेषणत्वात्, तन्निरूपितप्रकारतावच्छिन्नप्रकारताया एव तत्पारतन्त्र्येण प्रकारतापदार्थत्वादित्युद्धारप्रकारमाकलय्याभावप्रत्यये प्रतियोगिविशेषणतापन्नस्यैव धर्मस्य प्रतियोगितावच्छेदकतया भानमनुभवसिद्धमित्युक्तया प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इत्यनेन प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वन्निराकृतम्।

अथैवमपि व्यधिकरणधर्मावच्छिन्नस्यैव प्रतियोगिनो व्यधिकरणधर्मावच्छिन्नाभावप्रतीत्या विषयीकरणे उक्तकारणबाधरूपबाधकस्य(१) जा-

(१) उक्तकारणबाधस्येति मि० पु० पाठः।

गरूकतया 'अथावगाहत' इत्याशङ्काया अनुत्थितिरिति वाच्यम् । भ्रमात्मकविशेषणतावच्छेदकप्रकारकज्ञानादेव व्यधिकरणधर्मावच्छिन्नाभावप्रतीतिरुत्पत्स्यते, विशेषदर्शनकालीनं शशीयतया शृङ्गनास्तीत्याकारकं ज्ञानं शृङ्गादौ शशीयत्वाभावविषयकमेव यत्रबाधकं तत्रैव प्रतीतेरन्यविषयकता न तु बाधकविरहस्थलेऽपि, अन्यथा यत्र यत्किञ्चिद्वयवनाशान्महाघटनाशो नैयायिकादिसम्मतः तत्रत्यायाः स एवायङ्घट इत्यादिप्रत्यभिज्ञायाः तज्जातीयत्वावलम्बनत्वमावश्यकमिति सर्वत्रैव तदवलम्बनतासम्भवात् भेदावगाहिन्याः प्रत्यभिज्ञाया असिध्या स्थैर्यमात्रोच्छेदप्रसङ्गादित्याशयेन तादृशशङ्कासम्भवात् । अथ यदि वैशिष्ट्यांशे तद्धर्मावच्छिन्नप्रतियोगिकत्वावगाहिन्येव बोधे तद्धर्मप्रकारकबोधो हेतुस्तदा घटत्वादिनिर्विकल्पकानन्तरङ्घटत्वाद्यवच्छिन्नप्रतियोगिकत्वानवगाही घटो नास्तीत्याकारकाभावप्रत्ययः कथं नोत्पद्यते ? स्वमतेऽभावबुद्धौ प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य पृथक्कारणताविरहादिति चेन्न । तद्धर्मविशिष्टनिरूपितत्वेन वैशिष्ट्यानवगाहिनस्तद्धर्मविशेषितप्रतियोगिप्रकारकाभावभानस्य क्वचिदप्यनभ्युपगमेनापाद्याप्रसिद्धेः । एतेन घटत्वावच्छिन्नप्रतियोगिताकाभावे द्रव्यत्वादिविशिष्टवैशिष्ट्यस्यासत्त्वेऽपि केवलं विशेष्ये विशेषणमित्यादिरीत्या द्रव्यत्वादिविशेषितघटत्वादिप्रकारकतादृशाभावज्ञानापत्तेर्दुर्वार्यतया घटादिशून्ये द्रव्यान्तरवत्यपि द्रव्यं नास्तीत्याकारकप्रत्ययापत्तिरित्यपि परास्तम् ।

अथ सोन्दडोपाध्यायमते पटत्वेन घटो नास्तीत्यादिव्यधिकरणधर्मावच्छिन्नाभावबुद्धेर्घटत्वविशिष्टवैशिष्ट्यानवगाहितया घटत्वादिप्रकारकज्ञानजन्यतावच्छेदकानाक्रान्ततया घटत्वादिनिर्विकल्पकोत्तरन्तादृशबुद्ध्यापत्तिः ।

अत्र केचित् । पटत्वादिना घटात्यन्ताभावस्य प्रतियोगितायां व्यधिकरणतया पटत्वादेरिव समानाधिकरणतया घटत्वादेरप्यवच्छेदकत्वं स्वीक्रियते अतस्तादृशबुद्धेर्घटत्वादिविशिष्टवैशिष्ट्यावगाहित्वमक्षतमेव घटत्वावच्छिन्नत्वेनैव तत्र प्रतियोगिताभानोपगमादिति नातिप्रसङ्गः । प्रतियोगितावच्छेदकत्वञ्चोभयत्र व्यासज्यवृत्ति, अतः प्रतियोगितावच्छेदकघटत्वावच्छिन्नवति न तादृशाभावासत्त्वप्रसङ्गः प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणसमुदायावच्छिन्नेनैव सममभावस्य विरोधादन्यथा महानसीयवह्नित्वाद्यवच्छिन्नाभावस्य वह्नित्वाद्यवच्छिन्नाधिकरणपर्वतादावसत्त्वप्रसङ्गात् । एतेन समानाधिकरणतया घटत्वादेस्तादृशाभावप्रतियोगितावच्छेदकत्वे घटत्वादिना घटादिमत्त्वोपलम्भस्य

तादृशाभावबुद्धिविरोधित्वप्रसङ्ग इत्यपि परास्तम्। प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणसमुदायप्रकारेण प्रतियोगिमत्त्वोपलम्भस्यैवाभावबुद्धिप्रतिबन्धकत्वात्, अन्यथा शुद्धवह्नित्वादिप्रकारेण वह्न्यादिप्रकारकोपलम्भस्यापि महानसीयवह्नित्वाद्यवच्छिन्नाभावधीविरोधितापत्तेः। विरोधी च शशीयतया शृङ्गन्नास्तीत्यादिव्यधिकरणधर्मावच्छिन्नाभावबुद्धेः शशीयत्वशृङ्गत्वादिसमुदायप्रकारकशशशृङ्गवानयमित्याद्याकारको भ्रमात्मकप्रतियोग्युपलम्भ एव, तस्य च प्रतिबध्यतावच्छेदकन्न वास्तवशशीयत्वशृङ्गत्वादिपर्याप्तावच्छेदकताप्रतियोगिताकाभावविशिष्टबुद्धित्वं शृङ्गत्वाद्यवच्छिन्नप्रतियोगितायां शशीयत्वाद्यवच्छिन्नत्वभ्रमात्मकशशशृङ्गन्नास्तीतिप्रत्ययासङ्ग्रहात्, किन्तु प्रतियोगित्वांश शशीयत्वावच्छिन्नत्वशृङ्गत्वावच्छिन्नत्वाद्यवगाह्यभावविशिष्टबुद्धित्वमेव, एवं च सर्ववादिसिद्धप्रतिबध्यप्रतिबन्धकभावेनैवोपपत्तिः।

अथ शृङ्गत्वेन शृङ्गोपलम्भस्य प्रतिबध्यतावच्छेदकं यदि प्रतियोगितांशे शृङ्गत्वाद्यवच्छिन्नत्वावगाह्येतादृशबुद्धित्वन्तदा शृङ्गवानयमितिज्ञानस्य शशीयतया शृङ्गं नास्तीतिबुद्धिविरोधित्वन्दुर्वारमेव, यदि च शृङ्गत्वान्यधर्मावच्छिन्नत्वानवगाहिबुद्धित्वं तदा शृङ्गन्नास्ति शशीयन्नास्तीति समूहालम्बनबुद्धौ तदविरोधित्वप्रसङ्ग इति चेन्न। शृङ्गत्वाद्यवच्छिन्नत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छिन्नत्वनिष्ठावच्छेदकता तदनिरूपकप्रतियोगितानिष्ठसांसर्गिकविषयतायाः प्रतिबध्यतावच्छेदकत्वोपगमेनानुपपत्त्यभावात् उक्तसमूहालम्बनज्ञानीयशृङ्गत्वाद्यवच्छिन्नप्रतियोगितानिष्ठसंसर्गतायाः शशीयत्वावच्छिन्नप्रतियोगितानिष्ठसंसर्गतातो भिन्नतया शशीयत्वावच्छिन्नप्रतियोगितासंसर्गकतादृशज्ञानसङ्ग्रहात्। न च शशीयतया शृङ्गं नास्तीत्यादौ शशीयत्वप्रकारतानिरूपितदर्शितपरम्परासंसर्गनिष्ठसंसर्गतान्तःपातिनी या प्रतियोगित्वीयसंसर्गतातोऽन्यैव शृङ्गप्रकारतानिरूपितसंसर्गतान्तःपातिनी प्रतियोगित्वीयसंसर्गता, सा च शशीयत्वावच्छिन्नत्वेनानवच्छिन्नैवेति कथं व्यधिकरणधर्मावच्छिन्नाभावबुद्धेः शुद्धशृङ्गत्वेन शृङ्गोपलम्भाप्रतिबध्यतेति वाच्यम्। तादृशबुद्धौ शृङ्गप्रकारतानिरूपितसंसर्गतान्तःपातिप्रतियोगित्वीयसंसर्गतायाः शशीयत्वप्रकारतानिरूपितावच्छिन्नत्वीयसंसर्गताख्यविषयतानिरूपितत्वस्वीकारात्तस्या उपदर्शितपरम्परासम्बन्धेनाभावांशे शशीयत्वादिप्रकारतानिर्वाहेण प्रतियोगित्वादिसंसर्गताभेदे मानाभावात्। एवं च शुद्धमणित्वावच्छिन्नाभावस्यैव दाहादिहेतुतया मण्यादिसमवधानकाले व्यधिकरणधर्मावच्छिन्नतदभावबलाद्दाहाद्यापत्तिरपि परास्तेति वदन्ति।

यत्तु–तद्धर्मप्रकारतानिरूपितविशेष्यतापन्नदण्डादिनिष्ठप्रकारताशालित्वरूपतद्विशिष्टप्रकारकत्वावच्छिन्नबुद्धावेव तद्धर्मप्रकारकज्ञानं हेतुः, (न तु) तदवच्छिन्नप्रतियोगिताकत्वविशिष्टसंसर्गकत्वमपि कार्य्यतावच्छेदककोटौ निवेश्यते, दण्डत्वादिनिर्विकल्पकानन्तरञ्च दण्ड इत्याद्याकारकं ज्ञानम्प्रथमत उपेयते, विशेष्ये विशेषणमित्यादिरीत्यापि दण्डीत्याकारकं ज्ञानन्तदनन्तरमेव क्षणैकापलापे क्षतिविरहात्, तादृशविशेष्यतापन्ननिष्ठप्रकारताशालित्वन्तु तादृशविशेष्यतयाऽवच्छिन्नाऽभिन्ना वा या प्रकारता तच्छालित्वमतो दण्डत्वनिर्विकल्पकद्रव्यत्वादिप्रकारकज्ञानानन्तरोत्पन्नद्रव्यवान्दण्डश्चेत्याकारकतादृशविशेष्यतासमानाधिकरणप्रकारताशालिसमूहालम्बने न व्यभिचार-इति । तत्तुच्छम् । घटमानयेतिवाक्यात्कर्मत्वङ्कृटीयमित्याकारकावान्तरवाक्यार्थज्ञानं विनापि विशकलितघटकर्मत्वादिसकलपदार्थविषयकसमूहालम्बनोपस्थितिबलाद्विशेष्ये विशेषणमितिरीत्या घटादिप्रकारतानिरूपितविशेष्यतावच्छिन्नकर्मत्वादिप्रकारताशालिशाब्दबोधस्य सर्ववादिसिद्धस्यानुपपत्तेः । नच तत्र कर्मत्वादिप्रकारताया घटत्वादिप्रकारतानिरूपितविशेष्यतानवच्छिन्नत्वे कर्मत्वङ्कृटीयमानयनं सकर्मकमित्यादिसमूहालम्बनानां तादृशवैचित्र्यानुपपत्तिर्नहि विशेष्ये विशेषणमितिरीत्या बोधस्समूहालम्बनाद्विलक्षण एवेति वाच्यम्(१) । तथासति तादृशबोधेनैकवाक्यतानुपपत्तेः व्याप्तिघटकपदार्थानां विशकलितसमूहालम्बनोपस्थितिमूलकात् विशेष्ये विशेषणमितिरीत्या परामर्शादनुमित्युत्पत्तेर्मिश्रादिसंमताया अनुपपत्तेः । एवन्दीधितिकृतां तादृशरीत्या जायमानायाः काञ्चनमयवह्निमान्पर्वत इत्येतादृशानुमितेः काञ्चनमयत्वावच्छिन्नवह्न्यभावनिश्चयप्रतिबध्याया विशिष्टवह्निसिद्ध्यनपेक्षत्वाभिधानासङ्गतिः ।

परे तु तद्धर्मविशिष्टप्रकारकबुद्धावेव तद्धर्मप्रकारकज्ञानं हेतुः । तद्विशिष्ट कारकत्वञ्च तदवच्छिन्नप्रकारकत्मेव न तु तदवच्छिन्नप्रतियोगिताकत्वविशिष्टसंसर्गकत्वमपि कार्यतावच्छेदककोटौ निवेश्यते तद्विशिष्टनिरूपितवैशिष्ट्यावगाहिज्ञाने तद्धर्मस्य प्रकारतावच्छेदकतानियमात् तत्र नियमतस्तद्धर्मप्रकारकज्ञानापेक्षया पटत्वेन घटो नास्तीत्यादिबुद्धेर्घटत्वावच्छिन्नप्रतियोगिताकत्वानवगाहित्वेऽपि घटत्वावच्छिन्नप्रकारताशालित्वेन घटत्वादिप्रकारकज्ञानजन्यतावच्छेदकाक्रान्तत्वमक्षतमेवेति नोक्तातिप्रसङ्गः । यथा विशेष्यांशे प्रकारत्वमेव न विशेष्यतावच्छेदकत्वम्, तथासति भूतलङ्घटवदित्यादौ घटादेः स्वस्य च भूतलत्वादिधर्मि-

(१) नच वाच्यमिति मि० नास्ति पुस्तके ।

तावच्छेदकत्वापत्तेः, किन्तु विषयताविशेष एव, स च प्रकारताविशेषः प्रकारताभिन्नो वेत्यन्यदेतत्। तथा प्रकारतावच्छेदकत्वमपि विषयताविशेष एव नतु प्रकारांशे प्रकारत्वमेव तत्। एवं च दण्डत्वादिनिर्विकल्पकानन्तरं विशेष्ये विशेषणमितिरीत्या जायमानस्य दण्डीत्याकारकज्ञानस्य दण्डत्वादौ प्रकारतावच्छेदकताख्यविषयताविशेषस्यानभ्युपगमात् न तदनुपपत्तिः। घटत्वादिनिष्ठतादृशविलक्षणविषयतारहितस्य घटो नास्तीत्याकारकाभावप्रत्ययस्य क्वचिदप्यनभ्युपगमात् न घटत्वादिनिर्विकल्पकानन्तरन्तदापत्तिः, अत एवावच्छेदकताया अव्यासज्यवृत्तित्वमते महानसीयवह्निर्नास्तीत्याद्याकारकाभावप्रत्ययस्य महानसीयत्ववह्नित्वाद्यवच्छिन्नप्रतियोगिकत्वावगाहित्वं न सम्भवति, महानसीयत्वादेर्वह्नित्वादिनिष्ठायाःप्रतियोगितावच्छेदकतायामेव सामानाधिकरण्यप्रत्यासत्त्याऽवच्छेदकत्वोपगमात्, तथाच तस्य महानसीयत्वादिविशिष्टवैशिष्ट्यावगाहितया वह्न्यादौ महानसीयत्वादिप्रकारकज्ञानशून्यकाले आपत्तिः। न च वह्नित्वविशिष्टमहानसीयत्वादेरपि महानसीयवह्न्याद्यभावप्रतियोगितायां विनिगमनाविरहादवच्छेदकतया अवच्छेदकताया अव्यासज्यवृत्तित्वेऽपि कथितप्रत्ययस्य महानसीयत्वावच्छिन्नप्रतियोगिताकत्वावगाहित्वं सम्भवतीति वाच्यम्। अवच्छेदकताया अव्यासज्यवृत्तित्वे विनिगमनाविरहेणोभयस्य तत्प्रतियोगितावच्छेदकत्वेऽपि अवच्छेदकताभेदेन प्रतियोगिताभेदादेकस्याः प्रतियोगिताया उभयधर्मावच्छिन्नत्वभानासम्भवात् तादृशाभावबुद्धेर्वह्नित्वमहानसीयत्वोभयावच्छिन्नप्रतियोगिताकत्वनिष्ठसंसर्गताकत्वघटितवह्नित्वधर्मितावच्छेदककमहानसीयत्वप्रकारकज्ञानजन्यतावच्छेदकाक्रान्ततया घटयितुमशक्यत्वात्। न च वह्नित्वावच्छिन्नत्वविशिष्टप्रतियोगितासंसर्गकत्वे सति महानसीयत्वावच्छिन्नत्वविशिष्टप्रतियोगितासंसर्गकत्वस्य तादृशज्ञानजन्यतावच्छेदकत्वोपगमात् महानसीयवह्निर्नास्तीत्यादौ च तादृशधर्माभ्याम्प्रत्येकमवच्छिन्नस्य प्रतियोगिताद्वयस्यैव(१) संसर्गतोपगमेन नायं दोष इति वाच्यम्। तादृशधर्मस्य जन्यतावच्छेदकत्वे महानसीयो नास्ति वह्निर्नास्तीति समूहालम्बनबुद्धौ तथाविधज्ञानस्य व्यभिचारात्। वार्यतां वा तत्र कथंचिद्व्यभिचारः, तथापि सुरभिजलं नास्तीत्यादावगतिरेव, तत्र जलत्वावच्छिन्नस्य सौरभादेः परम्परासंबन्धेनैवावच्छेदकताया वक्तव्यतया सौरभविशिष्टजलत्वादेः साक्षात्सम्बन्धेनावच्छेदकत्वे लाघवस्यैव विनिगमकत्वात्, सौरभादेः प्रतियोगितानवच्छेदकतया तदवच्छिन्नप्रतियोगिताकत्वावगाहि-

(१) तादृशप्रत्येकधर्मावच्छिन्नप्रतियोगित्वस्येति मि० पु० पाठः।

त्वासंभवात् इत्यनुपपत्तिरपि समाहिता । उक्तप्रतीतेर्महानसीयत्वावच्छिन्नप्रतियोगिताकत्वावगाहनेऽपि महानसीयत्वादेः प्रकारतावच्छेदकतया तत्प्रकारकज्ञानसापेक्षत्वात् ।

अथ तद्धर्मावच्छिन्नप्रतियोगिताकत्वानवगाहिन्यभावप्रत्यये तद्धर्मस्य प्रतियोगिनिष्ठप्रकारताया अवच्छेदकत्वोपगमे वह्न्यादिसामान्याभावबोधेऽपि महानसीयत्वादि प्रकारतया भासतामिति चेत् । इष्टमेवैतत्सोन्दडोपाध्यायमतानुयायिनां, तन्मते प्रतियोगितावच्छेदकप्रकारेणैव प्रतियोगिनो भानमिति नियमस्यासिद्धेः।अथैवम्महानसीयवह्न्यभावप्रत्ययस्य वह्न्याद्यंशे उपलक्षणविधया महानसीयत्वावगाहिनो वह्न्यादिसामान्याभावप्रत्ययस्य चाविलक्षणतया महानसीयत्वाद्यविषयकवह्निमानयमित्यादिबुद्धौ तयोर्धर्मयोरेव प्रतिबन्धकत्वमप्रतिबन्धकत्वं वा स्यात्,नतु प्रथमस्यातथात्वं द्वितीयस्य च तथात्वमिति चेत् अनुयुज्यते, तदाऽऽकर्णयतामवधानपरेण–महानसीयवह्नित्वाद्यवच्छिन्नाभावबुद्धाववच्छेदकताया अव्यासज्यवृत्तित्वकल्पे महानसीयत्वावच्छिन्नत्वविशेषितावच्छेदकतानिरूपकत्वं प्रतियोगितांशे भासते वह्निसामान्याभावबोधे च महानसीयत्वाद्यवच्छिन्नत्वं नावच्छेदकतायाम्भासते इति विशेषः । न च प्रतियोगितावच्छेदकांशे विशेषणतापन्नस्यैव प्रतियोगितावच्छेदकतावच्छेदकत्वम्भासत इति नियमः, यथा दण्डीनास्तीत्यादौ दण्डत्वादेः, इत्थञ्च महानसीयवह्निर्नास्तीत्यादौ वह्नित्वांशेऽविशेषणस्य महानसीयत्वादेः कथन्तथा भानमिति वाच्यम् । सोन्दडमते समवायितया वाच्यत्ववान्नेत्यादिभेदप्रत्यये प्रतियोगितावच्छेदकांशेऽविशेषणस्यापि समवायित्वादेः प्रतियोगितावच्छेदकतावच्छेदकत्वभानेन तादृशनियमस्यासिद्धेः॥ अन्यमते आश्रयतासम्बन्धेनावच्छेदकतावच्छेदकत्वस्य भान एव तथा नियमो न तु सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नस्य तस्य भाने । तादृशावच्छेदकतावच्छेदकत्वमवच्छेदकविशिष्टे विशेषणतापन्न एव भासते इति नियमः, अतो वह्निर्नास्तीत्याद्याकारकप्रतीतौ महानसीयत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगिताकत्वञ्च भासते इति न पर्वतादौ वह्निर्नास्तीत्याकारकप्रतीत्यापत्तिः । एवं व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगन्तृमते प्रतियोगितावच्छेदकधर्मप्रकारेणैव प्रतियोगिभाननियमेऽपि साक्षात्परम्परासाधारणप्रतियोगितानिरूपितमवच्छेदकत्वमेव विवक्षितन्तच्चावच्छेदकतावच्छेदकसाधारणमिति न दोषः । एवं घटो भविष्यति घटो नष्ट इत्याकारकप्रागभावध्वंसप्रतीतौ घटत्वादेरतिप्रसक्ततया ध्वंसप्राग-

भावप्रतियोगितानवच्छेदकत्वेनोपलक्षणतयैव प्रतियोग्यंशे भानात् तद्विशिष्टवैशिष्ट्यानवगाहितया घटत्वादिनिर्विकल्पकानन्तरन्तदापत्तिरित्यस्यापि ईदृशप्रकारानुसरणमन्तराऽशक्यवारणमेव । एवमनुयोगितावच्छेदकप्रकारकज्ञानस्यापि तद्धर्मनिष्ठधर्मितावच्छेदकताकबुद्धावेव हेतुता न तु तद्धर्मविशिष्टानुयोगिकत्वावच्छिन्नसंसर्गताकत्वमपि कार्यतावच्छेदककोटौ निवेशनीयं गौरवात् तद्विशिष्टानुयोगिकत्वावच्छिन्नसंसर्गकबुद्धौ तद्धर्मस्य धर्मितावच्छेदकत्वनियमादेव तादृशबुद्धौ नियमतस्तद्धर्मप्रकारज्ञानापेक्षोपपत्तिः । दण्डादिविषयकनिर्विकल्पकानन्तरन्दण्डीत्याकारकज्ञानोत्पत्ताविव क्षणैकव्याजेन एकत्र द्वयमिति रीत्यापि दण्डकुण्डलाद्युभयप्रकारकदण्डादिधर्मितावच्छेदककज्ञानमुत्पद्यते । दण्डी कुण्डलीत्यादिवाक्याच्चैत्रत्वावच्छिन्नविशेष्यकदण्डसम्बन्धादिप्रकारकावान्तरवाक्यार्थज्ञानरहितस्य पुंसः खले कपोतन्यायेन जायमानायामन्वयबुद्धौ दण्डसम्बन्धादेर्न कुण्डलसम्बन्धादिधर्मितावच्छेदकत्वमुपगम्यते, अपि तु चैत्रत्वादावेव तदुभयधर्मितावच्छेदकत्वम्, चैत्रत्वादेः पदार्थतावच्छेदकतया तत्प्रकारकपदार्थोपस्थितेः खले कपोतन्यायेनापि शाब्दबोधस्य प्राक्सत्त्वनियमात्तावतैवान्वयबोधस्य सधर्मितावच्छेदकत्वनियमोपपत्तेः । एवञ्च संशये धर्मितावच्छेदकप्रकारकज्ञानस्यापि स्वतन्त्रहेतुताकल्पनेनापि लाघवम्, अन्यथा गन्धप्रागभाववान् गन्धवान् न वा गोसदृशो गवयपदवाच्यो नवा द्रव्यावृत्तिर्गगनवृत्तिर्नवेत्याकारकसंशयेषु गन्धप्रागभावगोसादृश्यद्रव्यावृत्तित्वाद्युपलक्षिते धर्मिणि कोटिवैशिष्ट्यावगाहिषु विशिष्टानुयोगिकवैशिष्ट्यानवगाहितयाऽनुयोगितावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकानाक्रान्तेषु तत्तद्धर्मितावच्छेदकज्ञानानां स्वातन्त्र्येण हेतुताकल्पनस्यावश्यकतापत्तेः । एवं विशेष्यताप्रकारते विषयतात्वेनानुगमय्य तद्धर्मवृत्तिविषयतावच्छेदकताकबुद्धित्वमेव तद्धर्मप्रकारकज्ञानजन्यतावच्छेदकमङ्गीकार्यमित्येकैव विशेषणताऽनुयोगितावच्छेदकप्रकारकज्ञानयोर्द्विविधविशिष्टवैशिष्ट्यबोधहेतुता इत्यपि लाघवम् । तद्धर्मप्रकारकज्ञानशून्यकालीनतद्धर्मविशिष्टसंसर्गकबुद्धौ तद्धर्मस्य सांसर्गिकविषयतानिरूपितविषयताविशेषात्मकमवच्छेकत्वञ्च स्वीक्रियते दण्डत्वादिनिर्विकल्पकानन्तरञ्जायमानायान्दण्डीत्यादिबुद्धौ दण्डत्वादेः प्रकारतावच्छेदकतात्मकविषयताविशेषवत्, एवञ्च प्रतियोग्यंशे प्रकारतापन्नस्य व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वेऽपि न क्षतिः इत्यभिसन्धायैव दीधितिकारः चक्रवर्त्तिलक्षणे व्यधिकरणधर्मावच्छिन्नसाध्यसामान्याभावमुपेत्य ह्रदत्वत्रह्रित्वास्यां वह्निर्नास्ती

त्यादिप्रत्ययविषयाभावमवच्छेदकतापर्य्याप्तिनिवेशनप्रयोजनप्रदर्शनायानुसृतवानित्याहुः ।

अन्ये तु विशिष्टपर्य्याप्तप्रकारताकत्वं विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकम्, दण्डत्वादिनिर्विकल्पकानन्तरोत्पन्नस्य दण्डीत्याकारकज्ञानस्य पुरुषादिविशेष्यतानिरूपितप्रकारता शुद्धदण्डत्वादावेव पर्याप्ता न तु दण्डत्वादिरूपविशेषणान्तर्भावेन (तत्पर्य्याप्तिः) । अभावबुद्धौ प्रतियोगिनिष्ठप्रकारतायास्तद्विशेषणीभूतधर्मान्तर्भावेन पर्याप्तिनियमात् घटत्वेन घटो नास्ति घटो भविष्यति घटो नष्ट इत्यादिबुद्धेर्घटत्वादिविशिष्टनिरूपितत्वावच्छिन्नसंसर्गानवगाहित्वेऽपि न घटत्वादिनिर्विकल्पकानन्तरमापत्तिः । अथ पुरुषादिनिष्ठविशेष्यतानिरूपितप्रकारताया दण्डत्वाद्यन्तर्भावेण पर्याप्तौ न कथन्दण्डी पुरुष इत्यादिबुद्धेः पुरुषाद्यंशे दण्डत्वादिप्रकारकतया भ्रमत्वापत्तिः, न वा पुरुषो न दण्ड इत्याकारकज्ञानप्रतिबध्यत्वम् । तदभाववतीतरविशेषणतानापन्नतद्धर्मप्रकारकत्वस्य भ्रमत्वरूपत्वे धर्मिणि इतरविशेषणतानापन्नतद्धर्मप्रकारकत्वस्य तद्विरोधिज्ञानप्रतिबध्यतावच्छेदकत्वे चाभावांशे स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रतियोगिरूपविशेष्यपारतन्त्र्येण प्रमेयत्वप्रकारिकायाः प्रमेयं नास्तीत्यादिबुद्धेर्भ्रमत्वानुपपत्तिः तदंशे तादृशसम्बन्धेन प्रमेयत्वादेर्बाधग्रहेऽपि तादृशबुद्ध्यापत्तिश्चेति चेन्न । तन्मात्रपर्याप्तप्रकारतायास्तत्र तत्र निवेशेनैवोपपत्तेः इतरविशिष्टतद्धर्मवैशिष्ट्यावगाहिबुद्धौ अव्यासज्यवृत्तेरपि प्रकारतायास्तद्धर्मे स्वीकारेणैव तस्याः तद्धर्माभावनिश्चयप्रतिबध्यत्वनिर्वाहस्तादृशी च प्रकारता निर्विकल्पकानन्तरजातबुद्धावेव क्लृप्ता । यदि च केवलं विशेष्ये विशेषणमित्यादिरीत्या बुद्धेर्विषयता न विशिष्टवैशिष्ट्यधीत्व(१)व्यापिका, तदा तद्धर्मविशेष्यतापन्नवृत्तितदीयप्रकारतैव तत्र तत्र निवेश्यते । तत्र तन्निरूपितविशेष्यताभिन्नत्वन्तन्निरूपितविशेष्यतानवच्छिन्नत्वं वा वृत्त्यन्तार्थः । दण्डी पुरुष इत्यादिविशिष्टवैशिष्ट्यबोधीयदण्डत्वादिविशिष्टपर्याप्तप्रकारता दण्डत्वादिप्रकारतानिरूपितविशेष्यतारूपा तदवच्छिन्नैव वा । अत एव विशिष्टघटकतद्विशेष्यविशेषणसम्बन्धानां विशेषणविशेष्यभावे वैपरीत्येऽप्यविलक्षणतया तत्तद्वैपरीत्ये विशिष्टप्रकारताया वैलक्षण्यानुपपत्तिरित्यपि समाहितम् । उक्तदिशाऽवान्तरविशेष्यविशेषणभाववैलक्षण्यस्य विशिष्टपर्याप्तविषयतावैलक्षण्यनिर्वाहकत्वान्नोक्तातिप्रसङ्गः । एतेनाभावबुद्धेः प्रतियोगिकोटौ विशेष्ये विशेषणमितिरीत्या विषयत्वस्याप्रामाणिकत्वेऽपि कस्याश्चित्तस्याः प्रतियोगिवैशि-

(१) विषयतात्वव्यापिकेति मि० पु० पाठः ।

ष्यांशे भ्रमत्वमुपपद्यते । तत्तद्विशेषणतावच्छेदकप्रकारकज्ञानस्यापि त-
द्धर्मवृत्तिः सती तद्धर्मप्रकारतानिरूपितविशेष्यतापन्नवृत्तिर्या प्रकारता त-
च्छालिबुद्धित्वमेव जन्यतावच्छेदकमतो लोहितवह्निमानित्यादौ लौहित्य-
विशिष्टवह्नेरप्रसिद्धावपि न क्षतिः । न वा इतरविशिष्टतद्धर्मवैशिष्ट्यबुद्धौ
तद्धर्मप्रकारकधियो व्यभिचार इति वदन्ति ।

इमौ च द्वावेव पन्थानौ 'विशेषणावच्छिन्नविशेष्यविशेषणयोर्व्यासज्य-
वृत्तिर्वा व्याप्तिर्विशिष्टव्याप्त्यर्थः' इत्यभिहितवतो मणिकार(१)स्य 'यावद्वि-
शेषाभावाधिकरणवृत्तित्वरूपविशेषणान्तर्भावेन सामान्यधर्मावच्छिन्नप्र-
तियोगिताकत्वस्य पर्याप्तिस्तादृशाधिकरणावृत्तित्वन्तदवच्छेदकं वेति'
वदतो दीधितिका(२)रस्याप्यभ्युपगमाभावेन सिद्धान्तविरोधमावहतः ।
अनयोरुपादेयानुपादेयताप्रयोजकविशेषः स्फुट एवेति स्वयमूहनीयम् ।

अथ विशिष्टनिरूपितविलक्षणसंसर्गानवगाहिज्ञाने केवलं विशेष्ये वि-
शेषणमितिरीत्या विषयतातो विलक्षणायां विशिष्टवैशिष्ट्यविषयताया-
म्मानाभावः । विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकस्योपदर्शि-
ताभावधीसाधारण्यानुरोधेन तत्सिद्धिरिति तु नाशङ्कनीयम्, तस्य तत्-
साधारण्यविरहेऽपि अभावबुद्धौ प्रतियोगिविशेषणीभूतधर्म्मप्रकारकधि-
यः स्वतन्त्रहेतुतया तद्धर्मादिविषयकनिर्विकल्पकानन्तरन्तद्धर्मविशेषित-
प्रतियोगिकनाशादप्रत्यक्षस्य वारणसम्भवात्, लाघवेन विलक्षणविष-
यतासिद्धेः सिद्धान्तविरुद्धत्वात् ज्ञानाकारवैलक्षण्ये वैलक्षण्यस्य स-
विवादत्वादिति चेन्न । यतो विशिष्टनिरूपितविलक्षणसंसर्गावच्छिन्नप्र-
कारता शुद्धसंयोगादिसंसर्गावच्छिन्नप्रकारतातोऽतिरिक्तेत्यत्र सर्वेषाम-
विवादः । घटो नष्टः घटत्वेन पटो नास्तीत्यभावबुद्धेरपि अनुयोगिता-
विशेषसम्बन्धावच्छिन्नप्रकारताया विशेष्यांशे निर्विकल्पकान्तरं जाय-
मानघटवद्भूतलमित्यादिज्ञानीयघटादिप्रकारतोऽतिरिक्तत्वं सर्ववादि-
सम्मतत्वात् । अभावबुद्धौ प्रतियोगिविशेषणधर्मप्रकारकधियः स्वा-
तन्त्र्येण हेतुताऽकल्पनाप्रयुक्तलाघवानुरोधेन तादृशप्रकारताया विशेषणा-
न्तर्भावेन पर्याप्तिः तदवच्छिन्नत्वं वा कल्प्यते न त्वतिरिक्तविषयतेति । वि-
शिष्टसंसर्गकबाधादिकालीनघटत्वादिप्रकारकज्ञानोत्तरजायमानतद्विशि-
ष्टप्रतियोगिकत्वानवच्छिन्नवैशिष्ट्यावगाहिभूतलं घटवदित्यादिज्ञाने च
या घटादिप्रकारता तत्र तादृशवैलक्षण्यं नास्माभिरुपगम्यते येन घटादि-
निर्विकल्पकानन्तरं जायमानज्ञानीयतथाविधविषयतातोऽतिरिक्तविषयता

---

(१) इत्यभिहितवन्तं मणिकारं ।

(२) वदन्तं दीधिकारमप्यनुसरत इति न सिद्धान्तविरोध मावहतः इति का० पु० पाठः।

तत्रापद्येत । अथ तद्धर्मप्रकारतानिरूपितविशेष्यतापन्नप्रकारताकबुद्धित्वमेव तद्धर्मप्रकारकधीजन्यतावच्छेदकमस्तु किं वैलक्षण्यकल्पनया, सर्वत्र घटवदित्याकारकज्ञानं घट इत्याकारकज्ञानपूर्वकमेवास्तु एकपदार्थविशेष्यकापरपदार्थप्रकारकशाब्दबोधोऽपि सर्वत्रावान्तरवाक्यार्थज्ञानपूर्वक एवास्ताम्, अस्तु प्रत्यक्षत्वमेव तज्जन्यतावच्छेदकम्, एवं च महानसीयत्वादिविशिष्टबुद्धेः प्रागनुपस्थितावपि लाघवोपनीतमहानसीयत्वविशेषितवह्निविशेष्यकानुमित्युत्पादेऽपि न क्षतिरिति चेन्न । घटवदित्याकारकविशिष्टवैशिष्ट्यानवगाहिज्ञानपूर्वं सर्वत्र घट इत्याकारकज्ञानव्यक्तीनामनन्तानाङ्कल्पनापेक्षयोक्तवैलक्षण्यकल्पनाया एवोचितत्वात् । घटत्वादिप्रकारतानिरूपितविशेष्यतापन्नप्रकारताया घटत्वादिवृत्तित्वानिवेशेन घटत्वादिप्रकारकज्ञानस्य कार्यतावच्छेदकत्वे पर्याप्तिघटकभिन्नत्वनिवेशेन च लाघवमेतन्मते ज्ञानव्यक्तिकल्पनागौरवं फलमुखमिति चेत् । अस्तु व्यासज्यवृत्तिविषयतापक्षीयकार्यतावच्छेकापेक्षयैतन्मते कार्यतावच्छेदकलाघवं विशेषणावच्छिन्नप्रकारताकल्पे तु एतन्मतापेक्षयाऽपि कार्यतावच्छेदकलाघवमित्यलमतिविस्तरेण ।

विशिष्टवैशिष्ट्यबोधश्च द्विविधः—अनवच्छिन्नविशेषणतावच्छेदकताकोऽवच्छिन्नविशेषणतावच्छेदकताकश्च । तत्रानवच्छिन्नदण्डत्वादिविशेषणतावच्छेदकताकदण्डीत्यादिबोधे स्वरूपतो दण्डत्वादिप्रकारकं ज्ञानं हेतुः, अन्यथा जातित्वादिना दण्डत्वादिप्रकारकजातिमानित्यादिज्ञानाद्दण्डीत्यादिविशिष्टवैशिष्ट्यबोधापत्तेः । न च स्वरूपतो दण्डत्वादिप्रकारकबोधे स्वरूपतो दण्डत्वादिविषयकज्ञानस्य हेतुतया तादृशकारणाभावादेव नोक्तापत्तिरिति वाच्यम् । यत्र दण्डत्वादिनिर्विकल्पकद्वितीयक्षणे जातित्वेन दण्डत्वादिप्रकारकस्मरणं तदुत्तरन्तादृशबोधापत्तेर्दुर्वारत्वात् । किञ्चिद्धर्मावच्छिन्नविशेषणतावच्छेदकताकदण्डिमानित्यादिबोधे च विशेषणतावच्छेदकतावच्छेदकप्रकारेण विशेषणतावच्छेदकप्रकारकज्ञानं हेतुः । यत्र द्रव्यत्वादिना दण्डादिप्रकारकज्ञानं दण्डत्वादिना दण्डादिमुख्यविशेष्यकज्ञानं च वर्त्तते तत्र दण्डिमानित्याकारकविशिष्टवैशिष्ट्यबोधानुदयात् तत्र विशेषणतावच्छेदकीभूततत्तद्दण्डादिविषयतामनिवेश्य दण्डत्वादिप्रकारतानिरूपितप्रकारताशालिज्ञानत्वेनैव हेतुत्वं, तथा च दण्डत्वादिना दण्डान्तरज्ञानादप्यपूर्वदण्डादिविषयकदण्डिमानित्यादिविशिष्टवैशिष्ट्यबोधो जायत इति सामान्यलक्षणप्रत्यासत्तिमनङ्गीकुर्वन्तो नवीना वदन्ति । यत्र विशेषणतावच्छेदकतावच्छेदकं दण्डत्वादिकमपि किञ्चिद्धर्मावच्छिन्नं तत्रापीदृशी रीतिरनुसन्धेया । ए-

तादृशदिशा च विशिष्टानुयोगिकवैशिष्ट्यबोधे तद्बोधकारणीभूतविशेष्यतावच्छेदकप्रकारकज्ञानयोर्विशेषोऽवसेयः। एवं विशिष्टवैशिष्ट्यबोधः क्वचिद्विशेषणतावच्छेदकांशे निर्धर्मितावच्छेदककः यथा दण्डवानित्यादि। तत्र दण्डत्वादिरूपविशेषणतावच्छेदकस्य धर्मस्य धर्मितावच्छेदकमुद्रया कस्याप्यभानात्। क्वचिच्च तदंशे सधर्मितावच्छेदककः यथा रक्तत्वदण्डत्वादिनानाधर्मावच्छिन्नविशेषणताको रक्तदण्डवानित्यादिबोधः, तत्र दण्डत्वादिरूपैकविशेषणतावच्छेदकस्य रक्तत्वादिरूपापरविशेषणतावच्छेदकधर्मितावच्छेदकमुद्रया भानात्। यत्र फलीभूतज्ञाने यं धर्मं धर्मितावच्छेदकीकृत्य विशेषणतावच्छेदकभानं तत्र तद्धर्मधर्मितातावच्छेदककविशेषणतावच्छेदकप्रकारकज्ञानं हेतुः, एवं च तत्र दण्डत्वादिरूपधर्मितावच्छेदकताकरक्तत्वादिप्रकारकज्ञानत्वेन हेतुता, तज्जन्यतावच्छेदकं च दण्डत्वादिरूपधर्मितावच्छेदकविशिष्टविशेषणतापन्नरक्तत्वादिविशिष्टवैशिष्ट्यबुद्धित्वम्, तदर्थश्च दण्डत्वादिनिष्ठधर्मितावच्छेदकतानिरूपकरक्तत्वादिप्रकारतानिरूपिता या रक्तत्वावच्छिन्नप्रतियोगिताकत्वावच्छिन्नसंसर्गतानिरूपकप्रकारता तच्छालिबुद्धित्वम्। यत्र परस्परविशेषणविशेष्यतावच्छेदकभावानापन्नतुल्यकक्षरक्तत्वदण्डत्वाद्युभयविशिष्टदण्डादेर्वैशिष्ट्यं भासते यत्र वा दण्डत्वादिधर्मितावच्छेदकतापन्नरक्तत्वादिविशिष्टस्य वैशिष्ट्यम्भासते, तत्र व्यभिचारवारणाय दण्डत्वादिनिष्ठधर्मितावच्छेदकतानिरूपकत्वं रक्तत्वादिप्रकारताविशेषणमुपात्तम्। केवलं विशेष्ये विशेषणमिति रीत्या जायमाने रक्तदण्डवानित्यादिबोधे व्यभिचारवारणाय निरुक्तसंसर्गतानिरूपकत्वं रक्तत्वादिप्रकारतानिरूपितप्रकारताविशेषणमुपात्तम्। एवमनुयोगितावच्छेदकांशे सधर्मितावच्छेदककविशिष्टानुयोगिकवैशिष्ट्यबोधे सधर्मितावच्छेदककानुयोगितावच्छेदकप्रकारकज्ञानस्य हेतुता कल्पनीया। केवलं विशेष्ये विशेषणमित्यादिरीत्या यो रक्तदण्डवानित्यादिबोधस्तद्वयावृत्तविशिष्टपर्याप्तप्रकारताविशेषस्य विशिष्टवैशिष्ट्यबोधस्वीकारपक्षे रक्तत्वादिप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नविशेष्यतयाऽवच्छिन्ना तदभिन्ना वा या दण्डत्वसाधारणप्रकारता तच्छालिबुद्धित्वम्। विशेषणतावच्छेदकतारूपविषयताविशेषस्य विशिष्टवैशिष्ट्यबोधीयस्य रक्तत्वादावभ्युपगमपक्षे तु दण्डत्वादिनिष्ठधर्मितावच्छेदकतानिरूपकरक्तत्वादिप्रकारतयाऽवच्छिन्ना तदभिन्ना वा या तादृशविलक्षणरक्तत्वादिप्रकारता तच्छालिबुद्धित्वमेव जन्यतावच्छेदकम् (१)। एवं च रक्तो दंडो मेय इत्यादिविशिष्टानुयोगिक-

(१) अभिन्ना वाऽच्छेदकता तन्निरूपिका या विषयता तच्छालिबुद्धित्वमेव दण्डो रक्त इत्यादि निश्चयजन्यतावच्छेदकमिति मि० पु० पाठः।

वैशिष्ट्यबोधसाधारण्यमपि उक्तजन्यतावच्छेदकतादृशरूपस्येति न तादृशबोधे कारणत्वान्तरं कल्प्यम्। दण्डो रक्तो नवेति संशयानंतरं रक्तदण्डवानित्यादिबोधस्यानुभवविरुद्धतया विशेषणतावच्छेदकांशे सधर्मितावच्छेदकविशिष्टवैशिष्ट्यबोधजनकतावच्छेदकगर्भे निर्णयत्वनिवेशयत इति दीधितिकारः। तन्मते दण्डादौ रक्तत्वादिरूपविशेषणसन्देहाधीनो रक्तदण्डवान्न वा पुरुष इति संशयः केवलं विशेष्ये विशेषणमिति रीत्यैव जायते, नतु रक्तत्वादिविशिष्टदण्डत्वावच्छिन्नवैशिष्ट्यावगाहीति न तदनुपपत्तिः।

अथ तद्धर्मविशिष्टप्रतियोगिप्रकारकाभावबुद्धौ तद्धर्मविशिष्टवैशिष्ट्यावगाहित्वनियमात्कथमभावांशे केवलं विशेष्ये विशेषणमिति रीत्या रक्तत्वादिविशिष्टदण्डादेः प्रतियोगितासम्बन्धेन प्रकारतया भानम्। न चाभावबुद्धेः किंचिद्धर्मविशिष्टप्रतियोगिकवैशिष्ट्यावगाहित्वमेव नियतं तच्च तत्राक्षतमेव तादृशबुद्धेर्दण्डत्वादिविशिष्टवैशिष्ट्यावगाहितायाः सत्त्वात्। न च प्रतियोगिविशेषणीभूतयावद्धर्मविशिष्टवैशिष्ट्यावगाहित्वमपि तथा, तथा च तस्या रक्तत्वादिविशिष्टदण्डत्वाद्यवच्छिन्नवैशिष्ट्यावगाहित्वविरहेऽपि न क्षतिरिति वाच्यम्। केवलं विशेष्ये विशेषणमित्यादिरीत्यापि यत्किञ्चिद्धर्मविशिष्टप्रतियोगिनोऽभावांशे विशेषणत्वोपगमे दण्डादिसामान्याभावबुद्धावपि उपलक्षणतया रक्तत्वादेः प्रतियोगिविशेषणतया भानापत्तिः, तथाचाभावांशे रक्तत्वाद्युपलक्षितदण्डत्वावच्छिन्नप्रतियोगिताकत्वावगाहिनो रक्तदण्डाभाववानित्याकारकस्य ज्ञानस्यापि दण्डवानित्यादिविशिष्टबुद्धिप्रतिबन्धकत्वान्तरकल्पनापत्तिः रक्तत्वादिनिर्विकल्पकदशायामपि रक्तदण्डो नास्तीत्यादिबुद्ध्यापत्तिश्चेति चेत्। सत्यम्, विशेषणसंदेहाधीनविशिष्टसंदेहे केवलं विशेष्ये विशेषणमित्यादिरीत्या रक्तत्वादिविशिष्टस्य प्रतियोगिनोऽभावांशे विशेषणतया न भानमुपेयते किन्तु तत्र मिथो विशेषणविशेष्यतावच्छेदकभावानापन्नदण्डत्वरक्तत्वाद्युभयविशिष्टप्रतियोगिनिरूपितवैशिष्ट्यमेवाभावांशे भासते, तादृशविशिष्टवैशिष्ट्यबोधस्य च विशेषणतावच्छेदकांशे निर्द्धर्मितावच्छेदकतया न तत्र विशेषणतावच्छेदकप्रकारकनिर्णयापेक्षेति। नचैवं दण्डो रक्तो नेत्यादिबाधनिर्णयदशायामपि रक्तदण्डवान्नवेति संशयापत्तिः समानधर्मितावच्छेदककज्ञानस्यैव बाधादिप्रतिबध्यतया निरुक्तसमकक्षरक्तत्वदण्डत्वाद्युभयविशेषणविशिष्टदण्डादिवैशिष्ट्यबुद्धेस्तदप्रतिबध्यत्वादिति वाच्यम्। तथाविधरीत्या उभयविशेषणविशिष्टदंडादिसंशयस्य बाध-

निश्चयदशायामिष्टत्वात् । वस्तुतस्तु दण्डत्वसामानाधिकरण्येन रक्तत्वनिर्णयदशायामेव दण्डत्वावच्छेदेन रक्तत्वं तत्सामानाधिकरण्यमात्रेण च रक्तत्वाभावमवगाहमानात्संशयात् दण्डत्वसामानाधिकरण्येन रक्तत्वावगाहिरक्तदण्डवान्नवेति विशिष्टसंशय उत्पद्यते तथाविधनिर्णयस्य तादृशरक्तत्वाभावकोटिकसंशयाविरोधितया तयोरेकदा सत्त्वमविरुद्धम्, एवं च दण्डत्वावच्छेदेन रक्तत्वाभावकोटिकसंशयाधीनो रक्तदण्डवान्नवा पुरुष इत्याकारकसंशयोऽसिद्ध एव । एवं दण्डत्वावच्छेदेन रक्तत्वावगाही विशेषणसंदेहाधीनस्तथाविधसंशयोऽपि तथेत्येव साधीयः, दण्डत्वावच्छेदेन रक्तत्वनिर्णये पुरुषत्वावच्छेदेन रक्तदण्डवत्तानिर्णयस्यापि संभवात् । दण्डवान्पुरुष इत्येतादृशनिर्णयदशायां विशिष्टसंशयविरोधिविशेषदर्शनसमवधानसंभवान्न विशिष्टसंशयसंभव इति दण्डत्वावच्छेदेन रक्तत्ववत्तानिर्णयविरोधी रक्तत्वसंशयस्तत्र नोत्पद्यते इति बोध्यम् ।

यत्तु तादृशविशिष्टसंशये नोभयधर्मविशिष्टदण्डादिवैशिष्ट्यं भासते अपि तु केवलं रक्तत्वादिविशिष्टवैशिष्ट्यावगाहित्वमेव तस्येति । तदसत् । तथासति रक्तपटवान् पुरुष इत्यादिनिर्णयदशायामप्यनुभूयमानस्य दण्डधर्मिकरक्तत्वसंशयाहितपुरुषधर्मिकरक्तत्वविशिष्टदण्डसंशयस्यापलापापत्तेः शुद्धरक्तत्वावच्छिन्नप्रतियोगिताकाभावकोटिकसंशये रक्तपटवानित्यादिनिर्णयस्यापि विरोधित्वात् ।

केचित्तु तद्धर्मविशिष्टप्रतियोगिविशेषिताभावलौकिकप्रत्यक्षस्यैव तद्विशिष्टवैशिष्ट्यावगाहित्वनियमः, 'प्रतियोगिविशेषिताभावज्ञानं तु विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेत' इति दीधितिग्रन्थोऽपि लौकिकप्रत्यक्षपर एव, एवं च विशेषणसंदेहाहितविशिष्टसन्देहे विशिष्टाभाव उपनीत एव भासते न तु तदंशे तस्य लौकिकत्वमुपेयते तत्संशयानन्तरं साक्षात्कारित्वरूपेण तद्विशेषिताभावावगाहिनोऽनुव्यवसायस्य केनाप्यनभ्युपगमात्, अतस्तत्र केवलं विशेष्ये विशेषणमिति रीत्यैव दण्डत्वादिविशिष्टप्रतियोग्यभावांशे भासत इति वदन्ति । तदपि न श्रद्धेयम्–तादृशसंशये रक्तत्वादेः प्रतियोग्यंशे उपलक्षणतया भानोपगमे तस्य शुद्धदण्डत्वावच्छिन्नप्रतियोगिताकत्वेनाभावावगाहितया शुद्धदण्डत्वादिना दण्डादिमत्तानिर्णयप्रतिबध्यतापत्तेः, रक्तत्वादिवत् दण्डत्वादेरप्युपलक्षणतया भानोपगमे रक्तदण्डवान् पुरुष इत्यादिनिर्णयस्यापि तदप्रतिबन्धकतापत्तेः, रक्तत्वादण्डत्वाद्युपलक्षितरक्तदण्डादिप्रतियोगिकत्वस्य रक्तदण्डाद्युभयाभावादिसाधारणतया तादृशप्रतियोगित्वावगाहिनोऽभाववत्ताज्ञानस्य रक्तदण्डत्वादिविशिष्टप्रतियोगिमत्तानिर्णयाप्रतिबध्यत्वात् । एवं प्रतियोगि-

कोटौ उपलक्षणविधया यदि कश्चिद्भाव उपनीतज्ञाने भासते तदा धूमादिहेत्वंशे उपलक्षणतया पक्षधर्मत्वावगाहिनः पक्षधर्मधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमित्याकारकस्य धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावावगाहिव्यापकतापरामर्शस्यानुमितिहेतुतासम्भवात्, यत्र पर्वतवृत्तिधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावः साध्यतावच्छेदके न गृहीतः अपि तु धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपशुद्धधूमत्वावच्छिन्ननिरूपितव्यापकतावच्छेदकत्वमेव तत्रानुमित्यनुपपत्तिरूपदूषणेन दीधितिकृतां व्यापकतापरामर्शहेतुतावादिमतखण्डनस्यासङ्गत्यापत्तेश्चेत्यस्मदुक्तसमाधानमेव सम्यक्।

अथ विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुत्वे दण्डो रक्तो नवेति संशयानन्तरं रक्तदण्डं सन्देह्मीत्याकारकविशिष्टवैशिष्ट्यावगाहिसंशयानुव्यवसायानुपपत्तिः। न च तत्र विशेष्ये विशेषणमिति रीत्यैव रक्तदण्डत्वादिविशिष्टदण्डादि ज्ञानांशे विषयितासम्बन्धेन भासत इति वाच्यम्। तथासति निर्विकल्पकोपस्थितरक्तत्वादिना विशेषितं दण्डादिकं विषयीकृत्य रक्तदण्डज्ञानामीत्याकारकस्य ज्ञानानुव्यवसायस्योत्पादप्रसङ्गादित्याशङ्काप्युक्तरीत्यैव निरसनीया, अत्रापि तुल्यकक्षतादृशविशेषणद्वयविशिष्टवैशिष्ट्यावगाहित्वस्यैव ज्ञानांशे स्वीकारात्।

केचित्तु तादात्म्यसंबन्धेन दण्डत्वाद्यवच्छिन्नविशेष्यकरक्तत्वादिप्रकारकज्ञानस्य रक्तत्वादिविशेषितदण्डादिप्रकारतानिरूपितविशेष्यतासंबन्धेनानुव्यवसायं प्रति हेतुत्वकल्पनमावश्यकम्, अन्यथा यत्र दण्डो रक्त इत्याकारकप्रत्यक्षात्मकं विशेषणतावच्छेदकप्रकारकज्ञानं तदनन्तरं च दण्डांशे रक्तत्वाप्रकारकं दण्ड इत्याकारकं स्मरणं तदनन्तरं च रक्तदण्डं स्मरामीत्याकारकस्मरणानुव्यवसायस्य प्रसङ्गात्, एवं च केवलं विशेष्ये विशेषणमितिरीत्या रक्तत्वादिविशेषितदण्डादिविशेषणकज्ञानभानोपगमेऽपि रक्तत्वादिनिर्विकल्पकस्थले दर्शितातिप्रसङ्गाभाव इत्याहुः।

परे तु दण्डादिधर्मिकरक्तत्वादिप्रकारकज्ञानस्य रक्तत्वादिविशेषितदण्डादिविषयकत्वेनानुव्यवसाये न भानम्, धर्मिणो विशेषणवत्ताया अनुव्यवसायेन ग्रहणे प्रामाण्यस्य स्वतोग्राह्यतापत्तेरिति रक्तत्वेन दण्डं सन्देह्मीत्याद्याकारकज्ञानांशे प्रकारतासम्बन्धेन रक्तत्वप्रकारक एव तादृशो नाऽनुव्यवसाय इति प्राहुः।

अथ रक्तदण्डवानित्यादिविशिष्टवैशिष्ट्यबोधे दण्डत्वाद्यवच्छिन्नध-

र्मिकरक्तत्वादिप्रकारकज्ञानत्वेनैव हेतुताऽस्तु किं गुरुशरीरनिर्णयत्वनिवे-
शेन, दण्डो रक्तो नवेति संशयानन्तरं रक्तत्वविशिष्टदण्डवैशिष्ट्याव-
गाहिज्ञानानुत्पादस्य विवादग्रस्तत्वात् इति चेत्। न, संशयसाधारण-
ज्ञानस्य विशिष्टवैशिष्ट्यबोधहेतुत्ववादिनाऽप्रामाण्यशङ्कास्कन्दितज्ञानाद-
विशिष्टवैशिष्ट्यबोधोत्पादः स्वीकरणीयः अप्रामाण्यशङ्कास्कन्दितज्ञानस्य
संशयसमशीलतया निर्णयं प्रत्येव समर्थत्वात्(१),अतोऽप्रामाण्यनिर्ण-
यत्वावच्छिन्नाभावविशिष्टविशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव हेतुतोप-
गन्तव्येति विशेषणतावच्छेदकप्रकारकनिश्चयत्वापेक्षया गुरुशरीरस्यतद्वी-
याप्रामाण्यनिर्णयानास्कन्दितत्वस्य निवेशनीयतया गौरवम्,निर्णयमात्र-
स्य हेतुतावादिमतेऽप्रामाण्यज्ञानास्कन्दितनिश्चयादपि फलानुदयात् तन्म-
तेऽप्रामाण्यज्ञानत्वावच्छिन्नाभावस्यैव जनकतावच्छेदकत्वे लाघवमिति
फलितम्। न च तन्मतेऽप्रामाण्यज्ञानत्वावच्छिन्नाभावस्यैवाखण्डस्य तत्त-
द्व्यक्तित्वेनैव जनकतावच्छेदकत्वमुपगन्तव्यमिति नाप्रामाण्यनिश्चयत्वनि-
वेश इति वाच्यम्। अभावस्य तत्तद्व्यक्तित्वेन जनकत्वतदवच्छेदकत्वयोः सि-
द्धान्तविरुद्धत्वात्, तथासति अप्रामाण्यनिश्चयघटाद्यन्यतरत्वावच्छिन्नप्र-
तियोगिताकानामखण्डाभावव्यक्तीनामपि(२) तत्तद्व्यक्तित्वेन निवेशे वि-
निगमनाविरहप्रसङ्गात्। एवं विशिष्टवैशिष्ट्यबोधं प्रति निर्णयत्वेन हेतुत्वे
रक्तदण्डवानित्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति तादृशप्रत्यक्षेच्छा-
विरहविशिष्टाया रक्तत्वाभावादिसाध्यकदण्डादिपक्षकानुमितिसामग्र्या-
स्तथाविधानुमित्यादिकं प्रति तथाविधानुमितीच्छा(३)विरहविशिष्टतथा-
विधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्याश्च प्रतिबन्ध-
कत्वाकल्पनेन लाघवं,तथाविधविशिष्टवैशिष्ट्यबोधजनकनिर्णयस्य विप-
रीतनिर्णयविधया तादृशानुमित्यादिप्रतिबन्धकतया तादृशसामग्र्या
संवलनस्यैवासम्भवात्(४)। संशयसाधारणज्ञानस्य हेतुतावादिमते च
संशयघटितविशिष्टवैशिष्ट्यबोधजनकसामग्र्या सह तादृशानुमित्यादि-
सामग्र्यास्संवलनं सम्भवतीति (५)तादृशप्रतिबन्धकताकल्पनमावश्यक-
मेवेति गौरवम्।

अत्र केचित्। रक्तारक्तदण्डवान्पुरुष इत्याकारको विशेषणधर्मिक-

---

(१) कार्यं प्रति समर्थत्वात् इति मि० पु० पाठः।
(२) अनन्तव्यक्तीनामपीति मि० पु० पाठः।
(३) तद्गोचरेच्छेति मि० पु० पाठः।
(४) सामग्र्याः प्रतिबन्धकत्वाकल्पनादिति मि० पु० पाठः।
(५) सामग्र्यास्तादृशानुमित्यादिसामग्र्याश्च संवलनसम्भवादिति मि० पु० पा

शयोऽनुभवविरुद्धः सर्वत्र संशये धर्मिणो मुख्यविशेष्यतयैवानुभवात्, एवं च निश्चयस्य संशयविरोधितया विशिष्टस्य वैशिष्ट्यमितिरीत्या तादृशसंशयापत्त्यसम्भवेऽपि रक्तत्व तदभावादीनां स्वतन्त्रोपस्थितिदशायां विशेष्ये विशेषणमिति रीत्या तादृशसंशयापत्तिरस्त्येवेति विशेष्ये विशेषणमिति रीत्या रक्तत्वविशिष्टदण्डादिप्रकारकबोधे दण्डादिधर्मिकरक्तत्वादिप्रकारकसंशयस्य प्रतिबन्धकत्वं स्वीकरणीयम्, तदभावस्य कार्यसहभावेन हेतुत्वात्पूर्वक्षणे तत्सत्त्वेपि(१)कार्यकालेऽसत्त्वान्न तथाविधसंशयापत्तिः, इत्थं च तादृशसंशयप्रतिध्यतावच्छेदकरक्तत्वादिप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नविशेष्यतापन्ननिष्ठप्रकारताशालित्वस्य रक्तदण्डवानित्यादिविशिष्टवैशिष्ट्यबोधसाधारणतया संशयानन्तरं तथाविधविशिष्टवैशिष्ट्यबोधापत्त्यसम्भवात् तज्जनकतावच्छेदके निर्णयत्वस्यानिवेशेपि न क्षतिः ।

अथ यत्र दण्डो रक्तो नवा इति संशयानन्तरं द्वितीयक्षणे दण्डो रक्त इत्याकारकस्मरणात्मकनिश्चयस्तद्द्वितीयक्षणे विशिष्टवैशिष्ट्यविषयताशालिरक्तदण्डवानितिज्ञानोपपत्तये विशिष्टवैशिष्ट्यानवगाहित्वमवश्यं तादृशप्रतिबध्यतावच्छेदककोटौ निवेशनीयमिति कथं तादृशसंशयप्रतिबध्यतावच्छेदकस्य विशिष्टवैशिष्ट्यबोधसाधारण्यम् । न च विशिष्टवैशिष्ट्यानवगाहित्वस्य संशयाभावजन्यतावच्छेदकत्वे विशिष्टवैशिष्ट्यबोधोत्पत्तिदशायां संशयाभावरूपकारणवशाद्विशिष्टवैशिष्ट्यानवगाहिज्ञानत्वावच्छिन्नापत्तिरिति संशयप्रतिबन्धकतायां निश्चयमुत्तेजकीकृत्यैव दर्शितस्थले रक्तदण्डवानितिज्ञानोत्पाद इति वाच्यम् । संशयप्रतिबन्धकतायां निर्णयस्योत्तेजकत्वे निश्चयाभावविशिष्टसंशयस्य तद्विशिष्टस्य तादृशाभावस्य वा प्रतिबन्धकत्वे विनिगमकविरहेण प्रतिबन्धकताबाहुल्यस्यावच्छेदकगौरवस्य च प्रसङ्गात् संशयप्रतिबध्यतावच्छेदके विशिष्टवैशिष्ट्यानवगाहित्वनिवेशस्य तदवच्छिन्नं प्रति निर्णयत्वेन प्रतिबन्धकत्वस्य च स्वीकारात् ।

वस्तुतो विशिष्टवैशिष्ट्यानवगाहित्वं न संशयप्रतिबध्यतावच्छेदकमुच्यते किन्तु रक्तत्वविशिष्टप्रतियोगिताकत्वानवच्छिन्नसंसर्गतानिरूपकीभूता या रक्तत्वप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नविशेष्यतापन्नवृत्तिप्रकारता तच्छालित्वं, संशयानन्तरोत्पन्ननिश्चयद्वितीयक्षणोत्पन्नरक्तदण्डवानिति बोधे च न तथाविधदण्डप्रकारतेति न तदनुपपत्तिः । संशयशून्यकालीनविशिष्टवैशिष्ट्यबोधे च रक्तत्वादिविशिष्टप्रतियोगिकत्वावच्छिन्ना तदनवच्छिन्ना च संयोगनिष्ठसंसर्गता स्वीक्रियते द्विविध-

---

(१) रक्तत्वतदभावकोटिकसंशयसत्त्वेपीति मि० पु० पाठः ।

सांसर्गिकविषयताया विरुद्धत्वे मानाभावात्। विशिष्टवैशिष्ट्यबोधे विशेषणीयप्रकारताया: विशेषणान्तरविशिष्टतत्तद्विशिष्टपर्याप्ततया विशेषणान्तरावच्छिन्नतया वा वैलक्षण्यमते रक्तत्वादिनिरूपितविशेष्यतयाऽवच्छिन्नातद्भिन्ना वा रक्तत्वावृत्ती रक्तत्वानवच्छिन्ना वा या प्रकारता सा संशयप्रतिबध्यतावच्छेदके निवेशनीया न तु तत्तद्विशेषणसंसर्गताविशेषनिरूपकत्वमपि, संशयानुत्तरबोधे च द्विविधप्रकारता स्वीक्रियते अविरोधात्, तथाच निरुक्तसंशयाभावजन्यतावच्छेदकावच्छिन्नोत्पत्तिस्तत्र इष्टैवेति न दोष इति चेन्न।

संशयानन्तरनिश्चयोत्पत्तिस्थले तद्वद्वितीयक्षणे संशयविनाशे तृतीयक्षण एव रक्तदण्डवानितिबोधः स्वीक्रियते क्षणैकापलापे क्षतिविरहात्, तथाच विशिष्टवैशिष्ट्यबोधत्वव्यापकस्याविशेषितरक्तत्वप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नप्रकारताशालिज्ञानत्वस्यैव संशयप्रतिबध्यतावच्छेदकत्वसम्भवात्संशयप्रतिबन्धकतायामप्रामाण्यज्ञानाभावो न निवेशनीयः, अप्रामाण्यज्ञानास्कन्दितसंशयस्थलेऽपि तादृशसंशयनाशानन्तरमेव|रक्तदण्डवानिति बोधोपगमात्, अतोऽप्रामाण्यग्रहदशायां न रक्तारक्तदण्डवानित्याकारकज्ञानापत्तिः, न वा रक्तत्वाभावांशेऽप्रामाण्यग्रहास्कन्दितसंशयाद्रक्तदण्डवानित्यादिविशिष्टवैशिष्ट्यबोधानुपपत्तिः।

यत्तु—संशयस्य विशेष्ये विशेषणमितिरीत्या बोधे रक्तत्वप्रकारकदण्डत्वाद्यवच्छिन्नविशेष्यकज्ञानत्वेनैव प्रतिबन्धकता न तु रक्तत्वतदभावोभयप्रकारकदण्डत्वावच्छिन्नविशेष्यकज्ञानत्वरूपसंशयत्वेन दण्डत्वावच्छिन्नविशेष्यकरक्तत्वाभावप्रकारकज्ञानत्वेन वा गौरवात्, तथाच विशिष्टवैशिष्ट्यबोधव्यावृत्तधर्मोऽवश्यं प्रतिबध्यतावच्छेदको वाच्यः, अन्यथा विशिष्टवैशिष्ट्यबोधविलयप्रसङ्गात्—इति।

तदसत्, रक्तत्वप्रकारकज्ञानत्वेन प्रतिबन्धकत्वे रक्तदण्डवानित्येतादृशज्ञानोत्पत्तिकाले तदवच्छिन्नाभावासत्त्वेन तदभावस्य कार्यसहभावेन हेतुत्वासम्भवात् रक्तारक्तदण्डवानित्येतादृशज्ञानस्य दुर्वारत्वात्। अथ रक्तारक्तदण्डवानित्येतादृशज्ञानानुत्पादस्य विवादग्रस्ततया संशयप्रतिबन्धकत्वमेवासिद्धमिति चेन्न। दण्डो रक्तो नवेतिसंशयस्य रक्तदण्डवानित्येतादृशज्ञानप्रतिबन्धकत्वे दण्डपक्षकरक्तत्वाभावहेतुकानुमितिरक्तत्वाभावविशिष्टदण्डपक्षकानुमित्यादिसामग्र्या रक्तदण्डवानित्यादिलौकिकप्रत्यक्षे प्रतिबन्धकत्वाकल्पनात् लाघवादेव तत्सिद्धेः संशयस्य दण्डत्वावच्छिन्नधर्मिकरक्तत्वाभावप्रकारकज्ञानत्वेनैव प्रतिबन्धकत्वोपगमात् तादृशसाम-

ग्रीकाले तथाविधज्ञानत्वावच्छिन्नसत्ताया आवश्यकत्वात् तादृशप्रतिब-
ध्यप्रतिबन्धकभावकल्पने तादृशसामग्रीप्रतिबन्धकताया अफलत्वात् । यत्र
च भिन्नेन्द्रियादिजन्यं दण्डो न रक्त इत्याकारकनिर्णयात्मकज्ञानं तत्र
तन्नाश एव रक्तत्वांशे लौकिकमपि रक्तदण्डवानितिज्ञानं स्वीक्रियतेऽतो
नोक्तरूपेण प्रतिबन्धकत्वानुपपत्तिरिति वदन्ति ।

अत्रोच्यते । रक्तदण्डवानित्येतादृशज्ञानं प्रति उक्तसंशयस्य प्रतिबन्ध-
कत्वे भिन्नविषयकानुमित्यादिकं प्रति तादृशप्रत्यक्षेच्छाविशिष्टप्रत्यक्षसा-
मग्रीप्रतिबन्धकतायां तथाविधसंशयाभावनिवेशाधिक्यात् गौरवम्, ता-
दृशसंशयस्य दर्शितबाधसाधारणरूपेणाभावनिवेशे दण्डो न रक्त इत्ये-
तादृशबाधाभावस्य तत्रानिवेशाल्लाघवमिति तु न सम्भवदुक्तिकम्, इच्छा-
काले बाधसत्त्वेऽपि आहार्यप्रत्यक्षोत्पत्त्या इच्छाविशिष्टप्रत्यक्षसामग्रीप्रति-
बन्धकतायां बाधाभावस्य समाप्यनिवेशनीयत्वात् । यदि च बाधबुद्धा-
विव संशयेऽपि इच्छाया उत्तेजकत्वं स्वीक्रियते तदेच्छाकालीनसंशयाद्वि-
शिष्टवैशिष्ट्यबोधापत्तिरिति तन्निर्णयत्वेन हेतुत्वमावश्यकमेव, एवमित-
रांशे विशेषणतापन्नस्यापि संशयधर्मितया भानं भवत्येव, अन्यथा पक्षेसा-
ध्यसन्देहदशायामनुमित्युपपादनाय संशयसाधारणव्यभिचारज्ञानप्रतिब-
न्धकतायां प्राचां साध्याभावांशे निश्चयत्वनिवेशनस्यासङ्गत्यापत्तेः, व्य-
भिचारज्ञानस्याधेयत्वांशे विशेषणतापन्नेऽधिकरणे साध्याभावसंशयायो-
गादिति रक्तारक्तदण्डवानितिबोधवारणाय संशयप्रतिबन्धकत्वमयुक्त-
मेव । यदि च—रक्तारक्तदण्डवानित्यादिबोधवारणाय माभूत्संशयः प्रति-
बन्धकः, तदाप्युक्तसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवानुरोधेन सं-
शयस्य प्रतिबन्धकत्वं कल्प्यमेव। यच्चोक्तं संशयप्रतिबन्धकतामते इच्छावि-
शिष्टरक्तदण्डवानित्यादिप्रत्यक्षसामग्रीप्रतिबंधकतायां संशयाभावनिवेशा-
धिक्यात् गौरवमिति, तदप्यकिंचित्करम्, सिद्ध्यभावबाधाभावतदभाव-
व्याप्यवत्ताज्ञानाभावादिरूपबहुतरकारणघटितोक्तानुमितिसामग्र्या रक्त-
दण्डवानित्येतादृशप्रत्यक्षप्रतिबन्धकत्वाधिक्यापेक्षया इच्छाविशिष्टतादृ-
शप्रत्यक्षसामग्र्यां संशयाभावनिवेशस्यैवोचितत्वात्-इति विभाव्यते, तदापि
व्याप्त्यादिरूपातीन्द्रियधर्मविशिष्टविशेषणकबोधे तादृशसंशयस्य प्रतिबन्ध-
कत्वं निर्युक्तिकमेव विशेषणधर्मिकतादृशधर्माभावप्रकारकज्ञाननियतानु-
मितिसामग्रीकाले तादृशधर्मविशिष्टवैशिष्ट्यावगाहिज्ञानप्रतिबन्धकबाध-
सत्ताया आवश्यकत्वात् तत एव तथाविधप्रत्यक्षवारणसम्भवात्, तत्र
केनापि तादृशसामग्रीप्रतिबन्धकत्वाकल्पनात् अतीन्द्रियधर्मप्रकारकलौ-
किकप्रत्यक्षं न सम्भवत्येव, येन भिन्नेन्द्रियादिजन्यतदभावप्रकारकज्ञान-

घटितोक्तसामग्रीकाले तदापत्तिः स्यादिति तादृशस्थलीयविशिष्टवैशिष्ट्य-बोधे निश्चयत्वेन हेतुत्वमावश्यकमेव, तावतैवानुमितिलक्षणस्य विशि-ष्टवैशिष्ट्यबोधातिव्याप्तिशङ्का दीधितिकृतः संगच्छते। न च व्याप्त्यादिवि-शिष्टधूमादिविशेषणकबोधे धूमादिधर्मिकव्याप्त्यादिसंशयस्य तद्धर्मिक-तदभावप्रकारकज्ञानत्वेन प्रतिबन्धकत्वे व्याप्त्यभावप्रकारकधूमादि-विशेष्यकशाब्दबोधसामग्र्यास्तादृशप्रत्यक्षप्रतिबन्धकत्वाकल्पनेन लाघव-म्, तादृशशाब्दबोधसामग्रीकाले तादृशाभावप्रकारकतद्विशेष्यकयोग्यता-ज्ञानस्यावश्यकत्वात्, भवतान्तु तत्र तादृशसामग्रीप्रतिबन्धकत्वकल्पनमा-वश्यकम्, अन्यथा संशयात्मकयोग्यताज्ञानघटिततादृशशाब्दसामग्रीकाले तथाविधप्रत्यक्षस्य दुर्वारत्वादिति वाच्यम्। शाब्दबोधं प्रति योग्यता-ज्ञानहेतुताया निर्युक्तिकत्वात् तादृशशाब्दसामग्रीप्रतिबन्धकताया मतद्वय एवावश्यकत्वात्। योग्यताज्ञानहेतुतामते तु रक्तत्वादिविशेषितदण्डादि-विशेषणकबोधे रक्तत्वादिसंशयस्य न प्रतिबन्धकत्वं खले कपोतन्यायेन ता-दृशशाब्दबोधे दण्डो रक्तो नवेति योग्यतासंशयस्य हेतुत्वात् प्रत्यक्षत्वस्य प्रतिबध्यतावच्छेदकत्वेऽपि न कार्यसहभावेन तत्प्रतिबन्धकत्वसम्भवः। रक्तत्वांशे संशयाकारतद्विशेषितदण्डादिसंशयस्य योग्यताज्ञानविधया ता-दृशशाब्दबोधहेतुताया आवश्यकत्वात् दण्डे रक्तत्वनिर्णयस्य प्रागसत्त्वेऽपि तादृशशाब्दबोधस्य सर्वानुभवसिद्धत्वात्। न च दण्डो रक्तो नवा पुरुषो दण्डी नवेतिसंशयद्वयात् समूहालम्बनरूपैकसंशयाद्वा तादृशशाब्दबो-धो भविष्यतीति वाच्यम्। रक्तदण्डाभाववानित्यादिनिश्चयकाले त-थाविधसंशयस्य रक्तो दण्डः पुरुषो दण्डीति निर्णयस्य च सम्भवेन तदानीं तादृशशाब्दबोधातिप्रसङ्गवारणाय तत्र पुरुषविशेषणतापन्नदण्डां-शे रक्तत्वादिप्रकारस्य समूहालम्बनविलक्षणयोग्यताज्ञानस्य हेतुताया आवश्यकत्वात्।

वस्तुतस्तु दण्डत्वधूमत्वाद्यवच्छिन्नधर्मिकरक्तत्वाभावव्याप्त्यभावादि-प्रकारकज्ञाननियतानुमितिशाब्दबोधसामग्रीकाले रक्तत्वादिव्याप्त्यादिवि-शिष्टद्रव्यत्वावच्छिन्नविशेषणकप्रत्यक्षवारणाय तत्र तादृशसामग्रीणां प्रतिब-न्धकतायाः सर्वैरेव कल्पनीयतया तत्रैव प्रतिबध्यतावच्छेदके विशिष्य र-क्तत्वव्याप्त्यादिधर्मितावच्छेदकधर्माननिवेश्य सामान्यतः प्रतिबध्यप्रतिब-न्धकभावकल्पनेनैवोपपत्तेः रक्तदण्डवान्वह्निव्याप्यधूमवानित्यादिप्रत्यक्षे तादृशसामग्रीप्रतिबन्धकताधिक्यमस्माकमपि। न च रक्तत्वविशिष्टद्रव्य-त्वावच्छिन्नप्रकारताकप्रत्यक्षं जायतामित्येतादृशेच्छाकालेऽसत्यां तादृशप्र-त्यक्षसामग्र्यामुक्तसामग्रीकाले रक्तदण्डवानित्यादिप्रत्यक्षवारणाय इच्छा-

विशेषान् विशिष्योत्तजकीकृत्य द्रव्यत्वदण्डत्वादिरूपधर्मितावच्छेदकभेदेन भिन्नभिन्नप्रतिबन्धकताकल्पनमावश्यकमिति वाच्यम्। उक्तसामग्रीविशिष्टस्य स्वीयप्रत्यक्षनिष्ठविशेष्यतानिरूपिता या रक्तत्वप्रकारतानिरूपितप्रकारता तन्निरूपितावच्छिन्नत्वनिष्ठावच्छेदकतावच्छेदकत्वरूपद्रव्यत्वादिनिष्ठसम्बन्धावच्छिन्नप्रतियोगिताकेच्छाभावस्य रक्तत्वधर्मितावच्छेदकधर्मनिष्ठप्रत्यासत्त्या रक्तत्वविशिष्टप्रकारकबोधम्प्रतिताद्रृशधर्मान् विशिष्यानिवेश्यैव प्रतिबन्धकताकल्पनात्।

यत्तु—माभूद्विशेष्ये विशेषणमिति रीत्या बोधम्प्रति संशयः प्रतिबन्धकः तथापि रक्तदण्डवानित्यादिबोधम्प्रति दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वाद्यभावप्रकारताशालिज्ञानत्वेन दण्डो रक्तो नवेतिसंशयस्य प्रतिबन्धकता कल्प्येत, ताद्रृशरक्तत्वाभावप्रकारताशून्यतथाविधरक्तत्वप्रकारताशालिज्ञानत्वरूपनिर्णयत्वेन हेतुत्वे ताद्रृशप्रकारताशून्यत्वताद्रृशप्रकारताशालित्वज्ञानत्वानां त्रयाणां विशेषणविशेष्यभावे विनिगमनाविरहेण षट्कारणताकल्पनापतेः, अस्मन्मते रक्तत्वाभावप्रकारताशालित्वज्ञानत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण संशयाभावस्य कारणताद्वयम्, रक्तत्वप्रकारताशालित्वज्ञानत्वयोस्तथात्वेऽपि विनिगमनाविरहाद्दण्डो रक्त इत्येताद्रृशज्ञानस्य कारणताद्वयमिति चतुष्टयमात्रकल्पनात्। अथ रक्तत्वाभावप्रकारकज्ञानस्यात्मनिष्ठप्रत्यासत्त्या प्रतिबन्धकत्वे कायव्यूहस्थले एकस्मिन्नेवात्मनि शरीरान्तरावच्छेदेन दण्डो रक्तो नवेति संशयसत्त्वेऽपि(१)शरीरान्तरावच्छेदेन रक्तदण्डवानितिबोधोत्पत्त्या व्यभिचार इति तत्तच्छरीरनिष्ठप्रत्यासत्त्या तथात्वे च परपुरप्रवेशस्थले तच्छरीरावच्छेदेनाभिभाव्यसंशयसम्बन्धेऽपि तदवच्छेदेनाभिभावकस्यात्मनि विशिष्टवैशिष्ट्यबोधोत्पत्त्या व्यभिचार इति तच्छरीरावच्छिन्नत्वं निवेश्यात्मनिष्ठ(२)प्रत्यासत्त्या तस्य प्रतिबन्धकता वाच्येति अनन्तशरीरभेदेन प्रतिबन्धकताभेदाद्गौरवम्, मन्मते समवायावच्छेदकत्वघटितसामानाधिकरण्योभयसम्बन्धेन रक्तत्वप्रकारकज्ञानहेतुतायां ताद्रृशाभावप्रकारताशून्यत्वनिवेशाद्विनिगमनाविरहेण तस्य कतिपयकारणतावृद्धावपि लाघवस्यानपायात्, विशेषणतावच्छेदकप्रकारकज्ञानहेतुतायां शरीरविशेषावच्छिन्नत्वानिवेशे कायव्यूहवत्यात्मनि एकशरीरावच्छेदेन ताद्रृशज्ञानसत्त्वे तदीयान्यशरीरावच्छेदेनाभिभावकान्तरे ताद्रृशज्ञानासत्त्वे च ताद्रृशशरीरावच्छेदेन तदात्मनि विशिष्टवैशिष्ट्यबोधापत्तेः प्रागुक्तदिशा वारणासम्भवेन तत्र

(१) दण्डत्वावच्छिन्नविशेष्यकरक्तत्वाभावप्रकारकज्ञानसत्त्वेपीति मि० पु० पाठः।
(२) तत्तच्छरीरावच्छिन्नत्वं निवेश्यात्मनिष्ठेति मि० पु० पाठः।

तन्निवेशादिति चेन्न। अस्तु संशयप्रतिबन्धकतायां शरीरविशेषावच्छि-न्नत्वनिवेशात्तद्भेदेन भेदः। तथाप्येतन्मतापेक्षया संशयभेदस्य कारणता-वच्छेदकत्वमते रक्तदण्डवान् रक्तदण्डवत्पुरुषवान् रक्तदण्डिमद् भूतलमि-त्याद्यनन्तविधविशिष्टवैशिष्ट्यबोधहेतुतावच्छेदककोटौ रक्तत्वाद्यभावप्र-कारकैकविधसंशयभेदस्य निवेशनीयतया भवन्मते गौरवं रक्तदण्डवत्पु-रुषवानित्यादिबोधजनकतायान्तदनिवेशे रक्तत्वांशे संशयात्मकदण्डाद्यंशे निर्णयात्मकरक्तत्वविशिष्टदण्डादिप्रकारकज्ञानात्तथाविधविशिष्टवैशिष्ट्य-बोधापत्तेः। विशेषणतावच्छेदकतावच्छेदकाद्यंशेऽपि निर्णयात्मकादेव ज्ञा-नात्तदवच्छिन्नविशेषणतावच्छेदकताकविशिष्टवैशिष्ट्यबोधोत्पत्त्या तत्रेष्टा-पत्तेरयोगात्। अत एवानुमितिजनकतायामिव वह्निव्याप्यधूमवत्पर्वतवा-निस्त्यादिविशिष्टवैशिष्ट्यबोधजनकतायामपि व्याप्त्यंशे निश्चयत्वनिवेशात्त-त्रानुमितिलक्षणातिव्याप्तिराशङ्किता(१) दीधितिकारेण। न च रक्तत्वप्रकार-कनिर्णयजन्यतावच्छेदकीभूतरक्तदण्डवानित्येतादृशबोधनिष्ठरक्तत्वविशि-ष्टवैशिष्ट्यावगाहिज्ञानत्वस्य रक्तत्वविशिष्टदण्डविशिष्टपुरुषवैशिष्ट्याव-गाहिज्ञानत्वावच्छिन्नतादृशयावद्विशिष्टवैशिष्ट्यबोधसाधारणतया रक्त-त्वांशे संशयात्मकज्ञानसत्त्वे न तादृशविशिष्टवैशिष्ट्यबोधापत्तिरुक्त-कारणविरहादिति वाच्यम्। रक्तत्वविशिष्टवैशिष्ट्यावगाहित्वस्य रक्तदण्डवत्पुरुषवानित्यादिबोधत्वव्यापकत्वेऽपि यत्र रक्तत्वांशे सं-शयात्मकरक्तारक्तदण्डवान् पुरुष इत्यादिज्ञानोत्तरं रक्तो दण्ड इति स्म-रणात्मकनिश्चयस्तदुत्तरं तथाविधबोधापत्तेर्दुर्वारत्वात्, अस्मन्मते तु तथाविधसकलबोधसाधारणरक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिज्ञानत्वा-वच्छिन्नं प्रति तथाविधसंशयस्यैकप्रतिबध्यप्रतिबन्धकभावेनैवोपपत्तिरि-ति। न च रक्तदण्डवत्पुरुषवानित्यादिबोधे रक्तत्वविशिष्टदण्डवैशि-ष्ट्यावगाहिज्ञानत्वेनैव हेतुता रक्तत्वांशे संशयात्मकज्ञानस्य न रक्तत्ववि-शिष्टदण्डादिवैशिष्ट्यावगाहिज्ञानत्वमिति न तदंशे निश्चयत्वनिवेशनं कस्यापि सम्भवतीति वाच्यम्। संशयस्याप्रतिबन्धकतामते दण्डो रक्त इति निर्णयानन्तरमिच्छावलाद्दण्डे रक्तत्वाभावावगाहिनो रक्तत्वांशे संशयात्मकरक्तदण्डवत्ताज्ञानस्य रक्तत्वविशिष्टदण्डादिवैशिष्ट्यावगा-हित्वे बाधकाभावात्। वस्तुतस्तु कायव्यूहस्थले एकस्मिन्नात्मनि-एकशरीरावच्छेदेन संशयसत्त्वे शरीरान्तरावच्छेदेन विशिष्टवैशिष्ट्यबो-धोत्पत्तावपि प्रमाणाभावात् शरीरविशेषावच्छिन्नत्वमनन्तभाव्यैवात्मनि-ष्ठप्रत्यासत्त्या संशयस्य प्रतिबन्धकत्वं कल्पनीयमिति न संशयस्य

(१) शंका निराकृतेति मि० पु० पाठः।

प्रतिबन्धकतामते उक्तगौरवावकाश—इति ।

तदपि न युक्तम्। विशिष्टवैशिष्ट्यबोधं प्रति संशयस्य प्रतिबन्धकत्वे-भिन्नविषयकानुमित्यादिकं प्रति विशिष्टवैशिष्ट्यबोधात्मकप्रत्यक्षेच्छाविशिष्टतादृशप्रत्यक्षसामग्रीप्रतिबन्धकतायां विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावस्य निवेशनीयतया तस्य कारणान्तरेच्छया च समं विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकताबाहुल्यप्रसङ्गात्, निश्चयत्वेन हेतुतामते सामग्रीघटकतत्प्रकारकज्ञाने विशेषणतया निविष्टस्य तदभावाप्रकारकत्वस्यान्यत्र विशेषणतया निवेशासम्भवात्। संशयस्य प्रतिबन्धकतामते निर्णयत्वावच्छिन्नस्य सामग्रीप्रतिबन्धकतायां निवेशे संशयानन्तरं निश्चयद्वितीयक्षणे तन्मतसिद्धानुमित्यादेरनुपपत्तिः। न च संशयनिर्णयेच्छानां युगपदवस्थानासम्भवेन संशयदशायामिच्छाविशिष्टविशेषणतावच्छेदकप्रकारकनिर्णयसमवधानमेव न सम्भवति इति नेयमनुपपत्तिः, अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वमते अपेक्षाबुद्धिद्वितीयक्षणे तत्समानाधिकरणविशेषगुणानुत्पत्तेः, संशयस्यापेक्षाबुद्ध्यात्मकत्वेऽपि च तेषां युगपदवस्थानस्य दुरुपपादत्वमिति वाच्यम्। ज्ञानेच्छयोर्युगपदुत्पादस्य नवीनैरुपगमात् निर्णयेच्छयोर्युगपदुत्पादस्थले एव तादृशानुपपत्तिसत्त्वात्। एवं संशयस्य प्रतिबन्धकतामते दण्डत्वसामानाधिकरण्येन रक्तत्वावगाहिनि विशिष्टवैशिष्ट्यबोधे दण्डत्वसामानाधिकरण्येन रक्तत्वाभावावगाहिज्ञानत्वेन प्रतिबन्धकत्वे सामानाधिकरण्यमात्रेण कोटिद्वयावगाहिनिर्णयात्तादृशविशिष्टवैशिष्ट्यबोधानुपपत्तिः, दण्डत्वावच्छेदेन तदभावावगाहिज्ञानत्वेन प्रतिबन्धकत्वे दण्डत्वसामानाधिकरण्येन रक्तत्वाभावं तदवच्छेदेन रक्तत्वमवगाहमानात्संशयादपि तथाविधविशिष्टवैशिष्ट्यबोधापत्तिः, रक्तत्वांशे दण्डत्वसामानाधिकरण्यमात्रावगाहिनि विशिष्टवैशिष्ट्यावगाहिबोधे तादृशज्ञानत्वेन हेतुत्वे फलीभूतज्ञाने दण्डत्वावच्छेदेन रक्तत्वभानप्रतिबन्धकदोषसमवहिताद्दण्डत्वावच्छेदेन रक्तत्वनिर्णयात् रक्तत्वे दण्डत्वसामानाधिकरण्यमात्रावगाहिविशिष्टवैशिष्ट्यबोधानुपपत्त्या तत्कल्पनेन तादृशापत्तिवारणासम्भवात्, अस्मन्मते च स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारताशून्यत्वविशिष्टत्वनिरूपकत्वसम्बन्धेन रक्तत्वप्रकारतावज्ज्ञानत्वरूपनिर्णयत्वस्य दर्शितनिर्णयसाधारणस्य दर्शितसंशयव्यावृत्तस्य जनकतावच्छेदकत्वोपगमात् नानुपपत्तिलेशोपीत्यपि वदन्ति ।

अत्र चानुद्बुद्धसंस्काराद्विशिष्टवैशिष्ट्यावगाह्यनुभववारणाय का-

रणतावच्छेदककोटौ ज्ञानत्वनिवेशनं, तथा च सत्यन्तरा विशेषणता-वच्छेदकप्रकारकस्मरणमभ्युपगम्यैव विशिष्टवैशिष्ट्यावगाहिसंस्कारात् स्मरणात्मकतादृशबोधः स्वीकरणीयः, विशिष्टविषयोपहितव्यक्तिसाक्षात्कारपूर्वं च नियमतो विशिष्टविषयस्य स्मरणं कल्पनीयम्, संस्कार-व्यावृत्तसविषयकव्यक्तिवृत्तिजातिविशेष एव वा कारणतावच्छेदकतया उपगन्तव्यः। तथाच कार्यतावच्छेदकेऽपि ज्ञानत्वन्न निवेशनीयं, विशिष्ट-प्रकारककृतौ च विशेष्ये विशेषणमितिरीत्या विषयत्वं स्वीकरणीयम्, ईश्वरज्ञाने च तदेव विषयत्वम् न तु विशिष्टवैशिष्ट्यबोधीयविलक्षणविषयत्वमपीति न नित्यसाधारणत्वं जन्यतावच्छेदकस्य, आस्तां वा जन्यप्रत्यक्षवृत्तिजातिविशेष एव तथा। यदि च यादृशादेवाप्रसिद्ध-साध्यकपरामर्शाद्विशिष्टवैशिष्ट्यावगाह्यनुमितिः स्वतन्त्रविशेषणतावच्छेदकप्रकारकज्ञानदशायामुत्पद्यते, तादृशादपि परामर्शाद्विशेषणतावच्छेदकप्रकारकज्ञानासत्त्वे केवलं विशेष्ये विशेषणमिति रीत्या साध्यविशेषणिकाया साध्यविशेष्यिकाया वाऽनुमितेरुत्पत्त्यातिप्रसङ्ग इति विभाव्यते, तदाऽनुमितित्वावच्छिन्नम्प्रत्यपि तस्य हेतुत्वान्तरमास्थेयं, शाब्दस्थले च पदजन्यस्मरणशाब्दबोधानात्मकविशेषणतावच्छेदकप्रकारकज्ञानाच्छा-ब्दविशिष्टवैशिष्ट्यावगाहिज्ञानानुत्पादेन तादृशबोधस्य पृथक् कारणताया आवश्यकत्वात् तत एवोपपत्तिः। अस्तु वा कालिकविशेषणतादैशिकविशेषणतोभयसम्बन्धेन प्रत्यक्षानुमित्यादिसाधारणं किंचिदविशेषितं विशिष्टवैशिष्ट्यावगाहित्वं जन्यतावच्छेदकमेवेति दिक्(१)।

अथ निर्विकल्पकानन्तरन्तद्विशिष्टवैशिष्ट्यबोधोपगमे क्षतिविरहाद्विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानहेतुत्वं निर्युक्तिकम्। कदाचित्तद्विशिष्टवैशिष्ट्यबोधः कदाचिच्च तदुपलक्षितवैशिष्ट्यबोधः इत्यत्रासंसर्गाग्रह एव नियामकः, तद्विशिष्टाभावाद्यग्रहदशायां तत्प्रकारकज्ञानासत्त्वे इव तन्निर्विकल्पकादपीष्यत एव नियमतस्तद्विशिष्टवैशिष्ट्यबोधः यत्र विशिष्टवैशिष्ट्यं वस्तुतो बाधितं तादृशविषयबोधस्थले च तज्ज्ञानतत्तद्दोषाणां नियामकतया कदाचित्केवलतदुपलक्षितवैशिष्ट्यबोधोऽप्युपपद्यते। तद्धर्मप्रकारकज्ञानवति तादृशस्थले विशिष्टांशे भ्रमस्य कदाचिदेव उत्पत्त्या दोषस्य तन्नियामकताया भवतोऽप्यावश्यकत्वात् इति चेन्न।

विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानस्याहेतुत्वे घटत्वादिनिर्विकल्पकानन्तरं घटो नास्तीत्याकारकाभावप्रत्यक्षवारणायाभावबुद्धौ प्रतियोगितावच्छेदकप्रकारकज्ञानहेतुतायाः कल्पनीयतया गौरवात्

(१) त्वमेव जन्यतावच्छेदकमिति दिगिति मि० पु० पाठः।

एतन्मते पुनस्तादृशाभावबुद्धेः घटत्वादिविशिष्टवैशिष्ट्यावगाहितया तत्र विशेषणतावच्छेदकप्रकारकज्ञानमुद्रयैव घटत्वादिप्रकारकज्ञानस्य हेतुत्वात् उक्तापत्त्यसम्भवेन प्रतियोगितावच्छेदकप्रकारकज्ञानस्य स्वतन्त्रहेतुत्वाकल्पनात् । नचानुयोगित्वसंयोगादिसाधारणवैशिष्ट्यत्वस्यैकस्य दुर्वचतया वैशिष्ट्यानां विशिष्योपादेयतया विशिष्टनिरूपितानुयोगिताख्यवैशिष्ट्याव-गाहिन्यामभावबुद्धौ घटत्वादिप्रकारकज्ञानस्य हेतुत्वमस्तु विशिष्टनिरूपि-तसंयोगाद्यवगाहिबुद्धौ तत्तद्धेतुत्वं निर्युक्तिकमिति वाच्यम्। विशिष्टप्रतियो-गिकत्वाद्यवच्छिन्नसंसर्गताकत्वस्य विशेषणावच्छिन्नप्रकारताकत्वादेरनुग-तस्य विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकतायाः प्रागुक्तत्वात् वैशिष्ट्यभेदेन कारणताभेदाभावात् । घटवद्भूतलमित्यादिविशिष्टवैशिष्ट्य-बोधे घटत्वादिप्रकारकज्ञानस्य हेतुत्वे विशिष्टवैशिष्ट्यबोधेच्छाविशिष्टता-दृशप्रत्यक्षात्मकबोधसामग्र्या भिन्नविषयकानुमित्यादिकं प्रति प्रतिबन्धक-तायां तादृशज्ञानरूपकारणस्याधिकस्य निवेशनीयतया गौरवमिति तु ना-शङ्कनीयम्। अवन्मतेऽपि तत्र विशेषणज्ञाननिवेशेन साम्यात् । विशकलितद-ण्डरक्तत्वादिप्रकारकज्ञानदशायां रक्तदण्डो नास्तीत्याद्यभावप्रत्यक्षवार-णाय दण्डत्वादिधर्मितावच्छेदककरक्तत्वादिप्रकारकज्ञानस्य स्वतन्त्रहे-तुताकल्पनप्रयुक्तलाघवानुरोधेन विशेषणतावच्छेदकांशे सधर्मितावच्छे-दकविशिष्टवैशिष्ट्यबोधे तत्तद्धर्मितावच्छेदककविशेषणतावच्छेदकप्र-कारकज्ञानस्य हेतुतासिद्धिरपि द्रष्टव्या । एवमेव तादृशहेतुत्वाकल्पने इच्छाविशिष्टरक्तदण्डवानित्याद्युपनीतभानसामग्र्या अनुमित्यादिप्रतिब-न्धकतायामुपनायकज्ञानविधया हेतुभूतानां रक्तत्वदण्डत्वविषयकज्ञानानां रक्तत्वदण्डत्वज्ञानत्वरूपभिन्नभिन्नरूपेण निवेशनीयतया तेषां मिथो विशेषणविशेष्यभावे कारणान्तरेण सममनेकेषां तथात्वे विनिगमनाविर-हेण गौरवम् अस्माकं च तथाविधनानाज्ञाननिवेशस्थले दण्डत्वादिधर्मिता-वच्छेदककरक्तत्वादिप्रकारकैकैकज्ञानस्य निवेशनीयतया लाघवमित्यादि-बोध्यम् । विशिष्टप्रतियोगिकवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारक-विशिष्टानुयोगिकवैशिष्ट्यबोधेऽनुयोगितावच्छेदकप्रकारकज्ञानं हेतुस्त-द्धर्मनिर्विकल्पकानन्तरं तद्विशिष्टवैशिष्ट्यावगाहिज्ञानानुदयात् । तयो-स्तद्धर्मावच्छिन्नानुयोगिताकत्वावच्छिन्नसंसर्गतानिरूपकतद्धर्मावच्छि-न्नविशेष्यताशालित्वतद्धर्मप्रकारकज्ञानत्वाभ्यां कार्यकारणभावः । केवल-मेकत्रोभयमितिरीत्या धर्मितावच्छेदकविशेषणतापन्नरक्तदण्डत्वादि-बुद्धौ च वैशिष्ट्यांशे विशेष्यतावच्छेदकावच्छिन्नानुयोगिताकत्वं न भा-सतेऽतो न व्यभिचारः । यत्तु एकत्र द्वयमिति रीत्या बोधे एकविशेषणस्य

नापरविशेषणतावच्छेदकत्वं भासते, अपि तु विशिष्टानुयोगिकवैशिष्ट्य- बोधे एव, तथा च कार्यतावच्छेदककोटौ निरूपकान्तं विशेषणं नोपादेय- मिति । तन्न श्रद्धेयम् । गन्ध ।गभावोपलक्षितधर्मिणि गन्धानुमितेः तद्वि- शिष्टवैशिष्ट्यावगाहितया निर्धर्मितावच्छेदकत्वापातात् । यदि च तत्प्रका- रकज्ञानं विना विशिष्टानुयोगिकवैशिष्ट्यविषयकसद्धर्मितावच्छेदकक- बोधो न स्वीक्रियते, किन्तु तुल्यकक्षोभयविशेषणकबोध एव, तदा तद्धर्मावच्छिन्नविशेषणताकबुद्धित्वमात्रम्, संसर्गतावच्छेदकप्रकारकज्ञा- नस्य विशिष्टसंसर्गकबुद्धिपूर्वं नियमतः स्वीकारे संसर्गताया विषयता- त्वानभ्युपगमेन वा विशिष्टज्ञानसाधारण तद्धर्मावच्छिन्नविषयता- कबुद्धित्वमात्रं वा जन्यतावच्छेदकं वाच्यमनुयोगितावच्छेदकांशे सधर्मि- तावच्छेदक-चैत्रो दण्डी कुण्डली-त्यादिबोधे चैत्रत्वादिधर्मितावच्छेदक- दण्डादिप्रकारकज्ञानत्वेन हेतुता पूर्वोक्तरीत्या बोध्या । अत्र निश्चयत्व- निवेशनं पूर्ववत् । एवमधिकरणतावच्छेदकनिर्विकल्पकानन्तरमभावबु- द्ध्येर्वारणायाभावबुद्धावधिकरणतावच्छेदकप्रकारकज्ञानस्य स्वतन्त्र- हेतुत्वाकल्पनप्रयुक्तलाघवेनानुयोगितावच्छेदकप्रकारकज्ञानस्य विशि- ष्टवैशिष्ट्यबोधे हेतुत्वासिद्धिः । भूतलञ्घटवदित्यादिबुद्ध्येर्भूतलत्वावच्छि- न्नानुयोगिताकविशिष्टवैशिष्ट्यावगाहितया तत्रानुयोगितावच्छेदकप्रका- रकज्ञानमुद्रयैव भूतलत्वादिप्रकारकज्ञानस्यापेक्षितत्वात् विशिष्टप्रतियो- गिकवैशिष्ट्यबोधसाधारणतद्धर्मावच्छिन्नविषयताकबुद्धित्वस्य तत्प्रकार- कज्ञानजन्यतावच्छेदकत्वसम्भवे विशेषणतावच्छेदकविशेष्यतावच्छेदक- प्रकारकज्ञानहेतुतायाश्चैक्यादेकयुक्त्यैवोभयहेतुतासिद्धिरित्यालोचनीय- मिति दिक् ॥

इति विशिष्टवैशिष्ट्यबोधवादवीचिः(५) समाप्तः ॥ शम् ॥

---

## (६) विशेषणतावच्छेदकज्ञानहेतुतावादवीचिः ।

विशेषणतावच्छेदकप्रकारकनिर्णयशून्यकाले विशिष्टवैशिष्ट्यबोधा- पत्तिवारणाय विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुत्वं कल्प्यते। तद्धेतुता च न सामान्यतो विशिष्टवैशिष्ट्यबुद्धित्वावच्छि- न्नं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन, सर्वसाधारणविशिष्टवै- शिष्ट्यबुद्धित्वस्य विशेषणतावच्छेदकप्रकारकनिर्णयत्वस्य चैक्याभा- वात्, एकविशेषणतावच्छेदकप्रकारकज्ञानादपरविशिष्टवैशिष्ट्यबोधाप- त्तेश्च, किन्तु रक्तत्वविशिष्टदण्डादिवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नं

प्रति दण्डत्वावच्छिन्नविशेष्यताकरक्तत्वप्रकारकनिर्णयत्वेन विशिष्यैव हेतुता। न च विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या जायमानस्यापि बोधस्य रक्तत्वविशिष्टो यो दण्डस्तन्निरूपितसंयोगरूपवैशिष्ट्यावगाहितया तत्र व्यभिचार इति वाच्यम्। रक्तत्वदण्डत्वोभयावच्छिन्नप्रकारताकत्वस्यैव तदर्थत्वात्। विशेष्ये विशेषणमित्यादिक्रमेण रक्तत्वविषयकज्ञानीयदण्डादिप्रकारताया रक्तत्वानवच्छिन्नतया तत्र व्यभिचाराभावात्।

केचित्तु रक्तत्वशिष्टदण्डादौ पुरुषादिविशेष्यतानिरूपितप्रकारतायाः पर्याप्तिर्विशिष्टवैशिष्ट्यबोधस्थले स्वीक्रियते, तथाच तादृशविशिष्टपर्याप्तप्रकारताकत्वमेव रक्तो दण्ड इति निर्णयजन्यतावच्छेदकमित्युपेयते, विशेष्ये विशेषणमिति रीत्या रक्तादिविषयकज्ञाने पुरुषादिविशेष्यतानिरूपितप्रकारतायाः शुद्धदण्ड एव पर्याप्ततया न व्यभिचार इत्याहुः।

तदसत्। तथासति दण्डांशे रक्तत्वभ्रमात्मकस्य रक्तदण्डवानिति ज्ञानस्य विशिष्टवैशिष्ट्यबोधत्वात्तत्र रक्तत्वविशिष्टदण्डाभावात्, एवं लोहितवह्निमान् इत्यादिज्ञाने लौहित्यविशिष्टवह्नेरप्रसिद्ध्या अगतिरेव। न च विशिष्टाप्रसिद्धावपि खण्डशः प्रसिद्धयोर्लौहित्यवह्न्योरेव प्रकारतायाः पर्याप्तिः स्वीक्रियते, कार्यतावच्छेदकमपि लौहित्यवह्न्युभयपर्याप्तप्रकारताकत्वमेवेति नानुपपत्तिरिति वाच्यम्। पर्वतादिविशेष्यतानिरूपितप्रकारताया लौहित्यांशे स्वीकारे लौहित्याभाववान् पर्वत इत्याकारकबुद्धिदशायां लोहितवह्निमान्पर्वत इत्येतादृशविशिष्टवैशिष्ट्यबुद्ध्यनुदयापत्तेः, तन्मते लोहितवह्निमान्पर्वत इत्येतादृशविशिष्टवैशिष्ट्यबुद्धेरपि लौहित्यनिष्ठप्रकारतानिरूपितपर्वतविशेष्यताशालित्वेन तादृशबुद्धेर्विरोधित्वात्, तथाच विशिष्टवैशिष्ट्यबोधस्थले विशेषणतावच्छेदकविशेषणयोर्नैकप्रकारतापर्याप्तिः, किन्तु विशेषणनिष्ठप्रकारता विशेषणतावच्छेदकावच्छिन्नैवेति। विशेष्ये विशेषणं तत्र च विशेषणान्तरमित्यत्र तु विशेषणतावच्छेदकप्रकारतानिरूपितैव विशेषणप्रकारता, न तु विशेषणतावच्छेदकावच्छिन्नैवेति तयोर्भेदः।

अथ रक्तत्वदण्डत्वोभयधर्मावच्छिन्नप्रकारताकत्वस्य दण्डो रक्त इति निर्णयजन्यतावच्छेदकत्वेऽपि रक्तत्वधर्मितावच्छेदककदण्डत्वप्रकारकनिर्णयजन्यदण्डरक्तवानितिविशिष्टवैशिष्ट्यबोधे व्यभिचारो दुर्वारः, तत्रापि दण्डनिष्ठप्रकारताया दण्डत्वरक्तत्वोभयावच्छिन्नत्वात्। न च रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालित्वस्य तादृशनिर्णयजन्यतावच्छेदके प्रवेशात् न व्यभिचार इति वाच्यम्। तादृशबोधेनैव यत्र

विशेष्ये विशेषणमिति न्यायेन दण्डत्वावच्छिन्ने रक्तत्वं विषयीकृतं तत्र तादृशसमूहालम्बने च व्यभिचारस्य तावतापि दुर्वारत्वादिति चेन्न।

रक्तदण्डवानित्येतादृशज्ञानीयतादृशोभयधर्मावच्छिन्नदण्डप्रकारताया एव रक्तत्वप्रकारतानिरूपितविशेष्यतास्वरूपत्वाभ्युपगमात्। रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताभिन्नप्रकारताया एव दण्डो रक्त इत्येतादृशनिर्णयजन्यतावच्छेदकत्वाभ्युपगमेन व्यभिचारानवकाशात्, तादृशसमूहालम्बनबोधीयोभयधर्मावच्छिन्नविषयताया दण्डत्वप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यतारूपाया रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताभिन्नत्वात्। न च रक्तत्वावच्छिन्नप्रकारताया रक्तत्वप्रकारतानिरूपितविशेष्यतारूपत्वेन रक्तदण्डवानिति बोधस्य रक्तत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वप्रकारताशालित्वप्रसङ्गः, तथा च तादृशज्ञानाद्रक्तत्वावच्छिन्नविशेष्यकरक्तत्वप्रकारक-रक्तो रक्त-इत्याकारकस्मरणापत्तेस्तत्र तथाविधनिर्णयस्य हेतुत्वादिति वाच्यम्। रक्तत्वावच्छिन्नविशेष्यतायास्तत्र रक्तत्वप्रकारतानिरूपितत्वेऽपि रक्तत्वावच्छिन्नविशेष्यतात्वेन तस्यास्तादृशप्रकारतानिरूपितत्वानभ्युपगमात्, तेन रूपेण रक्तत्वप्रकारतानिरूपितविशेष्यताशालिज्ञानस्यैव रक्तो रक्त इत्याकारकस्मृतिजनकत्वात्॥ तादृशस्मरणापत्त्यसम्भवात्। एकसम्बन्धेन रक्तत्वप्रकारकनिर्णयसत्त्वे सम्बन्धान्तरेण रक्तत्वविशिष्टवैशिष्ट्यावगाहिज्ञानवारणाय विशेषणतावच्छेदकीभूतसम्बन्धविषयतां निवेश्य तद्भेदेन विभिन्नकारणत्वं कल्प्यम्। एवं रक्तदण्डवत्पुरुषवानहमित्याकारकविशिष्टवैशिष्ट्यबोधे रक्तदण्डवान्पुरुष इत्यादिनिर्णयत्वेन हेतुता। तत्र च दण्डांशे रक्तांशे च निर्णयत्वं निवेश्यम्। एवमन्यत्राप्यूह्यम्। दण्डवानित्याकारकविशेषणतावच्छेदकांशे निर्धर्मितावच्छेदककदण्डत्वादिविशिष्टवैशिष्ट्यबोधं प्रति निर्णयत्वमनिवेश्य दण्डत्वप्रकारकज्ञानत्वेन हेतुता वाच्या निर्धर्मितावच्छेदककसंशयाभावेन तत्र निर्णयत्वनिवेशे प्रयोजनविरहात्। तद्धेतुता च दण्डत्वादिनिर्विकल्पकदशायां तादृशविशिष्टवैशिष्ट्यबोधवारणाय। एवं दण्डो रक्तो नवेति संशयानन्तरमेकविशेषणविशिष्टे अपरविशेषणस्य वैशिष्ट्यमिति रीत्या रक्तदण्डः प्रमेयः इत्यादिबोधवारणाय तादृशविशिष्टवैशिष्ट्यबोधे विशेष्यतावच्छेदकप्रकारकनिर्णयस्य हेतुता स्वीकार्या। तद्धेतुतापि दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वप्रकारताशालिनिर्णयत्वेन, जन्यतावच्छेदकं च रक्तत्वविशिष्टदण्डत्वावच्छिन्नविशेष्यताशालिज्ञानत्वं, तेन मेयत्वादिकमवगाहमानस्य एकत्र द्वयमिति रीत्या तथाविधज्ञानस्य दण्डनिष्ठविशेष्यता

न रक्तत्वावच्छिन्नेति न तत्र व्यभिचारः। एतेन "न च तथापि तद्विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति तद्विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन कारणतया तादृशविशिष्टवैशिष्ट्यबोधे तथाविधप्रत्यत्ते चातिव्याप्तिरि"त्यनेन वह्निव्याप्यधूमवान्पर्वत इत्याकारकविशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुतामादाय वह्निव्याप्यधूमवत्पर्वतवानयं देश इत्यादिविशिष्टवैशिष्ट्यबोधे चातिव्याप्त्युद्भावकस्य दीधितिकृतस्तथाविधविशेष्यतावच्छेदकप्रकारकनिश्चयत्वेन हेतुतामादाय वह्निव्याप्यवान्पर्वतो द्रव्यमित्याकारके-विशिष्टे विशिष्ट्यमिति-न्यायेन विषयताशालिबोधे अतिव्याप्तेरनुद्भावनेन न्यूनता परिहृता। उपदर्शितरीत्या एककार्यकारणभावकल्पनेनैव निर्वाहे विशिष्टे वैशिष्ट्यमिति न्यायेन विषयताशालिबोधे विशेष्यतावच्छेदकप्रकारकनिर्णयत्वेन कारणतायाः स्वातन्त्र्येण क्लृप्ततया विशेषणतावच्छेदकनिर्णयत्वेन हेतुतामादायातिव्याप्त्यभिधानस्य कृततया न्यूनताया असम्भवात॥

केचित्तु विशेष्यतावच्छेदकवद्वृत्तित्वसम्बन्धनिष्ठसांसर्गिकविशेषणता विशिष्टवैशिष्ट्यमितिन्यायेन विषयता, एकप्रकारतानिरूपितविशेष्यताप्यन्यप्रकारतानिरूपितशुद्धसांसर्गिकविषयता सैव एकत्र द्वयमिति न्यायेन विषयता। अत एव गामानयेति लौकिकानि वाक्यानि वैदिकानि वा तात्पर्यविषयीभूतस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वाद्घटमानयेत्यादिवाक्यवदिति वैशेषिकानुमाने पदार्थतात्पर्यविशेषणमङ्गीकर्त्तुरुपाध्यायस्य मते दूषणदानप्रस्तावे "एवं विशिष्टवैशिष्ट्यमेकत्र द्वयमित्यादिसंसर्गभेदे विरोध इति द्रष्टव्यमि"ति पक्षधरनिरुक्तमर्थान्तरदूषणम् सङ्गच्छते, अन्यथा पूर्वरीत्या तथाविधविषयताया वैलक्षण्यानङ्गीकारे तथाविधविषयताशालिबोधद्वये एकसम्बन्धस्यैव भाततया भिन्नविषयकत्वाभावे दर्शितपक्षधरमिश्रोक्तविरोधोऽशक्यपरिहार इति।

ननु तादृशविशिष्टसम्बन्धनिष्ठसांसर्गिकविषयतायाः विशिष्टवैशिष्ट्यमिति नोपेयते तथाविधविषयतयोरनुगमासंभवेन विभिन्नकार्यतावच्छेदकतया विशेष्यतावच्छेदकप्रकारकनिर्णयविशेषणतावच्छेदकप्रकारकनिर्णययोरेककारणत्वासम्भवेनोपदर्शितदीधितिकारन्यूनतापि दुःसमाधेयेति किं नाचक्षसे इति चेत्, भावानवबोधपूर्वकानुयोगेन निरनुयोज्यत्वात, यतो विशेषणतावच्छेदकावच्छिन्नप्रकारतैव विशिष्टवैशिष्ट्यमितिन्यायाङ्गविषयतेति न ब्रूमः, अपितु विशेषणतावच्छेदकावच्छिन्ननिरूपितविशिष्टसम्बन्धनिष्ठसांसर्गिकविषयतात्वमेव तत्त्वमिति। तत्र तादृशविषयतयोस्तत्तद्धर्मावच्छिन्ननिरूपितत्वविशिष्टसांसर्गिकविषयतात्वेनानुगमेन कार्यतावच्छेद-

कैक्यसम्भवात् विशेषणतावच्छेदकप्रकारकनिर्णयविशेष्यतावच्छेदकप्रकारकनिर्णययोः कारणताभेदाभावेन कुत्राप्येतदापत्तेरभावात्। व्यधिकरणसम्बन्धविषयकविशिष्टवैशिष्ट्यबोधे तत्तद्धर्मविशिष्टनिरूपितविशिष्टसम्बन्धाप्रसिद्ध्या नायं प्रकारः सम्भवदुक्तिक इति न सचेतसां शङ्कास्पदमपि। तत्तद्धर्मनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितसम्बन्धनिष्ठसांसर्गिकविशेषणताया एव तत्त्वादिति। अत एव विशेष्यतावच्छेदकांशे भ्रमात्मकविशिष्टवैशिष्ट्यबोधो यत्र तत्रापि नानुपपत्तिः, तत्रापि वैज्ञानिकत्वमादाय तथाविधसांसर्गिकविषयताप्रसिद्धिसम्भवादित्याहुः।

न च प्रमेयत्वप्रकारतानिरूपितदण्डनिष्ठविशेष्यताया रक्तत्वाद्यनवच्छिन्नत्वे रक्तत्वं धर्मितावच्छेदकीकृत्य प्रमेयत्वादिबाधकाले तथाविधज्ञानापत्तिरिति तादृशविशेष्यताया रक्तत्वावच्छिन्नत्वमावश्यकमिति वाच्यम्। एवमपि प्रमेयत्वादिप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नविशेष्यताभिन्नाया एव रक्तत्वाद्यवच्छिन्नविशेष्यताया अभ्युपगमात् एकस्या विशेष्यताया रक्तत्वदण्डत्वोभयानवच्छिन्नत्वेन व्यभिचारानवकाशात्। तत्रापि रक्तत्वधर्मितावच्छेदककदण्डत्वप्रकारकनिर्णयजन्ये दण्डो रक्तः प्रमेयः इत्येतादृशबोधे व्यभिचारवारणाय तादृशविशेष्यतायां रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यतात्वं निवेशनीयम्। इदन्त्ववधेयम्—रक्तदण्डवान् रक्तदण्डः प्रमेय इत्याकारकोभयविशिष्टवैशिष्ट्यबोधसाधारणरक्तत्वविशिष्टदण्डत्वाद्यवच्छिन्नविषयताशालिज्ञानत्वावच्छिन्नं प्रति दण्डो रक्त इत्येतादृशनिर्णयत्वादिनैकहेतुत्वं कल्प्यते कदाचित्तादृशविशिष्टधर्मावच्छिन्नप्रकारताशालिज्ञानं कदाचित्तादृशविशेष्यताशालिज्ञानमुत्पद्यते इत्यत्र विनिगमकगवेषणा उभयवादिनामपीति।

अथ दण्डो रक्तो नवेत्याकारकसंशयानन्तरमपि रक्तं दण्डं सन्देह्मीत्याकारकरक्तत्वविशिष्टवैशिष्ट्यावगाह्यनुव्यवसायोदयात् विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुत्वकल्पनं न सम्भवति। न च तत्र विशेष्ये विशेषणमिति रीत्यैवानुव्यवसायो भवति, न त्वसौ विशिष्टवैशिष्ट्यविषयताशालीति नानुपपत्तिरिति वाच्यम्। विशिष्टविषयताशून्यज्ञानाद्यनुव्यवसायाभ्युपगमे रक्तः पटो दण्डो द्रव्यमित्यादिव्यवसायानन्तरमपि विशेष्ये विशेषणमितिरीत्या रक्तदण्डं जानामीत्याकारकानुव्यवसायापत्तिरिति चेत्। न, दण्डो रक्तो नवेत्यादिसंशयानुव्यवसायो न ज्ञानांशे रक्तत्वविशिष्टदण्डप्रकारकः, किन्तु प्रकारतासम्बन्धे-

न ज्ञानांशे रक्तत्वप्रकारको दण्डे रक्तत्वं सन्देह्मीत्याकारक एव । यदि तत्र ज्ञानांशे रक्तत्वविशिष्टदण्डप्रकारकः, तदंशे च रक्तत्वप्रकारकोऽप्यनुव्यवसायः स्वीक्रियते, तथाप्यसौ विशेष्ये विशेषणमिति रीत्यैव जायते न तु विशिष्टवैशिष्ट्यविषयताशाली । न च पूर्वातिप्रसङ्गः, रक्तत्वविशिष्टदण्डप्रकारतानिरूपितविषयत्वनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यतासम्बन्धेनानुव्यवसायं प्रति रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताकज्ञानत्वेन हेतुताया आवश्यकत्वात् पूर्वोक्तसमूहालम्बनानन्तरं तथाविधानुव्यवसायासम्भवात् । आवश्यकत्वं च तादृशहेतुतायाः रक्तो दण्ड इत्याकारकप्रत्यक्षानन्तरं यत्र तादृशसमूहालम्बनस्मरणादिकं तत्र रक्तं दण्डं स्मरामीत्यनुव्यवसायापत्तिवारणायेति ।

अथ रक्तो दण्ड इत्येतादृशज्ञानोपरमेऽपि रक्तदण्डं करोमीत्याकारककृतिसाक्षात्कारोत्पत्त्या व्यभिचारः । न च ज्ञानत्वमनिवेश्य दण्डत्वावच्छिन्नविशेष्यताकरक्तत्वप्रकारकत्वेनैव हेतुत्वान्न व्यभिचार इति वाच्यम्। तथासति रक्तो दण्ड इत्याकारकानुद्बुद्धसंस्कारसत्त्वे रक्तत्वनिर्विकल्पकदशायामपि वैशिष्ट्यबोधापत्तेः । न च संस्कारजन्यविशिष्टवैशिष्ट्यबोधे उद्बोधकस्यापि हेतुत्वेन तदभावान्नापत्तिरिति वाच्यम् । उद्बोधकं विनापि सामान्यसामग्र्या फलजनने विशिष्टवैशिष्ट्यबोधसामान्योपादाने उद्बोधकविरहस्याकिञ्चित्करत्वादिति चेन्न ।

कृतिसाक्षात्कारपूर्वं नियमतो दण्डो रक्त इत्याकारकस्मरणाऽभ्युपगमेन व्यभिचारानवकाशात् ।

वस्तुतस्तु संस्कारव्यावृत्तज्ञानेच्छाकृतिवृत्तिजातिविशेषं कल्पयित्वा विशेषणतावच्छेदकप्रकारकगुणत्वेनैव हेतुत्वं स्वीक्रियते, अनन्तस्मृतिहेतुत्वकल्पनापेक्षया तादृशजातिकल्पनाया एवोचितत्वात् । न च कृतिसाक्षात्कारपूर्वं विषयस्मृतिकल्पनमावश्यकम्, अन्यथा उपनायकज्ञानविरहेण विषयभानासम्भवेन कृतिसाक्षात्कारानुदयप्रसङ्गादिति वाच्यम् । ज्ञानलक्षणप्रत्यासत्तेरपि इच्छाकृतिसाधारणतद्विषयकविजातीयगुणत्वेनैव हेतुत्वोपगमात्, आवश्यकं च गुणमानसजनकतावच्छेदकतया संस्कारादिव्यावृत्तजातिविशेषकल्पनम्, अन्यथा संस्कारादीनां मानसापत्तिरिति विशिष्टवैशिष्ट्यानुभवत्वमेव जन्यतावच्छेदकमास्थीयते । स्मरणे च तादृशसंस्कार एतादृशविषयतानियामक इति बहवः ।

केचित्तु अनुभवत्वजातौ मानाभावेन ज्ञानत्वस्यापि नित्यसाधारणतया तस्य जन्यतानवच्छेदकत्वात् जन्यप्रत्यक्षवृत्तिजातिविशेष एव विशेषणतावच्छेदकप्रकारकनिर्णयादिजन्यतावच्छेदकः, अनुमित्यादौ च

परामर्शादिरेव तादृशविषयतानियामकः, एवं शाब्दबोधेऽवान्तरवाक्यार्थ एव तथा।

अथ विजातीयप्रत्यक्षत्वस्य तज्जन्यतावच्छेदकत्वे इतरत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्याकारकपरामर्शाद्विशिष्टवैशिष्ट्यविषयताशालिन्या अनुमितेरापत्तिः। तादृशानुमितावन्वयव्याप्तिज्ञानस्यैव हेतुत्वान्नापत्तिरित्युक्तौ च स्वातन्त्र्येण इतरभेदप्रकारकज्ञानस्य सत्त्वे तादृशानुमित्यनुदयापत्तिः। न च पृथिव्यामितरभेदप्रकारकानुमितिरेवोत्पद्यत इति वाच्यम्। साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेर्विरोधितया तत्र तादृशानुमित्युत्पादासम्भवात्। न च विशेष्ये विशेषणमितिरीत्या पृथिवीतरभेदवतीत्याकारकानुमितिस्तत्र जायत एवेति वाच्यम्। तथासति साध्यज्ञानशून्यकाले तादृशपरामर्शात् पृथिव्यामितरभेदः पृथिवीतरभेदवतीत्याकारकद्विविधविषयताशालिन्या अनुमितेरापत्तिः। न च विशिष्टबुद्धि प्रति विशेषणज्ञानस्य हेतुत्वान्नापत्तिरिति वाच्यम्। एवमपि प्रमेयत्वादिना इतरभेदज्ञानकाले तथाविधानुमितेरापत्तिसम्भवात्। न च प्रमेयत्वादिना साध्यज्ञानकाले साध्यविशेष्यकानुमितिप्रतिबन्धकीभूतसाध्यसिद्धिसत्त्वेन न द्विविधविषयताशाल्यनुमित्यापत्तिरिति वाच्यम्। साध्यतावच्छेदकप्रकारकप्रसिद्धेरेव साध्यविशेष्यकानुमितिविरोधित्वात्, अन्यथा इतरभेदत्वरूपेण भेदान्तरावगाहिपृथिव्यामितरभेद इत्याकारकसिद्धिकाले तादृशानुमितिवारणाय तादृशानुमितिं प्रति पक्षविशेष्यतां निवेश्य सिद्धेः प्रतिवध्यप्रतिवन्धकभावान्तरापत्तेरिति। तस्मादितरभेदत्वप्रकारकज्ञानकालीनव्यतिरेकव्याप्तिज्ञानजन्यानुमितौ विशिष्टविषयतास्वीकार आवश्यकः, तत्साधारण्यं च विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकस्याऽऽवश्यकम्, तथा च सति न इतरभेदत्वप्रकारकज्ञानशून्यकाले विशेष्ये विशेषणमिति रीत्या इतरभेदत्वप्रकारकद्विविधविषयताशाल्यनुमित्यापत्तिः विशिष्टवैशिष्ट्यानवगाहिन्या विशेष्ये विशेषणमिति रीत्या जायमानाया अनुमितेरप्रसिद्धेः, विशिष्टवैशिष्ट्यावगाहिन्यां च तस्यां विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वादिति चेत्।

एवमपि अनुमितौ स्वातन्त्र्येणैव हेतुत्वम्, अनुभवत्वस्य तथात्वे नित्यव्यावर्त्तनाय जन्यत्वनिवेशस्यावश्यकतयाऽनुमितौ विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावद्वयस्याऽऽवश्यकत्वात् अवच्छेदकगौरवाच्चेत्याहुः।

परे तु अनुभवत्वादिकमनिवेश्य विशिष्टवैशिष्ट्यविषयतात्वमेव ज-

ष्यतावच्छेदकमास्थीयते विशेषणतावच्छेदकज्ञानशून्यकालीनस्मरणे ई-श्वरज्ञाने च विशेष्यविशेषणमित्येतादृशविषयतामात्रमभ्युपेयतेऽतो न व्य-भिचारः, नवा नित्यसाधारण्यमिति वदन्ति ।

केचित्तु विशेषणतावच्छेदकसंशयकाले विशिष्टवैशिष्ट्यबोधं स्वीकृत्य निर्णयत्वमनिवेश्य विशेषणतावच्छेदकप्रकारज्ञानत्वेनैव हेतुतां कल्पयन्ति । तदसत् । संशयसाधारणज्ञानस्य हेतुत्वेऽप्रामाण्यनिर्णयस्यैवोत्ते-जकतया निर्णयत्वेन हेतुत्वे चाप्रामाण्यज्ञानसामान्यस्यैव तथात्वेन नि-र्णयत्वेनैव हेतुत्वकल्पनस्योचितत्वात्, अन्यथा विशेषणतावच्छेदकप्र-कारकज्ञानीयनिर्णयत्वापेक्षया गुरुशरीरस्याप्रामाण्यनिर्णयत्वस्य निवे-शने महागौरवप्रसङ्गात् ।

अथ विशेषणतावच्छेदकप्रकारकसंशयकाले तत्र चाप्रामाण्यशङ्कायां भवन्मत इव ममापि विशिष्टवैशिष्ट्यबोधानङ्गीकारादप्रामाण्यज्ञानत्वाव-च्छिन्नाभावो विशेषणतावच्छेदकप्रकारकज्ञानहेतुतायां निवेश्यते न तु नि-र्णयत्वघटितगुरुशरीरावच्छिन्नाभाव इति चेत् । एवमपि संशयसाधारण-ज्ञानस्य विशिष्टवैशिष्ट्यबोधहेतुत्वेऽनुमित्यादिकं प्रति परामर्शहेतुत्वे वह्निव्याप्यधूमवान्पर्वतः वह्निव्याप्यधूमवन्महानसमित्याद्यनेकविधज्ञाने व्याप्त्यंशे निर्णयत्वनिवेशाद्गौरवमस्माकं तु तत्र व्याप्तिविशिष्टवैशिष्ट्याव-गाहिज्ञानत्वादिना हेतुत्वस्वीकारात् विशेषणतावच्छेदकांशे संशयात्मकवि-शिष्टवैशिष्ट्यबोधाप्रसिद्ध्या व्याप्त्यंशे निर्णयत्वानिवेशेऽपि क्षतिविरहात् । न चाऽऽहार्यविशेषणतावच्छेदकप्रकारकनिर्णयोत्तरोत्पन्नस्य विशेषणताव-च्छेदकांशे संशयात्मकज्ञानस्य विशिष्टवैशिष्ट्यविषयताशालित्वे बाधका-भावात्तादृशज्ञानोत्तरमनुमितिवारणाय विशेषणतावच्छेदकप्रकारकनिर्णय-त्वेन विशिष्टवैशिष्ट्यबोधहेतुत्ववादिनापि परामर्शहेतुतायां व्याप्त्यंशे निर्णयत्वमवश्यं निवेश्यमिति न लाघवमिति वाच्यम् । अनाहार्यवि-शेषणतावच्छेकनिर्णयत्वेनैव विशिष्टवैशिष्ट्यबोधहेतुत्वाभ्युपगमात्; अत एव विशिष्टवैशिष्ट्यबोधेऽनुमितिलक्षणातिव्याप्तिः साधु सङ्गच्छते, अ-न्यथाऽनुमितिजनकतावच्छेदककोटावनाहार्यत्वस्य निवेशे विशिष्टवै-शिष्ट्यबोधहेतुतायां तदनिवेशे एकरूपेण हेतुत्वाभावात् तत्रातिव्याप्ति-शङ्काया असङ्गत्यापत्तेः । न च विशेषणतावच्छेदकज्ञानहेतुतायामना-हार्यत्वस्य निर्णयत्वस्य च निवेशापेक्षया परामर्शहेतुतायां व्याप्त्यंशे निर्णयत्वनिवेशनमेवोचितमिति वाच्यम् । वह्निव्याप्यधूमवान्पर्वतः वह्नि-व्याप्यधूमवन्महानसमित्याद्यनेकविधज्ञानहेतुतायां निर्णयत्वनिवेशापेक्षया धूमो वह्निव्याप्य इत्याकारकस्य एकैकविधज्ञानस्य हेतुतायां तन्निवेशे

लाघवात्। न च धूमो वह्निव्याप्य इत्याकारकधूमत्वसामानाधिकरण्यमात्रावगाहिव्याप्तिनिर्णयदशायां तत्सामानाधिकरण्येन व्याप्त्यभावभाने बाधकाभावात् धूमत्वसामानाधिकरण्येन व्याप्त्यभावकोटिकसंशयस्यापि विशिष्टवैशिष्ट्यविषयताशालित्वात् तदुत्तरमनुमितिवारणाय व्याप्त्यंशे निर्णयत्वनिवेशनमावश्यकमिति वाच्यम्। विशेष्यतावच्छेदकसामानाधिकरण्येनोभयकोट्यवगाहिज्ञाने संशयत्वाभावात्तादृशज्ञानादनुमितिस्वीकारे क्षतिविरहात्। न च धूमत्वसामानाधिकरण्येन व्याप्तिप्रकारकनिर्णयानन्तरोत्पन्नधूमत्वावच्छेद्यव्याप्त्यवगाहिनो धूमत्वसामानाधिकरण्येन व्याप्त्यभावावगाहिनः संशयादनुमित्युत्पादो वारयितुमशक्यः, तादृशज्ञानस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वस्वीकारादिति वाच्यम्। अवच्छेदकावच्छेदेन व्याप्तिप्रकारकविशिष्टवैशिष्ट्यबोधेऽवच्छेदकावच्छेदेन व्याप्तिप्रकारकज्ञानस्य हेतुत्वात, अवच्छेदकावच्छेदेन निर्णयसत्त्वे च धूमत्वं विशेष्यतावच्छेदकीकृत्य व्याप्त्यभावभानासम्भवात्। न चैवमपि धूमो वह्निव्याप्य इत्येतादृशज्ञानस्यैव निर्णयत्वेन हेतुत्वमायातं, रक्तदण्डवानित्यादिविशिष्टवैशिष्ट्यबोधस्थलीयहेतुतायां तु निर्णयत्वनिवेशे युक्तिविरहादिति वाच्यम्। दण्डो रक्त इत्याकारकज्ञानस्य निर्णयत्वेन हेतुत्वे रक्तत्वविशिष्टदण्डादिहेतुकानुमितौ तद्धेतुकपरामर्शहेतुतायां हेतुतावच्छेदकीभूतरक्तत्वांशे निर्णयत्वानिवेशेन लाघवात् विशिष्टवैशिष्ट्यबोधविषयतापर्यन्तनिवेशेन तदंशे संशयात्मकपरामर्शादनुमित्यापत्तेरसम्भवात्।

वस्तुतस्तु विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकज्ञानत्वेन हेतुत्वे इच्छादिविशिष्टतादृशविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षसामग्रीकाले दण्डो न रक्त इत्याकारकानुमितिशाब्दबोधादिवारणाय तादृशानुमित्यादौ तथाविधसामग्र्याः प्रतिबन्धकत्वकल्पनेन गौरवम्, अस्माकं तु तादृशसामग्रीकाले दण्डो रक्त इत्याकारकनिर्णयस्य नियमतः सत्त्वात्तादृशनिर्णयस्य बाधमुद्रया तथाविधानुमितिप्रतिबन्धकतया तादृशसामग्रीप्रतिबन्धकताया अकल्पनात्। न च तादृशसामग्रीकाले घटानुमितिवारणाय तत्र तादृशसामग्रीप्रतिबन्धकत्वे कल्पनीये तत्र विषयमनिवेश्यानुमितित्वाद्यवच्छिन्नं प्रत्येव तथा कल्पनात् न तदतिरिक्तप्रतिबन्धकताकल्पनाधिक्यमिति वाच्यम्। इच्छाया उत्तेजकत्वानुरोधेन विशिष्टवैशिष्ट्यविषयकानुमितिप्रतिबन्धकताया आवश्यकत्वात्। एतेन-परामर्शहेतुतायां विशिष्टवैशिष्ट्यनिष्ठविषयतानिवेशेऽपि निर्णयत्वनिवेश आवश्यकः, अन्यथा धूमो वह्निव्याप्य इति निर्णयानन्तरं व्याप्त्यभाव-

प्रत्यक्षेच्छावशात् व्याप्त्यभावावगाहिनः संशयात्मकव्याप्यवत्ताज्ञानात् अनुमित्यापत्तेः तादृशज्ञानस्य तथाविधविषयताशालित्वे बाधकाभावादिति न लाघवावकाश इत्यपि परास्तम्, तावताप्युक्तलाघवापरिहारादिति

अत्राहुः—संशयोत्तरं विशिष्टवैशिष्ट्यबोधानभ्युपगमेऽपि विशिष्टवैशिष्ट्यबोधत्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुत्वमनर्थकम्, दण्डो रक्तो न वेति संशयानन्तरं रक्तदण्डवानिति विशिष्टवैशिष्ट्यबोधवारणाय तादृशविशिष्टवैशिष्ट्यबोधं प्रति दण्डत्वधर्मितावच्छेदककरक्तत्वाभावप्रकारकज्ञानाभावत्वेन हेतुत्वं कल्प्यताम्, संशयानन्तरं निर्णये सति क्षणविलम्बेन विशिष्टवैशिष्ट्यबोधः। न च तादृशकारणताकल्पनमपेक्ष्य लाघवात् दण्डत्वधर्मितावच्छेदककरक्तत्वप्रकारकनिर्णयत्वेन पृथक् हेतुत्वकल्पनं समुचितमिति वाच्यम्। दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वाभावप्रकारताशून्यदण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वप्रकारताशालिज्ञानत्वरूपनिर्णयत्वेन हेतुत्वे तादृशप्रकारताशून्यत्वतादृशप्रकारताज्ञानत्वानां मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण षट्सङ्ख्यककार्यकारणभावापत्तेरवच्छेदकगौरवाच्च, मन्मते तादृशरक्तत्वाभावप्रकारकज्ञानाभावहेतुतायां तादृशरक्तत्वाभावप्रकारकत्वज्ञानत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण कार्यकारणभावद्वयं, रक्तत्वप्रकारकज्ञानहेतुतायां च रक्तत्वप्रकारकत्वज्ञानत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण तद्द्वयमिति कार्यकारणभावचतुष्टयकल्पनादवच्छेदकलाघवाच्चेति । एवं रक्तदण्डवद्भूतलवान् रक्तदण्डवत्पुरुषवानित्यादिविशिष्टवैशिष्ट्यबोधे रक्तदण्डवद्भूतलमित्यादिबहुविधज्ञानस्य हेतुतायां दण्डत्वधर्मितावच्छेदकरक्तत्वाभावप्रकारकान्यत्वरूपनिर्णयत्वस्य निवेशेन भवन्मते गौरवम्, तदनिवेशे रक्तत्वांशे संशयात्मकतादृशज्ञानानन्तरं तादृशबोधापत्तेः। न च भवतां तादृशविशिष्टवैशिष्ट्यबोधे तादृशसंशयस्य प्रतिबन्धकत्वं कल्प्यमिति वाच्यम् । मन्मते रक्तत्वविशिष्टवैशिष्ट्यावगाहिज्ञानं प्रति दण्डत्वधर्मितावच्छेदककरक्तत्वाभावप्रकारकज्ञानस्य रक्तदण्डवानित्याकारकज्ञानस्थले प्रतिबन्धकताकल्पनात्प्रतिबध्यतावच्छेदकीभूतविषयतायाश्च व्यापकतया तादृशसंशयकाले व्यापकधर्मावच्छिन्नसामग्र्यभावादेव रक्तदण्डवद्भूतलवान् देश इत्यादिविशिष्टवैशिष्ट्यबोधासम्भवात्तद्वारणाय तत्र रक्तत्वाभावप्रकारकज्ञानस्य प्रतिबन्धकत्वान्तराकल्पनात्, किन्तु रक्तदण्डवद्भूतलवानित्यादिबोधे रक्तदण्डाभावप्रकारकज्ञानमात्रस्य प्रतिबन्धकत्वं कल्प्यते। न च मन्मतेऽपि रक्तदण्डवानितिविशिष्टवैशिष्ट्यबोधहेतुभूतदण्डत्वधर्मितावच्छेदककरक्तत्वप्रकार-

कनिर्णयजन्यतावच्छेदकीभूतविषयताया रक्तदण्डवद्भूतलमित्यादिनिर्णय-
जन्यतावच्छेदकीभूतविषयताव्यापकतया रक्तांशे संशयकाले व्यापकधर्मा-
वच्छिन्नसामग्रीविरहादेव न रक्तदण्डवद्भूतलमित्याकारकनिर्णयजन्यता-
वच्छेदकावच्छिन्नापत्तिरिति रक्तदण्डवद्भूतलमिति ज्ञानहेतुतायां न रक्त-
त्वाभावप्रकारकान्यत्वं निवेश्यत इति वाच्यम्। रक्तांशे संशयात्मकरक्त-
दण्डवद्भूतलमिति ज्ञानानन्तरं रक्तो दण्ड इति निर्णयोत्पत्तौ रक्तदण्ड-
वद्भूतलवानितिविशिष्टवैशिष्ट्यबोधापत्तेः तदानीं रक्तत्वविशिष्टदण्डवै-
शिष्ट्यावगाहिज्ञानहेतुभूतस्य रक्तो दण्ड इति निर्णयस्य दण्डांशे निर्णया-
त्मकस्य रक्तदण्डवद्भूतलमिति ज्ञानस्य च सत्त्वेन सकलकारणसमवधा-
नात्। एतेन—तादृशरक्तत्वाभावज्ञानस्य समवायेन विशिष्टवैशिष्ट्यबोधं
प्रति न समवायेन प्रतिबन्धकता कायव्यूहस्थले एकशरीरावच्छेदेन रक्तो
न वा दण्ड इत्यादिसंशयवति शरीरान्तरावच्छेदेन रक्तदण्डवानिति विशि-
ष्टवैशिष्ट्यबोधोदयेन व्यभिचारात्। नाप्यवच्छेदकतासम्बन्धेन तादृशवि-
शिष्टवैशिष्ट्यबोधं प्रति अवच्छेदकतासम्बन्धेन तथाविधज्ञानत्वेन प्रतिबन्ध-
कत्वम्, परपुरप्रवेशस्थले तच्छरीरावच्छेदेनाभिमान्यस्य तथाविधसंशयसत्त्वे
तदवच्छेदेनैव भूतात्मनि विशिष्टवैशिष्ट्यबोधोदयेन व्यभिचारादितोऽनाय
त्याऽवच्छेदकतासम्बन्धेन तदात्मसमवेततादृशविशिष्टवैशिष्ट्यबोधं प्रत्य
वच्छेदकतासम्बन्धेन तदात्मसमवेततादृशरक्तत्वाभावप्रकारकज्ञानत्वादिन
प्रतिबन्धकत्वं कल्प्यमिति पुरुषभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्प-
नापत्तिः, अतः प्रतिबन्धकत्वकल्पनापेक्षया लाघवात्समवायेन विशिष्टवै-
शिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकज्ञानस्य समवायेन हेतुतायां
संशयान्यत्वप्रवेशः समुचित—इत्यपि परास्तम्। निश्चयत्वेन हेतुत्वे रक्त-
दण्डवद्भूतलवानित्यादिविशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदक-
प्रकारकज्ञानस्य भूतलाद्यनन्तविषयभेदेनानन्तहेतुतायां रक्तत्वाभावाप्र-
कारकत्वादिरूपनिर्णयत्वनिवेशेन विशेष्यविशेषणभावे विनिगमनाविरहे-
णानन्तकार्यकारणभावापत्तेः। न च मन्मतेऽपि रक्तदण्डवद्भूतलवानिति
विशिष्टवैशिष्ट्यबोधहेतुतायां दण्डत्वधर्मितावच्छेदकरक्तत्वाभावप्रकार-
कान्यत्वरूपसंशयान्यत्वं न निवेश्यते रक्तत्वविशिष्टवैशिष्ट्यबोधीयाया
विषयताया एव कारणतावच्छेदककोटिप्रवेशात् रक्तांशे संशये च
तथाविधविषयताया अभावेनैवापत्त्यसम्भवात् इति वाच्यम्। विशक-
लितोपस्थितिमूलकाद्रक्तदण्डवद्भूतलमित्यादिज्ञानादपि रक्तदण्डवद्भू-
तलवानित्यादिविशिष्टवैशिष्ट्यबोधोदयेन रक्तदण्डवद्भूतलमित्येतादृश-
वैशिष्टवैशिष्ट्यबोधत्वादिना कारणतायाः कल्पयितुमशक्यत्वात्, तथाच

तादृशसंशयाद्रक्तदण्डवद्भूतलवान् देश इत्याकारकविशिष्टवैशिष्ट्यबोध-वारणाय रक्तत्वांशे निर्णयत्वनिवेशस्यावश्यकत्वमिति ।

अथ विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकाभावप्रकारकज्ञानस्य प्रतिबन्धकत्वे भिन्नविषयकानुमित्यादिकं प्रति इच्छाघटितविशिष्टवैशिष्ट्यबोधसामग्र्याः प्रतिबन्धकतायामिच्छाविशिष्टेतरकारणविशिष्टदण्डत्वधर्मितावच्छेदककरक्तत्वप्रकारकज्ञानत्वादिना प्रतिबन्धकत्वं कल्प्यं, तत्र च तादृशज्ञानाभावसामानाधिकरण्येन रक्तत्वप्रकारकज्ञाने इच्छायामितरकारणे च वैशिष्ट्यं निवेश्यत इत्यत्र विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावबाहुल्यम् , मन्मते पुनरिच्छाविशिष्टरक्तत्वाभावप्रकारकदण्डत्वधर्मितावच्छेदककरक्तत्वप्रकारकज्ञानत्वेन तथात्वं कल्प्यम् , तथा च रक्तत्वाभावाप्रकारकत्वस्य रक्तत्वप्रकारकज्ञानेतराविशेषणत्वेनापरस्यसम्भवेन विनिगमकमस्तीति लाघवम् । न च मन्मतेऽपि सामग्र्याः प्रतिबन्धकतायां निर्णयत्वावच्छिन्नस्यैव निवेशोऽभ्युपेयते, नतु रक्तत्वाभावप्रकारकज्ञानाभावस्येति वाच्यम् । रक्तो दण्डो नवेति संशयानन्तरं रक्तदण्ड इति निर्णयसत्त्वे विशिष्टवैशिष्ट्यबोधोत्पादे भवन्मते संशयेन प्रतिबन्धात् विशिष्टवैशिष्ट्यबोधानुदयात् अनुमित्यादेरेवोत्पत्त्या व्यभिचारादिति चेन्न ।

तथापि विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुत्वे परामर्शादिकारणतायां व्याप्त्याद्यंशे निर्णयत्वनिवेशेनानुमितिसामग्र्याः प्रतिबन्धकतायां । तादृसामग्रीघटकविशिष्टपरामर्शादौ व्याप्त्यभावाप्रकारकत्वादेः प्रवेशेन च गौरवात् , मन्मते तत्र विशिष्टवैशिष्ट्यविषयत्वाभावेनैवोपपत्तौ तदंशे निर्णयत्वानिवेशात् , भवन्मते पूर्वोक्तदिशा संशयेऽपि तादृशविषयतासत्त्वे बाधकाभावेन तादृशविषयतानिवेशेऽपि निर्णयत्वनिवेशं विनाऽनुपपत्तेः । न च भवन्मतेऽपि विशेषणतावच्छेदकनिर्णयकालीनेच्छाजन्यसंशयस्य विशिष्टवैशिष्ट्यावगाहित्वे बाधकाभाव इति वाच्यम् । मन्मते विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावस्य कार्यकालवृत्तितया विशिष्टवैशिष्ट्यबोधहेतुत्वाभ्युपगमात् संशयोत्पत्तिकाले तदभावासत्त्वादेव तस्य विशिष्टवैशिष्ट्यावगाहित्वानुपपत्तेः । अपरं च विशेषणतावच्छेदकसंशयस्याप्रतिबन्धकत्वे दण्डो न रक्त इत्याकारकशाब्दबोधसामग्रीकाले तादृशशाब्दबोधेच्छासत्त्वे रक्तदण्डवानिति विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षवारणाय तादृशसामग्र्यास्तथाविधप्रत्यक्षप्रतिबन्धकत्वेऽबोधसामग्रीकाले दण्डत्वधर्मितावच्छेदककरक्तत्वाभावप्रकारकयोग्यताज्ञानस्य नियमतः सत्त्वात्तत्प्रतिबन्धकत्वेनैवोपपत्तेस्तथाविधसामग्र्याः प्रतिबन्धकत्वाकल्पनात् ।

अथ मन्मतेऽपि तदानीं विशेषणतावच्छेदकनिर्णयसत्त्वे तादृशशा-

द्वोधप्रतिबन्धकबाधबुद्धेरेव सत्त्वात् शाब्दसामग्र्येव नास्ति । न च दण्डत्वसामानाधिकरण्येन रक्तत्वनिर्णयस्य दण्डत्वसामानाधिकरण्येन रक्तत्वाभावशाब्दबोधाप्रतिबन्धकत्वात् दण्डत्वसामानाधिकरण्येन रक्तत्वनिर्णयकाले रक्तत्वाभावज्ञानसत्त्वे च सामानाधिकरण्येन रक्तत्वाभावशाब्दबोधस्यैवोत्पत्तिरिति वाच्यम् । तदानीं विशिष्टवैशिष्ट्यबोधे दण्डत्वसामानाधिकरण्येन रक्तत्वभाने बाधकाभावात् दण्डत्वसामानाधिकरण्येन रक्तत्वावगाहिविशिष्टवैशिष्ट्यबुद्धिं प्रति अवच्छेदकावच्छेदेन रक्तत्वाभावज्ञानस्यैव प्रतिबन्धकताया भवता वाच्यत्वात् दण्डत्वसामानाधिकरण्येन रक्तत्वाभावशाब्दबोधसामग्र्या दण्डत्वसामानाधिकरण्येन रक्तत्वावगाहिविशिष्टवैशिष्ट्यबोधप्रतिबन्धकत्वकल्पनस्य भवतोऽप्यावश्यकत्वात् । दण्डत्वावच्छिन्नविशिष्टवैशिष्ट्यबोधजनकस्य दण्डत्वावच्छेदेन रक्तत्वप्रकारकनिर्णयस्य सत्त्वे तु बाधात् शाब्दबोध एव नोत्पद्यत इति चेन्न ।

शाब्दबोधे योग्यताज्ञानस्य हेतुतामते बाधबुद्धेः प्रतिबन्धकत्वकल्पनात् दण्डो रक्त इति ज्ञानकाले भिन्नेन्द्रियादिजन्ये च कथंचित् दण्डत्वावच्छेदेन रक्तत्वाभावज्ञाने शाब्दसामग्रीकाले दण्डो न रक्त इति शाब्दबोधस्यैवोदयात्तत्र रक्तदण्डवानिति विशिष्टवैशिष्ट्यबोधवारणाय दण्डत्वावच्छेदेन रक्तत्वाभावशाब्दसामग्र्यास्तादृशविशिष्टवैशिष्ट्यबोधे प्रतिबन्धकत्वकल्पनस्य भवतोऽप्यावश्यकत्वात् । न च तदानीं बाधेन प्रतिबन्धादेव न विशिष्टवैशिष्ट्यबोधः स्यादिति वाच्यम् । लौकिकसन्निकर्षजन्यज्ञानस्य बाधसामान्याप्रतिबध्यतया आनुमानिकादियोग्यताज्ञानघटितसामग्रीकाले लौकिकसन्निकर्षजन्यविशिष्टवैशिष्ट्यबोधस्य संशयात्मकयोग्यताज्ञानानन्तरं रक्तो दण्ड इति निर्णये शाब्दबोधसकलकारणसमवधाने च विशिष्टवैशिष्ट्यबोधस्य चापत्तिवारणाय तादृशसामग्रीप्रतिबन्धकताया आवश्यकत्वात् । न च तादृशशाब्दसामग्रीकाले रक्तो दण्ड इत्याकारकप्रत्यक्षवारणाय विशेष्ये विशेषणमिति रीत्या रक्तदण्डवानित्याकारकप्रत्यक्षस्य च वारणाय शाब्दसामग्र्याः प्रतिबन्धकताया आवश्यकत्वे सर्वसाधारणदण्डत्वधर्मितावच्छेदकरक्तत्वप्रकारकप्रत्यक्षत्वस्यैव तत्प्रतिबध्यतावच्छेदकत्वाभ्युपगमाद्विशिष्टवैशिष्ट्यबोधस्याप्यसम्भवात् विशिष्टवैशिष्ट्यबोधं प्रति प्रतिबन्धकत्वान्तरं मयापि न कल्प्यते इति वाच्यम् । दण्डत्वावच्छिन्नमुख्यविशेष्यकरक्तत्वप्रकारकज्ञानं जायतामित्याकारकेच्छाया उत्तेजकत्वानुरोधात् रक्तत्वप्रकारकदण्डत्वावच्छिन्नमुख्यविशेष्यकज्ञानत्वस्यैव रक्तो दण्ड इत्या-

कारकज्ञानापत्तिवारकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्वीकारात्तादृशप्रतिबध्यप्रतिबन्धकभावेन विशिष्टवैशिष्ट्यबोधापत्तिवारणासम्भवात् । मुख्यविशेष्यताया अनिवेशे किञ्चिद्विशेष्यकरक्तदण्डप्रकारकं ज्ञानं जायतामित्याकारकेच्छाधीने तादृशशाब्दसामग्रीकालीने रक्तदण्डवानितिबोधे पूर्वोक्तेच्छाविरहविशिष्टशाब्दसामग्र्यभावस्य व्यभिचारात् । एतादृशेच्छाया अपि तत्रैवोत्तेजकत्वे पुरुषादिभासकसामग्र्यसत्त्वे तादृशेच्छाबलात् रक्तो दण्ड इति प्रत्यक्षप्रसङ्गात् । एवं विशेष्ये विशेषणमिति रीत्या जायमानतादृशप्रत्यक्षस्थलीयप्रतिबन्धकतयापि न विशिष्टवैशिष्ट्यबोधापत्ति वारणं सम्भवति, विशेष्ये विशेषणमिति रीत्या बोधो जायतामित्येतादृशेच्छायास्तत्रतत्रोत्तेजकताया आवश्यकत्वेन तादृशेच्छां विनापि विशिष्टवैशिष्ट्यावगाहित्वप्रकारकेच्छाधीनविशिष्टवैशिष्ट्यबोधोदयेन व्यभिचारात्तद्वारणाय विशिष्टवैशिष्ट्यबोधीयविषयताशून्यतादृशावच्छेद्यावच्छेदकभावापन्नविषयताशालिप्रत्यक्षत्वस्य तद्व्यावृत्तविलक्षणविषयताशालिप्रत्यक्षत्वस्य वा तादृशेच्छाविरहविशिष्टसामग्रीप्रतिबध्यतावच्छेदकताया आवश्यकत्वात् । विशिष्टवैशिष्ट्यावगाहित्वप्रकारकेच्छाया अपि तत्रोत्तेजकत्वे विशेषणतावच्छेदकप्रकारकनिर्णयशून्यकाले तादृशेच्छाबलात् रक्तदण्डवानिति बोधापत्तिः, तथाच विशिष्टवैशिष्ट्यावगाहित्वप्रकारकेच्छामुत्तेजकीकृत्य विशिष्टवैशिष्ट्यबोधे स्वतन्त्रप्रतिबध्यप्रतिबन्धकभावकल्पनमावश्यकमेव । एतादृशविशिष्टवैशिष्ट्यबोधेच्छाघटितविशिष्टवैशिष्ट्यबोधात्मकप्रत्यक्षसामग्रीकाले दण्डो न रक्त इति शाब्दबोधवारणाय तादृशशाब्दबोधं प्रति तथाविधसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवम्, मन्मते च तादृशशाब्दसामग्रीकाले योग्यताज्ञानघटितविशिष्टवैशिष्ट्यबोधसामग्र्या अभावेन तादृशविशिष्टवैशिष्ट्यबोधसामग्रीकाले च योग्यताज्ञानघटिततादृशशाब्दसामग्र्या असत्त्वेन तादृशसामग्र्योर्मिलनासम्भवात् तथाविधप्रतिबध्यप्रतिबन्धकभावस्याकल्पनात् ।

अथ यदि बाधबुद्धेः शाब्दसाधारणपरोक्षज्ञानत्वावच्छिन्नं प्रति प्रतिबन्धकत्वं कल्प्यते, तदा विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुतामतेऽपि दण्डत्वावच्छेदेन रक्तत्वावगाहिरक्तदण्डवानितिविशिष्टवैशिष्ट्यबोधसामग्र्या दण्डो न रक्त इति शाब्दसामग्र्याश्च मिलनासम्भवात्तादृशप्रतिबध्यप्रतिबन्धकभावाकल्पनान्न गौरवावकाश इति चेन्न ।

मास्त्वेवं गौरवम्, तथापि रक्तत्वाभाववद्दण्डवानित्याकारकविशिष्टवैशिष्ट्यावगाहिमानसादिगोचरेच्छाविशिष्टतादृशविशिष्टवैशिष्ट्यबोधात्मकमानससामग्रीकाले रक्तदण्डवान्पुरुष इत्याकारकचाक्षुषादिविशिष्टवैशि-

ष्टयबोधवारणाय तादृशविशिष्टवैशिष्ट्यावगाहिचाक्षुषत्वप्रकारकेच्छाविरहविशिष्टतादृशविशिष्टवैशिष्ट्यावगाहिमानसत्वप्रकारकेच्छाविशिष्टतादृशमानससामग्र्यादेस्तादृशचाक्षुषं प्रति प्रतिबन्धकत्वकल्पने गौरवं दुर्वारमेव, मन्मते तु रक्तत्वाभाववद्दण्डवान्पुरुष इत्याकारकविशिष्टवैशिष्ट्यबोधसामग्र्याः रक्तत्वाभाववान् दण्ड इत्याकारकविशेषणतावच्छेदकप्रकारकज्ञानघटिततया तादृशसामग्रीकाले तदापत्त्यसम्भवात्तस्यास्तत्र प्रतिबन्धकत्वाकल्पनात् । न च तादृशविशिष्टवैशिष्ट्यबोधस्तदा बाधेनैव प्रतिबध्यत इति तत्सामग्र्याः प्रतिबन्धकत्वं न कल्प्यत इति वाच्यम् । लौकिकसन्निकर्षजन्यतादृशज्ञानस्य बाधसामान्याप्रतिबध्यत्वात्, आनुमानिकादिरक्तत्वाभावप्रकारकज्ञानकाले तदापत्तिरिति प्रागेवोक्तत्वात् । न च रक्तो दण्ड इत्याकारकनिर्णयघटितायां रक्तदण्डवानित्याकारकविशिष्टवैशिष्ट्यबोधसामग्र्यां रक्तत्वाभाववद्दण्डवानित्याकारकबोधसामग्र्येव नास्ति तत्र रक्तो दण्ड इति ज्ञानस्य बाधबुद्ध्या प्रतिबन्धकत्वादिति वाच्यम् । इच्छाकाले बाधसत्त्वेऽपि आहार्यप्रत्यक्षोदयादिच्छाविरहविशिष्टबाधबुद्धेरेव च मानसादिप्रतिबन्धकत्वात् तदानीमिच्छासत्त्वेन बाधबुद्धेरकिञ्चित्करत्वात् ।

अथ चैवं संशयस्य प्रतिबन्धकतावादिनये रक्तदण्डवानिति विशिष्टवैशिष्ट्यबोधे रक्तत्वाभावहेतुकदण्डपक्षकानुमितिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते, तत्र तादृशसामग्रीकाले रक्तत्वाभावप्रकारकज्ञानस्यावश्यं सत्त्वेन तत एव तादृशविशिष्टवैशिष्ट्यबोधवारणसम्भवात् । अथ गुरुत्ववद्द्रव्यवान् देश इत्याद्यतीन्द्रियविशेषणतावच्छेदकविशिष्टवैशिष्ट्यबोधस्थले गुरुत्वाभाववद्द्रव्यवानिति विशिष्टवैशिष्ट्यबोधसामग्रीकाले बाधेनानुमितिप्रतिबन्धादेव तादृशविशिष्टवैशिष्ट्यबोधवारणे तादृशसामग्र्याः प्रतिबन्धकताया निर्णयत्वेन हेतुतावादिनाप्यकल्पनात् उक्तगौरवानवकाशात् तत्र तथाविधनिर्णयत्वेन हेतुत्वमेवोचितम्, अन्यथाऽनुमित्यादिकं प्रति विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावघटितविशिष्टवैशिष्ट्यबोधसामग्रीत्वेन प्रतिबन्धकत्वकल्पनापत्त्या पूर्वोक्तगौरवादिति । न च भवन्मते यत्र विशेषणतावच्छेदकसंशयोत्तरक्षणे विशेषणतावच्छेदकनिर्णयो जातः तद्द्वितीयक्षणेऽननुगतानुमित्सादिसत्त्वेनानुमित्युत्पत्तये तत्कालीनानुमित्सादीनां प्रत्यक्षेच्छाविशिष्टविशिष्टवैशिष्ट्यबोधसामग्रीप्रतिबन्धकतायामुत्तेजकत्वं त्वया स्वीकरणीयमिति गौरवम्, मम तु तदा विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावघटितविशिष्टवैशिष्ट्यबोधसामग्र्यभावादेवोपपत्तेस्तादृशेच्छानामुत्तेजक-

त्वानभ्युपगमात् तत्रानुमित्सोत्पत्तिक्षणे विशेषणतावच्छेदकसंशयस्य नाशात् तादृशसंशयाभावघटितविशिष्टवैशिष्ट्यबोधसामग्र्या अपि सत्त्वेन तादृशेच्छाया उत्तेजकत्वमुभयवादिसिद्धमिति नाशङ्कनीयम्, अपेक्षाबुद्ध्यात्मकसंशयस्थले तादृशानुमित्सोत्पत्तिक्षणे तत्सत्त्वात्तादृशानुमित्सादीनामुत्तेजकत्वाकल्पनेन मन्मते न लाघवस्यापहारः, ज्ञानेच्छयोर्यौगपद्यानभ्युपगमे तादृशसंशयोत्पत्तिद्वितीयक्षणेऽनुमित्यादिगोचरेच्छाविशेषणतावच्छेदकनिर्णयोत्पत्तौ तु तदव्यवहितोत्तरक्षणेऽनुमित्याद्युत्पत्तिस्तदनुरोधेन तादृशेच्छाया भवन्मते एवोत्तेजकत्वात् मन्मते लाघवस्यातिस्फुटत्वादिति वाच्यम् । यत्र विशेषणतावच्छेदकसंशयकाले विशेषणतावच्छेदकनिर्णयविशिष्टवैशिष्ट्यावगाहिचाक्षुषादिगोचरेच्छायाः समवधानम्, अननुगतघटमानसादिगोचरेच्छा तन्मानससामग्री च समवहिता, तदा भवन्मते घटमानसोदयात् अनुमितिसामग्र्याः प्रतिबन्धकतायां तत्तन्मानसेच्छानामुत्तेजकत्वेन भवन्मते गौरवात्, अस्मन्नये च तदानीं विशिष्टवैशिष्ट्यावगाहिचाक्षुषादेरेवोत्पत्त्या तादृशमानसानुदयेन तथाविधेच्छाया उत्तेजकत्वानभ्युपगमात् । एवं तदानीमनुमितिवारणाय तादृशमानसेच्छाविशिष्टमानससामग्र्या अनुमितिं प्रति प्रतिबन्धकत्वकल्पने गौरवम्, अस्मन्मते तु विशिष्टवैशिष्ट्यावगाहिचाक्षुषसामग्र्याः प्रतिबन्धकत्वादेवानुमितिवारणादिति चेन्न ।

तादृशस्थले एतादृशलाघवविरहेऽपि विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुत्वे पूर्वोक्तविनिगमनाविरहप्रयुक्तगौरवेण विशेषणतावच्छेदकाभावप्रकारकज्ञानप्रतिबन्धकत्वस्यैवोचितत्वात् । न च प्रागेवोक्तं संशयप्रतिबन्धकत्वमते विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावघटितविशिष्टवैशिष्ट्यबोधसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवमिति वाच्यम् । तादृशसामग्रीप्रतिबन्धकतायां विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावानिवेशे क्षतिविरहात् । न च विशेषणतावच्छेदकसंशयकालीनानुमितौ व्यभिचार इति वाच्यम् । अनुमित्साकालेऽनुमित्युत्पत्त्या इच्छाविशिष्टवैशिष्ट्यबोधसामग्रीरूपप्रतिबन्धकाभावस्य व्यभिचारवारणायेच्छाया उत्तेजकत्वकल्पनापेक्षया लाघवात्तादृशसामग्र्या उत्तरज्ञानत्वस्यैव कार्यतावच्छेदकत्वाभ्युपगमात् तादृशसंशयकालीनज्ञाने व्यभिचाराभावात् । न च तादृशविशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावेतरकारणसमुदायोत्तरोत्पन्नस्य तथाविधसंशयकालीनज्ञानस्य तादृशसामग्र्यभावजन्यतावच्छेदकानाक्रान्तस्य प्रसिद्ध्या विशिष्टवैशिष्ट्यबोधसामग्र्युत्तरमपि तदापत्तिरिति वाच्यम् । अनुमित्साविशिष्टानुमि-

त्यादीनामिव तादृशविशेषणतावच्छेदकाभावप्रकारकज्ञानाभावविशिष्ट-ज्ञानस्यापि स्वतन्त्रहेतुताकल्पनेनापत्त्यभावात्। न च तादृशस्वतन्त्र-हेतुताकल्पनाधिक्याद्गौरवमित्याशङ्कनीयम्। अवन्मते गौरवस्यातिस्फुर-त्वात् तादृशसामग्रीप्रतिबन्धकतायां निर्णयत्वनिवेशाद्विनिगमनाविरहेण सामग्रीप्रतिबन्धकतायां बाहुल्यादिति संशयोत्तरोत्पन्ननिर्णयद्वितीयक्षणे फलाय निर्णयत्वेन हेतुत्वं नियुक्तिकमेव।

इदं पुनरवधेयम्। वह्निव्याप्यधूमवत्पर्वतवानिति विशिष्टवैशिष्ट्य-बोधे विषयमनिवेश्य ज्ञानत्वेनात्मत्वेनैव वा हेतुता। न च घटादिज्ञाना-दपि तादृशविशिष्टवैशिष्ट्यबोधापत्तिः धूमलिङ्गकानुमित्यादौ वह्निव्या-प्यधूमवत्तानिर्णयत्वेन हेतुतायाः क्लृप्तत्वात्, तत्र चान्यलिङ्गकानुमितौ व्यभिचारवारणाय तादृशनिर्णयविशिष्टत्वस्यावश्यं निवेशनीयतया सर्व-त्र व्यभिचारवारणसम्भवेनानुमितित्वस्य वह्निविधेयकत्वपर्वतोद्देश्य-त्वादेश्च निवेशे प्रयोजनाभावात्। तादृशनिर्णयविशिष्टत्वं तज्जन्यतावच्छे-दकमास्थीयते तादृशनिर्णयस्य विशेषसामग्रीत्वात्। रक्तदण्डवान् पुरुष इत्यस्यापि स्थानान्तरक्लृप्तेनैव निर्वाहः। यदि दण्डो रक्तत्वाभाववान् स्यादित्यापत्तिं प्रति दण्डो रक्त इति दण्डो रक्तत्वाभावाभाववानिति वा आपाद्यव्यतिरेकज्ञानं कारणम्, तदा व्यभिचारभिया रक्तो दण्ड इति निर्णयविशिष्टत्वावच्छिन्नं प्रति निर्णयत्वेन हेतुता, इत्थं च तादृशविशि-ष्टवैशिष्ट्यबोधस्यापि तज्जन्यतावच्छेदकाक्रान्ततया तत्र तादृशनि-र्णयकल्पनाविरहादिति। विशिष्टवैशिष्ट्यविषयता च विशेष्ये विशेषण-मिति विषयताव्याप्या, विशिष्टवैशिष्ट्य बोधसामग्रीकाले विशेषणज्ञा-नाऽसंसर्गाऽग्रहादिघटिताया विशेष्ये विशेषणमित्येतादृशविषयताशा-लिज्ञानसामग्र्या अवश्यं सम्भवादिति बहवः।

केचित्तु दण्डो रक्तो नवेति संशयकाले रक्तदण्डवानिति विशिष्टवै-शिष्ट्यबोधो विशेष्ये विशेषणमिति रीत्यापि न जायते, दीधितिकृतापि रक्तदण्डवानित्येतादृशज्ञानानुदयादित्येवोक्तम्, तथाच तादृशबोधे संश-यस्य प्रतिबन्धकत्वमुपेयम्, इत्थं च दण्डो रक्तो नवेति संशयद्वितीयक्षणे दण्डो रक्त इत्याकारकस्मरणादिसत्त्वे तृतीयक्षणे विशेष्ये विशेषणमित्ये-तादृशविषयताशून्य एव रक्तदण्डवानिति बोध उत्पद्यत इति न तादृश-विषयतयोर्व्याप्यव्यापकभावः सम्भवति। नच तादृशसंशयप्रतिबन्धक-तायां निर्णयस्योत्तेजकत्वं कल्प्यम्, गौरवात्। न च विशेष्ये विशेषणमिति विषयताया व्यापकतानभ्युपगमे रक्तदण्डाभाववान् पुरुष इत्यादिबाध-दशायां विशिष्टवैशिष्ट्यबोधोत्पत्तिवारणाय विशिष्टवैशिष्ट्यबोधं प्रति

बाधबुद्धेः प्रतिबन्धकत्वान्तरकल्पने गौरवम्, तादृशविषयताया व्यापकत्वे तादृशविषयताशालिज्ञानं प्रति बाधबुद्धेः प्रतिबन्धकतायाः क्लृप्तत्वात् तत एवोपपत्तेः स्वतन्त्रप्रतिबन्धकतायाः अकल्पनादिति वाच्यम्। उभयसाधारणरक्तत्वप्रकारतानिरूपितदण्डप्रकारताया अवच्छेदकत्वेनैवोपपत्तौ तद्व्यापकत्वेऽपि स्वतन्त्रप्रतिबन्धकताया अकल्पनात्। न च दण्डो रक्तो नवेति संशयानन्तरं विशेष्ये विशेषणमिति रीत्या रक्तदण्डवानिति ज्ञानाभ्युपगमे क्षतिविरहेण तत्र संशयस्य प्रतिबन्धकत्वमेव नास्ति, दीधितिस्थज्ञानपदं तु विशिष्टवैशिष्ट्यज्ञानपरमेवेति वाच्यम्। तादृशबोधं प्रति संशयस्याविरोधित्वे रक्तत्वाभावविशिष्टदण्डादिपक्षकानुमितिसामग्र्या विशेष्ये विशेषणमिति रीत्या बोधस्य प्रतिबन्धकत्वाकल्पनात् तथाविधसंशयस्य उभयप्रकारकत्वेन न विरोधिता, किन्तु रक्तत्वाभावप्रकारकज्ञानत्वेन, तथाच तादृशसामग्रीकाले रक्तत्वाभावप्रकारकज्ञानस्यावश्यकतया तत्प्रतिबन्धकतयैवोपपत्तौ सामग्रीप्रतिबन्धकताया अकल्पने क्षतिविरह इति। न च तस्य रक्तत्वाभावप्रकारकज्ञानत्वेन विरोधित्वे आनुमानिकादिरक्तत्वाभावप्रकारकनिर्णयदशायां रक्तदण्डवानित्यांकारकलौकिकप्रत्यक्षानुदयापत्तिरिति वाच्यम्। विशेष्ये विशेषणमिति रीत्या बोधे संशयस्य प्रामाणिकतया प्रतिबन्धकत्वकल्पनाया अनर्हत्वात्, तथाच विशिष्टवैशिष्ट्यबोधसाधारणरक्तत्वप्रकारतानिरूपितदण्डप्रकारताशालिज्ञानत्वमेव प्रतिबध्यतावच्छेदकमस्तु। न च संशयानन्तरोत्पन्ननिश्चयद्वितीयक्षणे विशिष्टवैशिष्ट्यबोधोऽपि न भवतीति तादृशविषयतयोर्व्याप्यव्यापकभावोऽप्यक्षत एवेति वाच्यम्। तदानीं रक्तदण्डवानित्येतादृशज्ञानस्य प्रामाणिकतया अपलापानर्हत्वात्। तदानीं तस्यानभ्युपगमे निर्णयत्वेन विशिष्टवैशिष्ट्यबोधं प्रति हेतुताया निर्युक्तिकतया विशिष्टवैशिष्ट्यबोधेऽनुमितिलक्षणातिव्याप्तिशङ्काया असङ्गमापत्तेः। न च विशिष्टवैशिष्ट्यबोधसाधारणतादृशज्ञानत्वस्य संशयप्रतिबध्यतावच्छेदकत्वे निर्णयत्वेन हेतुत्वं निर्युक्तिकम्, अप्रामाण्यज्ञानास्कन्दितसंशयकाले विशेष्ये विशेषणमित्येतादृशविषयताशालिबोधोदयेनाप्रामाण्यज्ञानास्कन्दितसंशयस्यैव प्रतिबन्धकतयाऽप्रामाण्यज्ञानास्कन्दितसंशयकाले विना निर्णयं विशिष्टवैशिष्ट्यबोधापत्तिवारणाय विशिष्टबोधे निर्णयत्वेन हेतुताया आवश्यकत्वादिति न मे ग्रन्थासङ्गतिरिति वाच्यम्। एतादृशयुक्त्या निर्णयत्वेन हेतुत्वे ध्रुवे संशयस्य प्रतिबन्धकताभ्युपगमे प्रयोजनविरहात्। अथ संशयानन्तरं निर्णयद्वितीयक्षणे फलाभ्युपगमेऽप्रामाण्यज्ञानमुत्तेजकीकृत्य रक्तत्वाभावप्रकारकज्ञानस्य स्वातन्त्र्येण प्रतिबन्धक-

तायाः कल्पयितुमुचितत्वात् निर्णयत्वेन हेतुत्वमकिञ्चित्करमिति चेन्न। संशयानन्तरं निर्णये सति फलापलापस्यानर्हत्वात्, तथाच विशिष्टवैशिष्ट्यबोधः प्रामाणिक एवेत्याहुः।

केचित्तु तादृशबोधं प्रति संशयस्य रक्तत्वप्रकारकज्ञानत्वेनैव विरोधिता लाघवात्, रक्तत्वप्रकारकनिर्णयकाले च विशेष्ये विशेषणमित्येतादृशविषयताशून्यविशिष्टवैशिष्ट्यबोध उत्पद्यते, इत्थं च तादृशविषयताविरुद्धैव विशिष्टवैशिष्ट्यविषयता। न च रक्तत्वाभाववद्दण्डवानिति बोधे रक्तत्वाभावाभावप्रकारकज्ञानत्वापेक्षया लाघवेन रक्तत्वप्रकारकज्ञानत्वेनैव विरोधितायाः कल्पयितुमुचितत्वात् रक्तत्वाभाववद्दण्डवानिति बोध उभयविषयविषयताशाली स्यादिति कथनं विरुद्ध्यत इति वाच्यम्। रक्तत्वप्रकारकज्ञानत्वेन तथात्वे रक्तत्वाभावाभावत्वावच्छिन्नकोटिकरक्तत्वाभावसंशयकाले विशेष्ये विशेषणमिति रीत्या तादृशबोधवारणाय रक्तत्वाभावत्वावच्छिन्नप्रकारकज्ञानत्वेनापि प्रतिबन्धकत्वान्तरस्य कल्पनीयतया गौरवादुभयसाधारणरक्तत्वाभावप्रकारकज्ञानत्वेन विरोधिताया एव कल्पयितुमुचितत्वात्, तथाच संशयानन्तरं रक्तत्वाभाववान् दण्ड इति निर्णये सति विशिष्टवैशिष्ट्यबोधः, तादृशोभयसत्त्वे च विशेष्ये विशेषणमिति रीत्या न भवति प्रतिबन्धात्। अथ रक्तदण्डवानित्येतादृशबोधे रक्तत्वप्रकारकज्ञानविरोधित्वेन रक्तत्वाभावांशेऽप्रामाण्यज्ञानास्कन्दितरक्तत्वसन्देहकाले तादृशबोधानुदयापत्तिः, तदुपपत्तये च तादृशाप्रामाण्यग्रहस्य तत्रोत्तेजकत्वे तादृशाप्रामाण्यग्रहकालीनरक्तत्वनिर्णयजन्यविशिष्टवैशिष्ट्यबोधस्य विशेष्ये विशेषणमित्येतादृशविषयताशालित्वे बाधकाभावात्, एवं रक्तत्वाभाववति रक्तत्वप्रकारकत्वरूपाप्रामाण्यग्रहविषयीभूतरक्तत्वनिर्णयोत्तरोत्पन्नरक्तदण्डवानिति ज्ञानस्यापि विशिष्टवैशिष्ट्यविषयताशालित्वेन तत्र विशेष्ये विशेषणमित्येतादृशविषयतास्वीकारस्यावश्यकतया व्यभिचारः स्यात्तद्वारणाय रक्तत्वांशेऽप्रामाण्यज्ञानस्य रक्तत्वप्रकारकज्ञानप्रतिबन्धकतायामुत्तेजकत्वस्यावश्यकत्वात् रक्तो न वा दण्ड इत्येतादृशसंशये रक्तत्वांशेऽप्रामाण्यग्रहसत्त्वे विशेष्ये विशेषणमिति रीत्या बोधो न भवति, तदाऽप्रामाण्यग्रहाभावविशिष्टरक्तत्वप्रकारकज्ञानाभावसत्त्वात्तदापत्तिः, एवं द्विविधाऽप्रामाण्यग्रहस्योत्तेजकतया गौरवं च, रक्तत्वाभावप्रकारकज्ञानप्रतिबन्धकतायां तु रक्तत्वाभावांशेऽप्रामाण्यज्ञानस्यैव तथात्वेन लाघवमिति चेत्। रक्तत्वाभावांशेऽप्रामाण्यज्ञानास्कन्दितरक्तत्वाभावज्ञानत्वेन रक्तत्वाभावविशिष्टदण्डपक्षकानुमितिसामग्र्यादीनां च प्रतिबन्धकत्वाकल्पनेन लाघवात्। इत्थं च तादृशविषयता-

द्वयसामानाधिकरण्यं नोपपद्यत इति। अथ संशयस्य तादृशविषयताशालिज्ञानविरोधित्वे दण्डा रक्तो नवेत्यादिविशेषणसंशयाधीनस्य रक्तदण्डवान्न वेति विशिष्टवैशिष्ट्यबोधस्यानुपपत्तिरिति चेन्न। एवमपि तादृशबोधं प्रति रक्तत्वप्रकारकनिर्णयत्वेनैव विरोधित्वमस्तु, उक्तसामग्रीप्रतिबन्धकत्वाकल्पने लाघवात्, भवतामपि तादृशविषयतयोर्विरोधः स्यादेवेति प्राहुः।

अथ संशये निर्विकल्पोत्तरोत्पन्नज्ञानाद्विशेषणतावच्छेदकप्रकारकनिर्णयोत्तरोत्पन्नज्ञानस्य विलक्षणविषयतासत्त्वेनुभवविवादाद्विशिष्टवैशिष्ट्यविषयतायां मानाभावः।

अत्राहुः-विशिष्टवैशिष्ट्यविषयताभ्युपगमे परामर्शादिजनकतायामपि तादृशविषयतानिवेशात् व्याप्त्यंशे निर्णयत्वं न निवेश्यते इति लाघवेन तत्सिद्धिः। न च पूर्वोक्तरीत्या संशयात्मकविशिष्टवैशिष्ट्यबोधस्यापि प्रसिद्ध्या निश्चयत्वनिवेश आवश्यक इति वाच्यम्। एवमपि यत्र तादृशविषये व्याप्तिनिर्णयोत्तरमिच्छाधीनव्याप्यभावावगाहिसंशयकालेऽनुमितेरितरकारणसमवधानं नासीत्, तत्र निर्णयत्वानिवेशेन लाघवसम्भवात्, संशयस्य विरोधित्वाभ्युपगमे नैवानुपपत्तिगन्धोऽपीति संक्षेपः॥

इति विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिर्णयहेतुतावादवीचिः षष्ठः।

## (७) विशेषणज्ञानहेतुतावादवीचिः।

अथ विशिष्टबुद्धिं प्रति विशेषणज्ञानहेतुतायां किं मानम्? विशेषणविशेष्येन्द्रियसन्निकर्षादित एव विशिष्टबुद्ध्युपपत्तेः। न च तस्याहेतुत्वे कदाचित्तत्प्रकारकं प्रत्यक्षं कदाचित्तद्विशेष्यकमित्यत्र नियामकाभाव इति वाच्यम्। तत्प्रकारकप्रत्यक्षेच्छाविरहविशिष्टविरोधसामग्र्यभावादीनामेव तन्नियामकत्वात। न च विरोधसामग्र्यादिशून्यकाले घटादिविशेष्यकघटत्वादिप्रकारकज्ञाने जायमाने नियमतो घटादिप्रकारकघटत्वादिविशेष्यकज्ञानापत्तिरिति वाच्यम्। विशेषणज्ञानहेतुत्वेऽपि घटघटत्वादिवि-

षयकनिर्विकल्पकाद्यनन्तरं घट इत्याद्याकारकज्ञानं यदा उत्पद्यते तदा घटादिप्रकारकज्ञानापत्तितादवस्थ्यात् । अननुगतनियामकं कल्पयित्वा तद्वारणे च विशेषणज्ञानहेतुताया अकिञ्चित्करत्वात् ।

यत्तु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वे ज्ञानलक्षणायाः हेतुत्वान्तरं न कल्प्यते तादृशकारणतयैवोपपत्तेः । न च निर्विकल्पकानन्तरं उपनीतभानवारणाय ज्ञानलक्षणायाः सप्रकारकज्ञानत्वेन पृथक्कारणत्वमावश्यकमिति वाच्यम् । निर्विकल्पकानन्तरमुपनीतभानाभ्युपगमे क्षतिविरहादिति ।

तदसत् । घटमुख्यविशेष्यकमानसोपनीतभानानुरोधेन ज्ञानलक्षणायाः हेतुत्वस्यावश्यकत्वात्, अन्यथा विशेषणज्ञानहेतुत्वेऽपि घटादिज्ञानशून्यज्ञानकाले घटमुख्यविशेष्यकमानसोपनीतभानापत्तेः। न च निष्प्रकारकविशेष्यतानिरूपकज्ञानस्याप्रसिद्ध्या घटत्वादिप्रकारकतादृशज्ञानमेवोत्पद्यते, तस्य च घटत्वादिरूपविशेषणज्ञानासत्त्वे तादृशकारणाभावादेव नापत्तिः, तत्सत्त्वे पुनरिष्टमेव तदिति वाच्यम् । घटत्वादिविषयकज्ञानसत्त्वेपि घटादिज्ञानं विना तदुपनीतभानस्यानिष्टत्वात्, घटत्वादिज्ञानदशायां च घटादिज्ञानस्याऽनावश्यकत्वात् । न च तदा घटत्वादिसामान्यज्ञानसत्त्वेन घटादिज्ञानासत्त्वेऽपि सामान्यप्रत्यासत्तिजन्यमेव घटादिज्ञानमुत्पद्यत इति कथं तदनिष्टमिति वाच्यम् । तत्सम्बन्धेन सामान्याश्रयप्रत्यक्षे तत्सम्बन्धेन सामान्यप्रकारकज्ञानस्यैव हेतुतया घटत्वविशेष्यकज्ञानकाले सामान्यप्रत्यासत्तिजन्यघटादिज्ञानानुदयात् । न च निर्विकल्पकसाधारणसामान्य ानहेतुतावादिनां नव्यानां मते घटत्वादिविशेष्यकज्ञानादपि घटादिप्रत्यक्षं जायत एवेति वाच्यम् । मन्मतेऽपि तदिन्द्रियकरणकतद्धर्मप्रकारकज्ञानसामग्र्यन्तरस्य सामान्यलक्षणासहकारित्वात् घटज्ञानरूपघटोपनीतभानसामग्रीं विना तादृशज्ञानस्यानिष्टत्वात् ।

यत्तु विशेषणज्ञानस्याहेतुत्वे ज्ञानलक्षणाया लौकिकान्यघटादिविषयताशालिप्रत्यक्षत्वमेव जन्यतावच्छेदकं वाच्यं, मन्मते लौकिकान्यत्वमनिवेश्य घटादिविषयताशालिमानसत्वस्यैव तथात्वमभ्युपेयत इति लाघवम्, घटादिलौकिकमानसविरहेण व्यभिचाराभावात् । न च मन्मतेऽपि मानसत्वनिवेशान्न व्यभिचार इति वाच्यम् । भवन्मते घटादिज्ञानं विना घटादिगोचरचाक्षुषाद्युपनीतभानापत्तिवारणाय तत्साधारणप्रत्यक्षत्वस्यैव निवेशनीयत्वात् । विशेषणज्ञानहेतुतामते च चाक्षुषाद्युपनीतभानोपनीतस्य विशेषणतया विशेषणज्ञानजन्यतावच्छेदकानाक्रान्ततया

ज्ञानलक्षणाजन्यतावच्छेदककोटौ मानसत्वनिवेशेऽप्यनुपपत्त्यभावात् । न च तत्र विशेषणज्ञानस्य हेतुताकल्पनापेक्षया लौकिकान्यत्वस्य ज्ञान- लक्षणप्रत्यासत्तिजन्यतावच्छेदककोटौ निवेश एव समुचित इति वाच्यम् । लौकिकान्यत्वविषयतात्वयोरुद्देश्यतावच्छेदकतया तदवच्छिन्नांशे विषयता- या विषयताप्रत्यासत्त्या वा निवेशे विनिगमनाविरहेण कार्यकारणभावद्वय- स्याधिक्यादिति । तदप्यसत् । ज्ञानलक्षणाया विषयभेदेन कारणताभे- दे गौरवात्, विषयतामनिवेश्य विषयताप्रत्यासत्त्या एव कारणता- कल्पनात् । सुखादिविषयकलौकिकमानसे व्यभिचारवारणायलौकि- कान्यत्वनिवेशस्यावश्यकतया प्रत्यक्षत्वस्यैव जन्यतावच्छेदकत्वौचि- त्यात्, अन्यथा विशेषणज्ञानहेतुताया आधिक्येन गौरवात् । एवं सामान्यलक्षणाजन्यमानसे व्यभिचारवारणायाऽव्यवहितोत्तरत्वनि- वेशस्यावश्यकतया तत एव लौकिकसन्निकर्षजन्यज्ञाने व्यभिचा- रवारणसम्भवात् अस्मतेऽपि लौकिकान्यत्वं न निवेश्यत इत्य- स्यापि वक्तुं शक्यत्वात् ।

केचित्तु मानसोपनीतभाने मुख्यविशेष्यताया अनुगतनियामकान्त- रासम्भवेन मुख्यविशेष्यता ज्ञानसन्निकर्षजन्यतावच्छेदककोटावेव निवे- श्यते, इत्थं च मुख्यविशेष्यताघटितधर्मात्मकजन्यतावच्छेदकस्य बहि- रिन्द्रियजन्यज्ञानसाधारण्याभावात्तत्र विशेषणज्ञानहेतुत्वानभ्युपगमे ज्ञान- लक्षणाया हेतुत्वान्तरं कल्पनीयम्, मम तु विशेषणज्ञानहेतुतयैव निर्वाहः।

तदप्यशुद्धम् । निखिलघटादिमानसानां तन्मुख्यविशेष्यकत्ववारणा- यानुगतनियामककल्पनाया आवश्यकतया ज्ञानलक्षणाजन्यतावच्छेदक- कोटौ मुख्यविशेष्यतानिवेशे प्रयोजनाभावात् । न चाननुगतनियामकात्त- त्तद्व्यक्तित्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेनैव हेतुतया तादृशस्थलेमु- ख्यविशेष्यतानिवेशे ज्ञानलक्षणाजन्यतावच्छेदककोटावेव तन्निवेश्यते लाघवात्, ज्ञानलक्षणायां तन्मुख्यविशेष्यताशालिज्ञानजनने तत्त- द्व्यक्तीनामेव सहकारितेति नातिप्रसङ्ग इति वाच्यम् । एतादृशरीत्या- ऽतिप्रसङ्गवारणे आत्मन एव हेतुत्वान्तरं कल्पयित्वा तज्जन्यतावच्छेदक एव मुख्यविशेष्यतानिवेशौचित्यात्, विशेषणज्ञानज्ञानलक्षणप्रत्यासत्त्यो- र्हेतुताद्वयकल्पनापेक्षया ज्ञानलक्षणाया आत्मनश्च हेतुताकल्पनस्यैवोचि- तत्वात्, तद्विषयकज्ञानत्वापेक्षया आत्मत्वस्य हेतुतावच्छेदकत्वे लाघवा- त्, इत्थं च निखिलमानसानां मुख्यविशेष्यताशालित्वोपगमेऽपि मुख्य- विशेष्यताया ज्ञानप्रत्यासत्तिजन्यतावच्छेदककोटिनिवेशनमयुक्तमेवेति ।

केचित्तु विशिष्टबुद्धौ विशेषणज्ञानस्याहेतुत्वेऽप्रसिद्धसाध्यकपराम-

र्शात्पृथिव्यामितरभेद इत्याकारकसाध्यविशेष्यकानुमित्युत्पादकाले इतरभेदप्रकारकानुमित्यापत्तिः, पृथिव्यामितरभेदः पृथिवीतरभेदवतीत्याद्याकारकद्विविधविषयताशाल्यनुमितेरनुभवविरुद्धतया इष्टापत्तेरयुक्तत्वादिति तद्धेतुत्वमावश्यकम् । न च तादृशानुमितावन्वयव्याप्त्यवगाहिपरामर्शस्य हेतुतया तदभावादेव नापत्तिरिति वाच्यम् । व्यतिरेकव्याप्त्यवगाहिपरामर्शादपि स्वातन्त्र्येण इतरभेदोपस्थितिदशायां साध्यप्रकारकानुमित्युत्पादेन तादृशपरामर्शघटितसामग्र्यास्तथाविधानुमित्युत्पादस्यावश्यं स्वीकरणीयत्वात् । न च तत्रापि इतरभेदविशेष्यकैवानुमितिरुत्पद्यते नतु तत्प्रकारिकेति वाच्यम् । साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेर्विरोधित्वात्, अन्यथा उभयपरामर्शदशायां द्विविधविषयताशाल्यनुमित्यापत्तिरित्याहुः ।

तदप्यसत् । एतादृशयुक्त्या विशिष्टानुमितित्वावच्छिन्नं प्रत्येव तद्धेतुतायाः कल्पयितुं युक्तत्वात् प्रत्यक्षादिविशिष्टबुद्धौ विशेषणज्ञानहेतुत्वासिद्धेः । न च विशिष्टानुमितित्वं विशिष्टानुभवत्वं वा जन्यतावच्छेदकम् इत्येतादृशविनिगमनाविरहेणैव प्रत्यक्षादावपि तज्जन्यत्वमायास्यतीति वाच्यम् । विशिष्टानुभवत्वस्य तथात्वे निर्विकल्पककल्पनागौरवात्, अन्यथा प्राथमिकविशिष्टप्रत्यक्षे व्यभिचारात् ।

वस्तुतस्तु पृथिवीतरभेदवतीत्याद्याकारकानुमितिर्विशिष्टवैशिष्ट्यान्येव प्रसिद्धसाध्यक परामर्शादापादनीया, तत्र च विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वात्तदभावादेव नापत्तिः । न च यत्रेतरभेदत्वप्रकारेण घटज्ञानं तत्र व्यतिरेकपरामर्शात्पृथिवीतरभेदवतीत्याकारकानुमित्यापत्तिः विशेषणतावच्छेदकप्रकारकज्ञानस्य सत्त्वादिति वाच्यम् । इष्टत्वात् । न च तत्र साध्यप्रसिद्ध्यभावेन साध्यविशेष्यकानुमितिसामग्र्या अपि सत्त्वात् द्विविधविषयताशाल्यनुमित्यापत्तिरिति वाच्यम् । साध्यप्रसिद्धेः साध्यतावच्छेदकप्रकारकज्ञानत्वेनैव प्रतिबन्धकत्वकल्पनात् । अत एव भेदत्वादिप्रकारेण घटाद्यवगाहिप्रसिद्धेरपि इतरभेदत्वावच्छिन्नविशेष्यकानुमितिविरोधित्वम्, तस्माद्विशेषणज्ञानस्य विशिष्टबुद्धिहेतुत्वम्, निर्विकल्पकात्मकज्ञानं चाप्रामाणिकमेवेति ।

अत्राहुः । जातित्वादिना घटत्वादिप्रकारकजातिमानित्यादिज्ञानीयघटत्वप्रकारताताः स्वरूपतो घटत्वाद्यवगाही घट इत्याकारकज्ञानीयघटत्वादिप्रकारताया वैलक्षण्यमनुभवसिद्धमेव, तादृशविलक्षणप्रकारता च यदि तत्प्रकारकज्ञानसामग्रीमात्रनियम्या, तदा जातिमानित्याकारकज्ञानकाले तादृशप्रकारताशालिज्ञानोत्पत्तौ बाधकाभावात्

केवलं जातिमानित्याकारकं ज्ञानं कदापि न स्यात्, स्याच्च जातिमा-न्घट इत्याद्याकारकमेव, तस्मात्तादृशविलक्षणघटत्वादिप्रकारताशालि-बुद्धिं प्रति विशेष्यताभिन्नघटत्वादिविषयताशालिज्ञानहेतुत्वेन हेतुत्वमा-वश्यकम्, तादृशप्रकारतानिष्ठवैलक्षण्यमपि विशेष्यताभिन्नत्वमेव जातिमा-नित्याकारकज्ञानीयघटादिविशेष्यतानिरूपितघटत्वादिप्रकारताया जाति-त्वादिप्रकारतानिरूपितविशेष्यतारूपत्वात्, इत्थं च यत्र जातित्वादिनैव घटत्वादिज्ञानं न तु स्वरूपतः, तत्र न केवलं जातिमानित्यादिज्ञानम्, यत्र च स्वरूपतस्तज्ज्ञानं जातित्वाद्युपस्थितिश्च वर्त्तते तदा जातिमान् घटश्चेति ज्ञानमिति न काप्यनुपपत्तिः ।

अथ स्वरूपतो घटत्वप्रकारताशालिप्रत्यक्षं प्रति विरोधिन्यां जातित्वेन घटत्वप्रकारकप्रत्यक्षं जायतामित्येतादृशेच्छायां विरोधिसामग्रीकाले तादृ-शप्रकारताशालिप्रत्यक्षोत्पत्त्यसम्भवात् केवलं जातिमानिति प्रत्यक्षं भविष्य-ति, अन्यथा जातिमान् घटश्चेति, तदा किं तादृशविशेषणताज्ञानहेतुतया । न च स्वरूपतो घटत्वप्रकारकप्रत्यक्षस्थलीयप्रतिबन्धकतायां जातित्वेन घटत्वप्रकारकप्रत्यक्षं जायतामित्येतादृशेच्छायामपि घटत्वप्रकारकप्रत्यक्षे-च्छात्वेनाप्युत्तेजकत्वात्तत्कालेऽपि स्वरूपतो घटत्वावगाहिप्रत्यक्षो-त्पत्तौ बाधकाभाव इति वाच्यम् । जातित्वभासकसामग्र्यसत्त्वे जातित्वेन घटत्वप्रत्यक्षं जायतामित्येतादृशेच्छाबलात् घट इत्याकारकप्रत्यक्षवारणाय तादृशेच्छाया उक्तरूपेणैव घटत्वप्रकारकं प्रत्यक्षं जायतामित्येतादृशेच्छायाः स्वरूपतो घटत्वप्रकारकप्रत्यक्षं प्रति प्रतिबन्धकतायामुत्तेजकत्वस्य स्वीक-रणीयत्वादिति चेन्न । विरोधिसामग्र्यभावादिमात्रस्य तादृशप्रकारतानि-यामकत्वे विरोधिसामग्रीशून्यकाले कस्यचिदपि केवलं जातिमानिति ज्ञा-नानुत्पादप्रसङ्गात्, तस्य च अनुभवविरुद्धत्वात् ।

अथ स्वरूपतस्तद्विशिष्टबुद्धौ तदंशेऽन्याप्रकारकज्ञानत्वेन हेतुत्वे जा-तित्वाद्युपस्थितिदशायां घटत्वांशे जातित्वभाने बाधकाभावेन निर्विक-ल्पकानुपपत्तिः । एवं प्रमेयं जानामीत्यनुव्यवसायोऽपि प्रायशो न स्यात्, तदा प्रमेयत्वज्ञानसत्त्वेन ज्ञानत्वादौ प्रमेयभाने बाधकाभावात् तत्र ज्ञान-त्वादिनिर्विकल्पकासम्भवादिति चेन्न । जातित्वाद्युपस्थितिदशायां यदा-घट इत्याकारकं प्रत्यक्षं तत्र घटप्रकारघटत्वांशेऽन्याप्रकारकस्मरणं फला-नुरोधेन कल्प्यते, एवं प्रमेयं जानामीत्यनुव्यवसायपूर्वमपि ज्ञानत्वांशेऽ-न्याप्रकारकस्मरणमिति नानुपपत्तिः । न च चक्षुःसंयोगादिदशायां चाक्षु-षादिसामग्र्याः बलवत्याः सत्त्वात्कथं घटत्वादिविषयकस्मरणमुत्पत्स्यते इति वाच्यम् । फलबलेन तदानीं चाक्षुषादिजनकीभूतचक्षुःसंयोगाद्य-

भावस्यैव कल्पनेन चाक्षुषादिसामग्र्या अव्यसम्भवात् ।

अथ वा तत्पूर्वोत्पन्नघटत्वाद्यवगाहिज्ञाने जातित्वादिना घटत्वादिविषयकेऽपि फलबलान्निरवच्छिन्नघटत्वादिविषयताशालित्वमप्यभ्युपगम्यते निरवच्छिन्नसावच्छिन्नविषयत्वयोः विरोधे प्रमाणाभावात्, एवञ्च तदुत्तरं घट इत्यादिज्ञानमुपपन्नमेव । अथ केवलं जातिमानित्याकारकज्ञानसत्त्वे घटत्वावगाहिज्ञानमेव कथम् ? निरवच्छिन्नघटत्वादिविषयताशालिबोधे अवच्छिन्नतद्विधेयताशालिबोधसामग्र्या विरोधित्वे चोपदर्शितावच्छिन्नविषयताशालिज्ञानस्य कथं तादृशविषयताशालित्वमिति चेन्न । तादृशप्रतिवध्यप्रतिबन्धकभावं विनैव तत्तदात्ममनोयोगतत्तत्सन्निकर्षव्यक्तीनामेव तादृशविषयतानियामकत्वोपगमात् । न च तर्हि स्वरूपतस्तद्विशिष्टबुद्धावेवानुगतनियामककल्पनमुचितम्, अन्यथा विशेषणज्ञानहेतुताया आधिक्यप्रसङ्गादिति वाच्यम् । अननुगतनियामककल्पनापेक्षया विशेषणज्ञानहेतुताया लाघवेनैव सिद्धेर्निर्विकल्पकीयविषयताया अननुगतनियामककल्पने गौरवज्ञानस्य चोदीच्यतया उपजीव्यतादृशहेतुताकल्पनाया अविरोधित्वादिति । एवं च सिद्धे विशेषणज्ञानहेतुत्वे निर्विकल्पकसिद्धिरप्रत्यूहैव, अन्यथा घट इत्याकारकप्राथमिकविशिष्टबुद्धौ व्यभिचारप्रसङ्गात् ।

अथ प्राथमिकविशिष्टबुद्धौ व्यभिचारवारणाय विशेषणविषयकं स्मरणमेव तत्र कल्प्यताम्, निर्विकल्पककल्पनेऽतिरिक्तविषयताकल्पनप्रसङ्गात् निरवच्छिन्नविषयतायास्तदतिरिक्तज्ञाने क्लृप्तत्वात् । न च तदानीं स्मरणकल्पनेऽननुगतोद्बोधकहेतुत्वस्याधिक्येन निर्विकल्पकस्वीकार एवोचित इति वाच्यम् । निर्विकल्पककल्पनेऽपि तत्तद्व्यक्तिपौर्वापर्यनिर्वाहाय तत्तदात्ममनोयोगादिव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुताया आवश्यकत्वान्मन्मतेऽपि तेषामेवोद्बोधकत्वाभ्युपगमेन कारणताबाहुल्याभावात् । न च तादृशविशिष्टबुद्ध्यादेः प्राग्विशेषणविषयको यत्रानुभवो नास्ति तत्र स्मरणासम्भवेन निर्विकल्पकमावश्यकमिति वाच्यम् । तत्रापि जन्मान्तरीयसंस्कारादेव तत्र स्मरणोपगमात् इति चेत् ।

एवमपि अपूर्वचैत्रत्वादिजातिविशेषस्य प्रागननुभूततया तस्य स्मरणासम्भवेन निर्विकल्पकस्यावश्यकत्वादिति दिक् ॥ ० ॥

विशेषणज्ञानजन्यतावच्छेदकं तु न विशेषणज्ञानत्वं स्मरणे व्यभिचारात् कारणतावच्छेदककोटौ ज्ञानत्वमनिवेश्य संस्कारसाधारणतद्विषयकत्वेन हेतुत्वे घटत्वांशेऽन्याप्रकारकानुद्बुद्धसंस्कारतः कदाचिदपि केवलं जातिमानित्याकारकप्रत्ययस्यानुत्पादप्रसङ्गात् । नापि विशिष्टानुभवत्वं तथा,

अनुभवत्वजातेः बाधाभावजन्यतावच्छेदकतया सिद्धपरोक्षत्वजात्या सांकर्येण निरस्तत्वात् । स्मृत्यन्यज्ञानत्वरूपस्य तस्य निवेशे च गौरवात्, किन्तु तादृशप्रकारताशालिप्रत्यक्षत्वमेव तथा, अनुमित्यादिस्थले परामर्शविशेषाणामेव तादृशविलक्षणप्रकारतानियामकत्वसम्भवेनैतादृशविलक्षणज्ञानजन्यतावच्छेदकस्य तत्साधारण्याभावेऽपि क्षतिविरहात् ।

यत्तु–विशिष्टबुद्धित्वमेव जन्यतावच्छेदकं, निर्विकल्पकात्मकस्मरणस्य च विशिष्टस्मरणप्राक्काले स्वीकारान्न तत्र व्यभिचार–इति ।

तदसत् । विशिष्टप्रत्यक्षत्वस्यैव जन्यतावच्छेदकत्वेनोपपत्तौ निर्विकल्पकात्मकस्मरणस्य विशिष्टस्मरणपूर्वं कल्पनस्यानुचितत्वात् ।

अथ निर्विकल्पकात्मकस्मरणोपगमे ज्ञानत्वमपि न निवेश्यते किन्तु तत्प्रकारत्वमेव तथा इति लाघवम्, तत्प्रकारकप्रत्यक्षत्वस्य तथात्वे तत्प्रकारकप्रत्यक्षत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण कार्यकारणभावद्वयप्रसङ्गात् अवच्छेदकगौरवाच्च । कारणतावच्छेदकं च संस्कारव्यावृत्तं ज्ञानेष्वसाधारणवैजात्यम् , अन्यथा यत्र फलसाधनताज्ञानानन्तरं फलेच्छा ततः प्रवृत्तिस्ततः कार्योत्पत्तिः तत्र फलोत्पत्तिकाले फलसाधनताज्ञानस्य नाशेन व्यभिचारप्रसङ्गात् । न च तत्प्रकारकत्वस्येश्वरज्ञानसाधारण्यात् जन्यत्वनिवेशस्यावश्यकतया गौरवमिति तदपेक्षयेश्वरप्रत्यक्षव्यावृत्तप्रत्यक्षत्वावान्तरजातेरवच्छेदकत्वमिति वाच्यम् । नित्यसाधारणधर्मस्यावच्छेदकत्वे क्षतिविरहात् । न च तत्प्रकारकतद्विशेष्यकस्मृतित्वस्यैव तत्प्रकारकतद्विशेष्यकसंस्कारजन्यतावच्छेदकतया कथं तादृशसंस्कारान्निष्प्रकारकस्मरणमुत्पत्स्यत इति वाच्यम् । तदनुरोधेन तद्विषयकस्मृतित्वावच्छिन्नं प्रति तद्विषयकसंस्कारत्वेन हेतुत्वान्तरोपगमात् । न च तादृशकार्यकारणभावान्तरकल्पनापेक्षया तत्प्रकारकप्रत्यक्षत्वस्य विशेषणज्ञानजन्यताच्छेदत्वमुचितमिति वाच्यम् । तत्प्रकारकत्वस्य जन्यतावच्छेदकत्वे लाघवेन निर्विकल्पकात्मकस्मरणसिद्धौ तन्नियामककारणताकल्पनस्य फलमुखत्वादिति चेन्न ।

विषयविशेषं निवेश्य कार्यकारणभावकल्पने गौरवमिति प्रकारतासम्बन्धेनप्रत्यक्षत्वावच्छिन्नं प्रति विषयतासम्बन्धेन ज्ञानत्वेनैव विषयमनिवेश्य हेतुत्वं कल्प्यते, इत्थं च प्रकारत्वप्रत्यक्षत्वयोरेकत्रानिवेशे विनिगमनाविरहासम्भवात् अवच्छेदकागौरवाच्च स्मरणसाधारणधर्मस्यावच्छेदकत्वं स्वीकृत्य निर्विकल्पकात्मकस्मरणकल्पनाऽनुचितैवेति कृतं पल्लवितेन ॥

अथ जात्यतिरिक्तपदार्थस्य स्वरूपतो भानं न स्वीक्रियत इति निय-

मस्य कोऽर्थः ? न तावज्जात्यतिरिक्तपदार्थत्वव्यापकविशेष्यत्वान्यप्रकारतानिरूपकत्वाभावः, 'अयं घट' इत्याकारकज्ञाने इदन्त्वांशे निरूपकतासम्बन्धेन विशेष्यत्वान्यप्रकारतासम्बन्धेन इदन्त्वस्य घटादिरूपतया घटवृत्तिरूपादिस्वरूपतया वा तत्रैव व्यभिचारादिति चेन्न ।

किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितप्रकारत्वान्यनिरवच्छिन्नप्रकारत्वाभावो जात्यतिरिक्तपदार्थत्वव्यापक इति नियमार्थः । 'अयं घट' इत्यत्र किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितैव इदन्त्वप्रकारता न ततो भिन्नेति न व्यभिचार इति । प्रकारतायां निरवच्छिन्नत्वोपादानात् घटवानित्याकारकज्ञानीयकिञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतान्यघटत्वावच्छिन्नप्रकारत्वानिरूपकत्वस्य घटे सत्त्वेऽपि न व्यभिचारः, तादृशप्रकारतायां निरवच्छिन्नत्वाभावसत्त्वेन विशिष्टाभावसत्त्वात् ।

अथ जात्यतिरिक्तपदार्थस्य स्वरूपतः प्रकारताशालिज्ञानं कथं न जायते ? तादृशविषयताशालिज्ञानजनकसत्त्वात् । न च निरवच्छिन्नप्रकारतासम्बन्धेन ज्ञानं प्रति निरवच्छिन्नविषयतासम्बन्धेन ज्ञानत्वेन हेतुत्वकल्पनात निरवच्छिन्नविषयतासम्बन्धेन पटादौ ज्ञानस्य विरहेण न निरवच्छिन्नप्रकारतासम्बन्धेन ज्ञानापत्तिरिति वाच्यम् । 'अयं घट' इति ज्ञाने इदन्त्वांशे स्वरूपतो विषयतासत्त्वादिति चेन्न ।

निरुक्ततादृशविशेष्यतानिरूपितप्रकारत्वान्यनिरवच्छिन्नप्रकारतासंबन्धेन ज्ञानत्वावच्छिन्नं प्रति स्वसामानाधिकरण्यस्वनिष्ठसमवायसम्बन्धावच्छिन्नावच्छेदकतानिरूपितप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन सत्त्वेन कारणत्वोपगमात्, तथाच तादृशोभयसम्बन्धेन सत्त्वस्य च जात्यतिरिक्तपदार्थे सत्त्वेन न तादृशनिरुक्तविशेष्यतानिरूपितप्रकारत्वान्यनिरवच्छिन्नप्रकारतासम्बन्धेन ज्ञानापत्तिरिति मदुक्तदिशा सर्वत्रानुसरणीयत्वादिति दिक् ॥

इति विशिष्टबुद्धिं प्रति विशेषणज्ञानकारणतावाद(७)वीचिः ।

श्रीगणाधिपतये नमः ॥

# महामहोपाध्याय श्रीगदाधरभट्टाचार्यविरचितः
## संशयवाद(८)वीचिः ॥

ननु किन्नाम संशयत्वम्? तद्धि न तावत्सन्देह्मीत्यनुभवसिद्धो जातिविशेषः, चाक्षुषत्वादिना सङ्करात्, आंशिकत्वोपगमाच्च। नापि तत्तदभावोभयप्रकारकज्ञानत्वम्, 'भूतलं घटवत्, गुणश्च घटाभाववानि' त्यादिसमूहालम्बनेऽतिव्याप्तेः । नापि एकधर्मिकतत्तदभावोभयप्रकारकज्ञानत्वम्, विभिन्नधर्मितावच्छेदककैकधर्मिकतत्तदभावोभयप्रकारकसमूहालम्बनेऽतिव्याप्तेः । न च समानधर्मितावच्छेदककतत्तदभावोभयप्रकारकज्ञानत्वं, तदिति वाच्यम् । 'भूतलं घटवत् घटाभाववच्चे'त्यादिसमुच्चयेऽतिव्याप्तेः, समुच्चयस्य कोटिद्वयांश एव निश्चयरूपत्वात् । न च समुच्चयस्य निश्चयरूपत्वे तदुत्पत्तिरेव कथं स्यात्, तदभावनिश्चयतन्निश्चययोः कार्यसहभावेन तत्तदभावविशिष्टबुद्धिप्रतिबन्धकत्वादिति वाच्यम् । घटतदभावादेरव्याप्यवृत्तित्वग्रहदशायामेव समुच्चयोपपत्तिसम्भवात्, अव्याप्यवृत्तित्वग्रहाभावविशिष्टस्यैव तदभावनिश्चयस्य विशेष्यतावच्छेदकसामानाधिकरण्येन ग्राह्यधाभावनिश्चयस्य विशेष्यतावच्छेदकसामानाधिकरण्येन विशिष्टबुद्धावप्रतिबन्धकत्वादव्याप्यवृत्तित्वग्रहाभावदशायामपि विशेष्यतावच्छेदकसामानाधिकरण्येनैव तत्तदभावोभयसमुच्चयसम्भवाच्च । अत एवाव्याप्यवृत्तित्वग्रहाभावदशायामपि पक्षतावच्छेदकसामानाधिकरण्येन साध्यतदभावोभयप्रकारिका समुच्चयरूपाऽनुमितिः सर्वसिद्धा इति चेत् ।

अत्र प्राञ्चः—विशेष्यतावच्छेदकावच्छेदेन तत्तदभावाद्यन्यतरकोट्यवगाह्येकधर्मितावच्छेदककतत्तदभावाद्युभयकोटिकं प्रत्यक्षं संशयः । तद्धर्मितावच्छेदकावच्छेदेन तत्तदभावाद्यन्यतरकोटिमवगाहते यत्तद्धर्मितावच्छेदककतत्तदभावाद्युभयकोटिकं प्रत्यक्षं तत्त्वं तद्धर्मितावच्छेदककतत्संशयत्वमिति तु निष्कर्षः । आदिपदात्तत्तद्भेदपरिग्रहः । अव्याप्यवृत्तित्वग्रहविरहदशायां 'भूतलं घटवत् घटाभाववच्चे' त्यादिसमुच्चये विशेष्यतावच्छेदकसामानाधिकरण्येनैव तत्तदभावादिः प्रकारः, न तु विशेष्यतावच्छेदकावच्छेदेन संशयस्य तु विशेष्यतावच्छेदकावच्छेदेन तत्तदभावान्यतरप्रकारकत्वनियमात् । अव्याप्यवृत्तित्वग्रहदशायां वृक्षत्वाद्यवच्छेदेन 'वृक्षः संयोगवान् तदभाववाँश्चे'त्याद्यनुमितौ स्मृतौ चातिव्याप्तिवारणाय प्रत्यक्षत्वनिवेशः । प्रत्यक्षातिरिक्तज्ञाने संशयत्वा-

भावेन तयोरलक्ष्यत्वात्, तयोः संशयत्वे चाव्याप्यवृत्तित्वग्रहनाशेऽपि तत्सत्त्वे वृक्षादौ संयोगादिमत्त्वग्रहापत्तेः। अत एव संशयात्मकयोग्यताज्ञानात् 'वर्णो नश्यति नवे'त्यादिविप्रतिपत्तिवाक्यजन्यस्य वर्णत्वाद्यवच्छेदेन स्वरूपादिसम्बन्धेन नित्यत्वतदभावादिप्रकारकशाब्दबोधस्यापि न संशयत्वम्। न च तस्य निश्चयरूपत्वे तदुत्पत्तिरेव कथं स्यात् ग्राह्याभावनिश्चयस्य कार्यसहभावेन विशिष्टबुद्धौ प्रतिबन्धकत्वादिति वाच्यम्। शाब्दान्यविशिष्टबुद्धेरेव प्रतिबध्यत्वात्। न च तथापि तदनन्तरं कथमस्य संशय इति वाच्यम्। वादिवाक्यजन्यत्वेनाप्रामाण्यज्ञानानन्तरमेव मानससंशयाभ्युपगमात्। न च प्रत्यक्षत्वनिवेशेऽपि अव्याप्यवृत्तित्वग्रहदशायां वृक्षत्वाद्यवच्छेदेन 'वृक्षः संयोगवान् तदभाववाँश्चे'तिप्रत्यक्षेऽतिव्याप्तिस्तस्य समुच्चयत्वादिति वाच्यम्। अव्याप्यवृत्तित्वाग्रहदशायां वृक्षत्वाद्यवच्छेदेन 'वृक्षः संयोगवान्नवे'तिप्रत्यक्षवत् तस्य संशयत्वात्। अव्याप्यवृत्तित्वग्रहनाशेऽपि तादृशप्रत्यक्षसत्त्वे वृक्षादौ संयोगादिमत्त्वग्रहस्येष्टत्वात्। न च तथापि 'अयं गौरश्वो वे'त्यादिभावद्वयकोटिकसंशयेऽव्याप्तिर्दुर्वारा, तत्र गोत्वाभावादेरप्रकारत्वादिति वाच्यम्। तत्र संशयत्वस्य विवादग्रस्तत्वेनालक्ष्यत्वात्तत्सत्त्वे'ऽयं गौरश्वो न वेति'संशयानुत्पादस्य सर्वसिद्धत्वात्, तस्य प्रतिबन्धकत्वे संशयत्वविवादस्यैव तत्रासम्भवात् इत्याहुः॥

साम्प्रदायिकास्तु–तत्तदभावाद्यन्यतरकोट्यंशे विरोधसंसर्गकैकधर्मितावच्छेदककतत्तदभावाद्युभयकोटिकं प्रत्यक्षं संशयः, स च क्वचिद्विशेष्यतावच्छेदकावच्छेदेन, क्वचिच्च तत्सामानाधिकरण्येन भवति। समुच्चये च विरोधो न संसर्ग इति न तत्रातिव्याप्तिः। संशये च क्वचिद्भावकोटिविरोधविशिष्टविशेषणताविशेषसम्बन्धेनाभावकोटेः, क्वचिदभावकोटिविरोधविशिष्टसमवायसम्बन्धेन भावकोटेः, क्वचित्परस्परविरोधविशिष्टसम्बन्धेन भावकोटेरभावकोटेश्च धर्मिणि प्रकारत्वम्, क्वचित्त्वभावकोट्युपरि प्रतियोगिनः प्रकारत्वमेव भावकोटिविरोधविशिष्टप्रतियोगितासम्बन्धेनेत्यभ्युपगमात्। विरोधस्तु तदधिकरणावृत्तित्वम्। अत एव वाशब्देन संशयस्य चशब्देन समुच्चयस्याभिलापः, वाशब्दस्य विरोधसंसर्गतास्फोरकत्वात्। एवञ्चाव्याप्यवृत्तित्वग्रहदशायां 'वृक्षः संयोगवान् तदभाववाँश्चे'ति प्रत्यक्षमपि न संशयो विरोधस्यासंसर्गत्वात्, किन्तु समुच्चय एव। विरोधसंसर्गतात्पर्यकेन 'वर्णो नश्यति नवेत्या'दिविप्रतिपत्तिवाक्येन संशयात्मकयोग्यताज्ञानसहकाराज्जनितस्य 'वर्णो नश्यति नवे'त्यादिविरोधसंसर्गकशाब्दबोधस्य वारणाय प्रत्यक्षत्वनिवेशः। न च त-

स्य लक्ष्यत्वमस्तु किं प्रत्यक्षत्वनिवेशेनेति वाच्यम् । प्रत्यक्षातिरिक्तज्ञाने संशयत्वव्यवहाराभावात्, तस्य संशयत्वे विनापि वादिवाक्यजन्यत्वेनाप्रामाण्यज्ञानं तदनन्तरं मानससंशयापत्तेः । यदि च विरोधसंसर्गेण शाब्दबुद्धेर्विवादग्रस्तत्वात् तत्संसर्गान्तर्भावेण योग्यतादिज्ञानस्य हेतुत्वाकल्पनात् तादृशविप्रतिपत्तिवाक्यस्थले विरोधसंसर्गेण शाब्दबोध एव न जायते किन्तु पदार्थोपस्थितिसहकारेण तदुत्तरं मानससंशय एवेति विभाव्यते, तदापि यत्र विरोधसंसर्गेणैव साध्यतदभावयोर्व्याप्तिज्ञानं पक्षतावच्छेदकसामानाधिकरण्येन च साध्यतदभावयोस्तादृशव्याप्तिविशिष्टवत्तापरामर्शस्तत्र पक्षतावच्छेदकसामानाधिकरण्येन विरोधसंसर्गेण साध्यतदभावयोः समूहालम्बनानुमितावतिव्याप्तिवारणायैव प्रत्यक्षत्वनिवेश आवश्यकः, प्रत्यक्षातिरिक्तज्ञाने संशयत्वव्यवहाराभावात् । तस्य संशयत्वे तदुत्तरं पक्षतावच्छेदकावच्छेदेन साध्यतदभावयोरुपनीतभानाद्यापत्तेरित्याहुः ॥

नव्यास्तु—कोटिद्वयप्रकारताद्वयनिरूपितैकविशेष्यताशालिज्ञानत्वमेव संशयत्वम् । संशये सन्देह्मीत्यनुभवसिद्धा तत्तदभावोभयप्रकारतानिरूपिता धर्मिण्येकैव विशेष्यता, प्रकारताभेदेऽपि विशेष्यताभेदाभावात् । समुच्चये तत्तदभावलक्षणप्रकारभेदेन विशेष्यताद्वयी संशयातिरिक्तज्ञाने एकस्य विशेष्यत्वस्य प्रकारताद्वयानिरूपितत्वात्, संशयसमुच्चययोर्भेदान्यथाऽनुपपत्त्या लाघवात्तथैव कल्पनात् । न च संशये विशेष्यताद्वयी किन्न स्यात्, विनिगमकाभावात्, तावतापि संशयसमुच्चययोर्विशेषनिर्वाहादिति वाच्यम् । तथासति बाधनिश्चयादेः प्रतिबन्धकतावच्छेदकीभूतनिश्चयत्वस्य लघुनो दुर्वचत्वापत्तेरित्यस्यैव विनिगमकत्वात् । ननु संशये यदि विशेष्यताद्वयी समुच्चये चैकाऽङ्गीक्रियते, तदा भूतलं घटवन्नवेति संशयव्यावृत्तये भूतलं घटवत् घटाभाववच्चेति समुच्चयसङ्ग्रहाय च एवंरूपेण बाधबुद्धेः प्रतिबन्धकत्वं वाच्यम्, तथाहि घटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताकत्वे सति, घटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यतातिरिक्तघटाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताकान्यत्वे सति, घटाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताकान्यज्ञानत्वेन प्रतिबन्धकत्वमवश्यं वाच्यम् । घटवत्त्वज्ञानस्य घटविशिष्टबुद्धौ प्रतिबन्धकत्ववारणाय चरमं घटाभावत्वावच्छिन्नेति । अथ समुच्चये विशेष्यताद्वयी संशये चैकाऽङ्गीक्रियते; तदैवंरूपेण प्रतिबन्धकत्वं वाच्यम्, तथाहि घटाभावत्वावच्छिन्नप्रकारतातिरिक्तप्रकारत्वानिरूपितघटाभावत्वावच्छि-

न्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताकज्ञानत्वेन प्रतिबन्धकत्वं वाच्यम्, तथा च तादृशसंशयस्य न प्रतिबन्धकत्वम्, भूतलं घटवत् घटाभाववच्चेति समुच्चयस्य प्रतिबन्धकत्वं लब्धम्, तथा च पूर्वमते धर्मितावच्छेदकप्रवेशेन गौरवम्, एतन्मते च तदपेक्षयाऽतीव लाघवं धर्मितावच्छेदकानामप्रवेशादिति ॥ एतेन—प्रकारताभेदात् न क्वापि विशेष्यताभेदः, किन्तु विशेष्यतावच्छेदकभेदादेवैतद्भेदः, आवश्यकत्वादव्यभिचारित्वाच्च। संशयसमुच्चययोर्भेदस्तु सन्देह्मीत्यनुव्यवसायसिद्धविषयतानिष्ठवैलक्षण्यादेवोपपन्नः। विशेष्यतानिष्ठं वैलक्षण्यञ्च न प्रकारताद्वयनिरूपितत्वम् अपि तु विशेष्यतात्वव्याप्यधर्मविशेष इत्यपि परास्तम्। तद्वैलक्षण्यं विशेष्यतानिष्ठं प्रकारतानिष्ठं वा कल्प्यत इत्यत्र विनिगमकाभावात्। विनिगमकाभावेन सर्वत्रैव तदभ्युपगमे बाधबुद्ध्यादीनां प्रतिबध्यप्रतिबन्धकभावादेर्विनिगमकाभावेन बाहुल्यप्रसङ्गात्। विशेष्यतावच्छेदकभेदेनेव प्रकारताभेदेनाप्यविरुद्धोभयप्रकारकज्ञाने विशेष्यताभेदस्यानुभवसिद्धत्वाच्च, अन्यथा विशेष्यतावच्छेदकभेदेनापि विशेष्यताभेदस्य लाघवादपलापप्रसङ्गात्। न च तवापि संशयस्थले तत्तदभावोभयनिष्ठा एकैव प्रकारता, प्रकारतावच्छेदकभेदेऽपि प्रकारताभेदाभावात्, समुच्चये च तत्तदभावत्वलक्षणप्रकारतावच्छेदकभेदेन प्रकारताद्वयी इत्येव भेदकं किन्न स्यात्, विनिगमकाभावात्, तदभावावृत्तितद्वृत्तिप्रकारताकज्ञानत्वमेव तन्निश्चयत्वमिति निश्चयत्वस्यापि सुवचत्वादिति वाच्यम्। तथासति भूतलं घटवन्नवेतिसंशयस्य घटाभावत्वावच्छिन्नघटनिष्ठप्रकारताकत्वापत्तेः, घटत्वावच्छिन्नघटाभावनिष्ठप्रकारताकत्वापत्तेश्च। न चेष्टापत्तिः, तथासति घटाभावत्वरूपेण घटस्य घटत्वरूपेण च घटाभावस्य ज्ञानं विनापि तादृशसंशयानुपपत्तेः, न्यायनये विशिष्टनिरूपितवैशिष्ट्यबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्य हेतुत्वात्, तस्य च तद्धर्मावच्छिन्नतन्निष्ठप्रकारताकज्ञानत्वेन तद्धर्मप्रकारकज्ञानत्वेन हेतुहेतुमद्भावात्। घटाभावत्वेन घटाभावं सन्देह्मि घटत्वेन घटं सन्देह्मि, घटाभावत्वेन घटाभावप्रकारकज्ञानवानहं घटत्वेन घटप्रकारकज्ञानवानहमित्यनुव्यवसायवत्, घटाभावत्वेन घटं सन्देह्मि घटत्वेन घटाभावं सन्देह्मि, घटाभावत्वेन घटप्रकारकज्ञानवानहं घटत्वेन घटाभावप्रकारकज्ञानवानहमित्यनुव्यवसायप्रसङ्गाच्च।

ननु तथापि विशेष्यताविशेषस्य संशयत्वरूपत्वे तादृशविशेष्यताशालिज्ञानं क्वचिदेव जायते क्वचिन्नेत्यत्र किं नियामकम्? धर्मितावच्छेदकप्रका-

रकधर्मिधीसहिततत्तदभावोभयविशिष्टज्ञानसामान्यसामग्र्या एव तदुत्प-त्तिनियामकत्वे विशेष्यतावच्छेदकसामानाधिकरण्येन भूतलं घटवत् तद-भाववच्चेत्यादिसमुच्चयोत्पत्तिदशायां नियमतो विशेष्यतावच्छेदकसामा-नाधिकरण्येनभूतलं घटवन्नवेत्यादिसंशयोत्पादापत्तेः । न च समुच्चयस्य तत्तदभावोभयविशिष्टबुद्धिरूपत्वान्नोक्तापत्तिरिति वाच्यम् । विशेष्यता-वच्छेदकसामानाधिकरण्येन तदभाववत्तानिश्चयस्य तत्सामानाधिकर-ण्येन तद्वत्ताबुद्धावप्रतिबन्धकत्वात्, अन्यथाऽव्याप्यवृत्तित्वग्रहदशायां समुच्चय एव न स्यात् । न च विशेष्यतावच्छेदकसामानाधिकरण्येन संशयं प्रति विशेष्यतावच्छेदकसामानाधिकरण्येनैककोटिनिश्चयोऽपि विरोधी न तु तादृशसमुच्चये,प्राचीनादिमतसिद्धस्य तत्तदभावोभयप्रका-रत्वादिघटितसंशयत्वस्यार्थसमाजग्रस्तत्वेऽपि विषयताविशेषरूपस्य संशयत्वस्य कार्यतावच्छेदकत्वे बाधकाभावात्, विशेष्यतावच्छेदक-सामानाधिकरण्येन तत्तदभावनिश्चयोत्पत्तिदशायामिव तदुत्तरदशा-यामपि विशेष्यतावच्छेदकसामानाधिकण्येन संशयानुत्पादस्येष्टत्वात्, अस्तु वा संशयं प्रति सामान्यतो निश्चयसामग्र्येव प्रतिबन्धिकेति वा-च्यम् । तथा सति तत्तत्पदार्थतत्तदभावभेदेन संशयस्थलेऽतिरिक्ता-नन्तप्रतिबध्यप्रतिबन्धकभावकल्पनापत्त्या प्राचीनादिमतस्यैव सम्य-क्त्वात् । न च सम्प्रदायमतेऽपि विशेष्यतावच्छेदकसामानाधिकरण्येन भूतलं घटवत् तदभाववच्चेत्यादिसमुच्चयोत्पत्तिदशायां नियमतो विशेष्य-तावच्छेदकसामानाधिकरण्येन भूतलत्वावच्छिन्ने विरोधसंसर्गेण घटत-दभावादिप्रकारकज्ञानापत्तिवारणाय प्रतिबध्यप्रतिबन्धकभावकल्पनमा-वश्यकमिति वाच्यम् । विरोधसंसर्गाग्रहदशायां तदुत्पादासम्भवात्, तत्सत्त्वे तदुत्पादस्येष्टत्वात्, इति चेन्न ।

विशेष्यताविशेषरूपस्य संशयत्वस्य नियमतो विशेष्यतावच्छेदका-वच्छेदेनोभयकोटिकप्रत्यक्ष एवाभ्युपगमात्, न तु विशेष्यतावच्छेदक-सामानाधिकरण्येनोभयकोटिकप्रत्यक्षे, तादृशोभयकोटिकज्ञानमात्रस्यैव समुच्चयान्तर्गतत्वात्, तथा च निर्द्धर्मितावच्छेदकसंशयवत् विशेष्य-तावच्छेदकावच्छेदेनोभयकोटिकप्रत्यक्षातिरिक्तस्य संशयस्यालीकतया विशेष्यतावच्छेदकावच्छेदेन तद्वत्त्वादिविशिष्टबुद्धिसामग्र्यभावात् न तदानीं संशयापत्तिः । एवं धर्मिधीसहिततत्तदभावोभयविशिष्टधी-सामान्यसामग्रीसत्त्वेऽपि विशेष्यतावच्छेदकसामानाधिकरण्येन भूतलं घटवत् घटाभाववच्चेत्यादिसमुच्चयोत्पत्तिदशायां न भूतलं घटवन्नवेत्या-दिसंशयोत्पत्तिः, विशेष्यतावच्छेदकावच्छेदेन तद्वत्त्वादिविशिष्टबुद्धि

प्रति विशेष्यतावच्छेदकसामानाधिकरण्येन तत्तदभावादिनिश्चयस्यापि कार्यसहभावेन प्रतिबन्धकतया तत्र सामग्रीविरहात्। न चैवमव्याप्य-वृत्तित्वग्रहदशायां संयोगवान् तदभाववांश्च वृक्ष इति प्रात्यक्षिकसमु-च्चयोत्पत्तिकाले तादृशविशेष्यताविशेषात्मकसंशयत्वशालिज्ञानापत्तिर्दु-र्वारा, अव्याप्यवृत्तित्वग्रहाभावविशिष्टस्यैव तदभावादिनिश्चयस्य प्रति-बन्धकत्वादिति वाच्यम्। अप्रामाण्यग्रहदशायां निश्चयोत्पत्तिकाल इवाव्याप्यवृत्तित्वग्रहदशायामपि निश्चयोत्पत्तिकाले संशयोत्पत्तेरि-ष्टत्वात्। न च तथाप्यव्याप्यवृत्तित्वग्रहदशायां साध्यतदभावोभयप्रकार-कानुमित्युत्पत्तिकाले संशयोत्पत्तिर्दुर्वारा तदानीमपि संशयाभ्युपगमे-ऽनुभवविरोध इति वाच्यम्। तादृशविशेष्यताविशेषरूपस्य संशयत्वस्य प्रत्यक्षत्वव्याप्यतया प्रत्यक्षसामग्रीविरहादेव तदानीं तदनुत्पादात् इति प्राहुः॥

इति श्री महामहोपाध्यायगदाधरभट्टाचार्यविरचितः
संशयवाद(८)वीचिः समाप्तः॥

## (९) संशयवादवीचिः।

विशिष्टबुद्धिः संशयनिश्चयभेदेन द्विविधा। तत्र संशयत्वं न जातिः, चाक्षुषत्वादिना सङ्करात्।

अथ मानसत्वव्याप्यैव सा जातिः, संशयपूर्वकाले धर्मिज्ञानकोट्युपपस्थि-तेरावश्यकत्वात् ज्ञानलक्षणसन्निकर्षघटितसामग्रीबलात्सर्वत्र मानसस्यैव तस्य सम्भवात्। न च चक्षुःसन्निकर्षकाले तदसम्भवः, मानसं प्रति चाक्षु-षसामग्र्याः प्रतिबन्धकत्वादिति वाच्यम्। तत्र फलानुरोधेन चक्षुर्मनो-योगाकल्पनात्। न चायं पुरुषो नवेति संशयोत्तरं पुरुषं पश्यामीत्यनु-व्यवसायानुत्पादेऽपि धर्म्युपरागेण चाक्षुषत्वादिविषयताविशिष्टविषयक-स्याऽयं पश्यामीत्यनुव्यवसायस्य दुर्वारतया चाक्षुषत्वादिरूपस्य तस्य दुर्वारतैवेति वाच्यम्। संशयपूर्वकालोत्पन्नधर्मिचाक्षुषादिविषयकस्यैव तादृशानुव्यवसायस्य सम्भवात्, संशयस्य चाक्षुषत्वाद्यनभ्युपगमेऽपि क्ष-त्यभावात्। न चैवमपि संशयत्वजातौ मानाभाव इति वाच्यम्। अनु-

मितिजनकतावच्छेदककोटिप्रविष्टतया तत्सिद्धिः, अनुमितिं प्रति संशयाव्याप्यवत्ताज्ञानत्वेन हेतुत्वात् उपाध्यपेक्षया जातेर्लघुत्वात् । न चातिलाघवात् निश्चयत्वं जातिरेवेति वाच्यम् । निश्चयत्वस्य सर्वत्र मानसत्वाप्रसक्त्या चाक्षुषत्वादिनासङ्करात् इति चेन्न ।

एवंसति तर्कत्वमपि न जातिः स्यात् समूहालम्बनतर्कात्मकसंशये सङ्करप्रसङ्गात् । न च तर्कत्वजातौ मानाभावः, आपाद्यव्यतिरेकनिश्चयजन्यतावच्छेदकतया बाधादिप्रतिबध्यतावच्छेदककोटिप्रविष्टतया च तत्सिद्धिः । यदि चांशिकत्वात्तर्कत्वं न जातिः किन्तु आपाद्यताख्यविलक्षणविषयतैवेति मन्यते, तदा संशयत्वस्याप्यांशिकत्वेन तुल्यत्वम् । यदि च सर्वत्र जातेर्व्याप्यवृत्तिता न स्वीक्रियते, तदा तर्कत्वस्यापि जातित्वसम्भवादुक्तदोषतादवस्थ्यम् । यदि च जात्यन्तरसङ्कीर्णापि जातिः स्वीक्रियते, तदा सकलशास्त्रसिद्धान्तपरित्याग एवारब्धः किं विचार्य्यम् ।

एतेन—एकज्ञाने संशयत्वतदभावौ चेदनुमन्येते, तदैव तदव्याप्यवृत्ति स्यात् तदेव न, किन्तु अयं पुरुषो नवा घटवद्भूतलमिति समूहालम्बनादौ पुरुषादिविषयकत्वावच्छेदेन संशयत्वमात्रं स्वीक्रियते नतु इतरविषयकत्वावच्छेदेन तदभावः, एवञ्च स्वाभावासामानाधिकरण्येन तस्य नाव्याप्यवृत्तित्वम् । न चेतरविषयकत्वावच्छेदेन संशयत्वासत्त्वे तदभाव आवश्यकः, प्रतियोग्यनवच्छेदकस्य तदभावावच्छेदकत्वानियमात् । बाधादिप्रतिबन्धकतावच्छेदककोटौ तद्विषयकत्वावच्छेदेन संशयत्वशून्यत्वं न निवेश्यते, येनेतरांशे संशयस्य सङ्ग्रहाय तत्तद्विषयकत्वावच्छेदेन संशयत्वाभावस्वीकार आवश्यकः, अपि तु संशयत्वानवच्छेदकतत्तद्विषयकत्वमेव । यदि च जातेः स्वाभावासामानाधिकरण्यवत्किञ्चिदनवच्छिन्नत्वनियमोऽपि सिद्धान्तः, तदा तत्तद्विषयकत्वावच्छेदेन स्वीकार्यम्, बाधप्रतिबन्धकतावच्छेदककोटौ संशयत्वानवच्छेदकत्वमेवावश्यं तत्तद्विषयकत्वांशे निवेश्यम्—इत्यपि परास्तम् ।

तर्कत्वस्थलेऽपि एवं वक्तुं शक्यतया सङ्करानुद्धारात् । न च सङ्करभयेन तर्कसंशयोभयात्मकसमूहालम्बनमेव नोपगम्यते, अपितु क्रमिकज्ञानद्वयमेवेति वाच्यम् । सामग्रीयौगपद्यस्थले तादृशसमूहालम्बनोत्पादस्य बाधकसहस्रेणापि दुर्वारत्वात् । न चैकं प्रत्यन्यसामग्र्याः प्रतिबन्धकत्वं कल्प्यत इति प्रत्यक्षानुमित्योरिव सामग्रीयौगपद्यमेव न सम्भवति, एतादृशप्रतिबध्यप्रतिबन्धकभावाधिक्यप्रयुक्तगौरवं पुनरकिञ्चित्करमेव, लाघवेन दर्शितकारणत्वप्रतिबध्यतावच्छेदककोटिप्रविष्टतया संशयत्वतर्कत्वजातिद्वयसिद्धौ तदेकतरावच्छिन्ने जायमानेऽपरावच्छि-

न्नोत्पत्तौ ज्ञानद्वयोत्पादस्तादृशजात्याः सङ्करो वा अनिष्टः प्रसज्येतेति तद्वारणाय तादृशप्रतिबध्यप्रतिबन्धकभावः तादृशजातिसिद्धिमुपजीव्य उत्तरकाले कल्पनीय इति तदेतद्गौरवस्य फलमुखत्वादिति वाच्यम्। तर्कं प्रति संशयस्य संशयं प्रति तर्कस्य वा सामग्र्याः विरोधित्वं कल्प्यत इत्यत्र विनिगमकासम्भवात्। न च विनिगमनाविरहात् उभयोरेव उभयप्रतिबन्धकत्वमुपेयतामिति वाच्यम्। तथासति तादृशोभयज्ञानयोरितरसकलकारणसमवधानदशायामुभयोरेवापलपनीयतयाऽनुभवविरोधात्। तस्मादेकधर्म्मिकविरुद्धोभयप्रकारकज्ञानत्वमुपाधिरेव। एकधर्म्मिकत्वञ्च एकधर्म्मावच्छिन्नविशेष्यताकत्वं न त्वेकविशेष्यकत्वम्, एकधर्म्मिण विभिन्नधर्म्मपुरस्कारेण कोटिद्वयविशेष्यमुद्रयाऽवगाहमाने'ऽयं न पुरुषः करादिमान् पुरुष' इति निर्णयेऽतिव्याप्तेः।

अथैवमपि विभिन्नधर्म्मावच्छिन्नैकनिष्ठधर्म्मितावच्छेदकताकस्य 'एतद्वान् पुरुषः करचरणादिमांश्च न पुरुष' इत्यादिसमूहालम्बनस्य वारणमशक्यमेव। एकधर्म्मावच्छिन्नधर्म्मितावच्छेदकताकत्वनिवेशे च यत्र धर्म्मितावच्छेदकतावच्छेदकीभूतस्यैकस्यैव विभिन्नधर्म्मपुरस्कारेण भानं तत्राऽतिप्रसङ्गो दुर्वारः, स्वरूपतस्त्वियदन्त्वावच्छिन्नधर्म्मितावच्छेदकमवगाहमानस्यायं पुरुषो न वेत्यादेरसंग्रहः। अविलक्षणधर्म्मिताकत्वमपि न विचारसहम्, संशयीयकोटिद्वयप्रकारतानिरूपितधर्म्मितयोरपि परस्परव्यावृत्ततत्तत्प्रकारतानिरूपितत्वादिधर्म्मवत्वेन विलक्षणत्वात्। न चैवं यादृशधर्म्मितावच्छेदकतया यादृशविशेष्यतया वा निरूपिता या विरुद्धोभयप्रकारता तच्छालित्वं विवक्षणीयम्, संशये च प्रत्येककोटिनिश्चयस्थले क्लृप्तप्रत्येककोटिप्रकारतानिरूपितविशेष्यताभिन्नविशेष्यताकल्पने गौरवात मानाभावाच्च प्रत्येकस्थलीयविशेष्यतादेरेवोपगमात्। एवं विरुद्धोभयप्रकारत्वमित्यत्र च वास्तवविरुद्धत्वस्य प्रकारविशेषणत्वे वृक्षः संयोगी नवेति संशयासंग्रहः, विरुद्धत्वेन उभयप्रकारताविशेषणे च विरोधोपस्थितिशून्यकाले विरुद्धत्वेनोभयकोटिभानाऽसम्भवात् तत्स्थलीयसंशयाव्याप्तेश्च। न च तदा संशय एव न सम्भवतीति वाच्यम्। विरोधोपस्थितिं विनापि तुल्यबलकोटिद्वयविशिष्टबुद्धिसामग्रीसत्त्वे उभयकोटिद्वयविशिष्टबुद्ध्युत्पादे बाधकाभावात्। न चासौ समुच्चय एवेति वाच्यम्। अव्याप्यवृत्तित्वज्ञानं विना कोटिद्वयनिश्चयस्य युगपदुत्पादासम्भवात्, अव्याप्यवृत्तित्वज्ञानाभावविशिष्टविपरीतकोटिनिश्चयस्य विशिष्टबुद्धौ कार्य्यसहभावेन विरोधित्वात्। न चैवं तादृशविरोधिवशादेव न तदानीं तादृशज्ञानमुत्पद्यते

इति वाच्यम् । तादृशज्ञानानुत्पादप्रतिबन्धकस्याप्यसत्त्वात् । न चैककोटिनिश्चयस्तत्रापेक्ष्यते इति वाच्यम् । विनिगमकाभावात् बाधनिश्चयाभावस्य कार्य्यसहभावेन हेतुता दूषितेति चेन्न । अव्याप्यवृत्तिताग्रहदशायां बाधकालेऽपि विशिष्टबुद्ध्यनुत्पादस्तु न केनाप्यनुमन्यते । न च विरोधविषयकविपरीतकोटिनिश्चय एव विरोधी, विरोधाविषयकस्यापि भूतले घटो नास्तीत्यादिज्ञानस्य भूतलं घटवत् इत्यादिज्ञानविरोधितायाः सर्वसम्मतत्वात् । नच विरुद्धोभयप्रकारकत्वमित्यस्य तत्सम्बन्धावच्छिन्नतद्धर्म्मावच्छिन्नप्रकारताकत्वे सति दैशिकविशेषणतासम्बन्धावच्छिन्ना या तत्सम्बन्धावच्छिन्नतद्धर्म्मावच्छिन्नाभावत्वावच्छिन्नप्रकारता तच्छालित्वमर्थ इति वाच्यम् । एवमपि तद्धर्म्मावच्छिन्नवद्भेदकोटिकसंशयासंग्रहात् भावद्वयकोटिकसंशयासंग्रहाच्च । नच भावद्वयकोटिकसंशय एव नाद्रियते स्थाणुर्वा पुरुषो वेति संशयश्च न भावद्वयकोटिक एव वाऽकारेणान्यतरकोट्यभावोल्लेखादिति वाच्यम् । अभावानुपस्थितावपि मिथोविरुद्धत्वेन स्थाणुत्वपुरुषत्वप्रकारकधीसामग्रीभ्यां फलजनने बाधकाभावात्, तद्विशिष्टबुद्धौ तद्विरुद्धत्वेन विरुद्धधर्म्मवत्तानिश्चयस्य कार्यसहभावेनाविरोधितया सामग्रीद्वयजन्यज्ञानस्य निश्चयत्वासम्भवात्, नहि कश्चिदपि व्यावर्त्तकधर्म्मदर्शनकाले विशिष्टबुद्धिमभ्युपैति। एवं धर्म्मितावच्छेदकसामानाधिकरण्येन कोटिद्वयज्ञानस्यापि संशयत्वापत्तिः । न चेष्टापत्तिः, विशेषदर्शिनामपि मेयत्वादिसामानाधिकरण्येन घटतदभावज्ञानोत्पत्तेः, सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वापेक्षया व्यापकविपर्य्यस्योपाध्याभासत्वं तदभावेन पक्षैकदेशे सत्प्रतिपक्षेऽपि एकदेशान्तरे साध्यसिद्धेरप्रत्यूहादिति ग्रन्थविरोधप्रसङ्गाच्च । तत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्ध्युपगमे उपाध्यभावेन पक्षतावच्छेदकसामानाधिकरण्येन साध्याभावसिद्धावपि बाधकाभावात् त्वन्मते संशयानुमितिप्रसङ्गात् ।

मैवम्, स्वनिष्ठप्रकारताघटितधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकघटकीभूतप्रकारताशालिज्ञानत्वं संशयत्वमित्यर्थस्य विवक्षितत्वात् । विभिन्नधर्म्मावच्छिन्नविशेष्यत्वतदवच्छेदकत्वादिनिरूपकीभूततत्प्रकारताशालिबुद्धौ विपरीतकोटिनिश्चयस्याविरोधितया विभिन्नधर्म्मपुरस्कारेण धर्म्मितावच्छेदकादिमुद्रया एकविषयकज्ञाने नातिप्रसङ्गः, पुरुषत्वादिप्रकारकबुद्धौ पुरुषत्वादिविरुद्धत्वानवच्छिन्ना या वस्तुगत्या विरुद्धरूपादिप्रकारता तन्निरूपकज्ञानस्याविरोधितया नोपदर्शितरूपवानयं पुरुष' इत्यादि[illegible] तत्प्रकारकबुद्धौ विरुद्धत्वेन

पदार्थान्तरप्रकारकबुद्धेर्विरोधितया कोटिमवगाहमानस्य भावद्वयकोटिकसंशयस्यापि सङ्ग्रहात् ।

अथवा भावद्वयकोटिकसंशय एव नोपगम्यते । न च मिथो विरुद्धत्वेन स्थाणुत्वपुरुषत्वादिप्रकारकज्ञानसामग्रीभ्यां युगपत्समवहिताभ्यामर्थवशात् भावकोटिकसंशये बाधकाभावः, तत्र विनिगमकाभावादेकतरकोटिमात्रज्ञानं त्वापाद्यते इत्यस्य वक्तुमशक्यतया विशेषदर्शनस्य कार्य्यसहभावेन हेतुतयापि तादृशोभयकोटिकज्ञानवारणासम्भवात्, भवन्मते तत्तद्धर्मयोरेव ज्ञानाद्व्युत्पत्त्या विशेषदर्शनाभावस्य कार्य्यकालेऽसत्त्वादिति वाच्यम् । स्थाणुत्वविरुद्धपुरुषत्ववानयमित्यादिविशेषदर्शनोत्पत्तिकालेऽयं स्थाणुरितिस्थाणुत्वादिविशिष्टबुद्धौ स्थाणुत्वविरुद्धधर्मवत्तानिश्चयसामग्रीप्रतिबन्धिका वाच्या, यत्र स्वविषयकाप्रामाण्यग्रहद्वितीयक्षणे संशयाद्यनुत्पत्त्या विशेषदर्शनादेरभावस्य कार्य्यसहभावेन हेतुत्वासम्भवात् । एवञ्च परस्परविरोधेन उक्तस्थले परस्परविरुद्धत्वेन भावद्वयकोटिकसंशयासम्भवः । न च निश्चयसामग्र्या एव प्रतिबन्धकतया तादृशसंशयोत्पत्तौ बाधकाभाव इति वाच्यम् । अभावाप्रकारकज्ञानस्य निश्चयतया तत्सामग्र्यास्तत्रासत्त्वात् । यदि च तत्तदसाधारणकारणस्तोमरूपसामग्र्याः प्रतिबन्धकत्वापेक्षया लाघवात् स्वप्रतियोगिकृतिविशिष्टविशेषदर्शनप्रागभावस्यैव प्रतिबन्धकता स्वीक्रियते, तदा तु भावद्वयकोटिकः संशयो निराबाधः, विरुद्धत्वेन कोटिद्वयभासकसामग्रीसत्त्वदशायां फलोत्पादोपगमेऽप्येतादृशप्रतिबन्धकाभावसमवधानस्याव्याहतत्वात् । न च कोटिद्वयभानस्य तत्रोपगमे निरुक्तकृतिविशिष्टप्रागभावस्य प्रतिबन्धकत्वमेव न सम्भवति तादृशसामग्रीद्वयसम्वलनस्थले तत्सत्त्वादिति वाच्यम् । तादृशोभयकोट्यवगाहिज्ञानव्यावृत्तनिश्चयत्वावच्छिन्नप्रागभावत्वेनैव प्रतिबन्धकत्वादिति । एवं सामानाधिकरण्येन कोटिद्वयावगाहिज्ञानेऽपि नातिप्रसङ्गः, सामानाधिकरण्यमात्रावगाहिविशिष्टबुद्धौ तादृशविपरीतज्ञानस्य विरोधितया तादृशज्ञानीयप्रकारतायाः परस्परघटितधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकाघटकत्वात् ।

अथैवमपि भावाभावोभयसमुच्चयेऽतिप्रसङ्गः विरोधानवगाहिनोऽपि ग्राह्याभावज्ञानस्य विशिष्टबुद्धिविरोधितया विरोधानवच्छिन्नाया अपि तदभावप्रकारतायास्तत्प्रकारकज्ञानप्रतिबन्धकतावच्छेदकत्वात्, अन्यथा विरोधानुपस्थितिकालीनतद्विषयकसंशयस्यैवासङ्ग्रहापत्तेः । न च सर्वत्र समुच्चये सामानाधिकरण्येनैव कोटिद्वयभानमिति वाच्यम् ।

संयोगविभागयोरव्याप्यवृत्तित्वग्रहदशायां द्रव्यत्वावच्छेदेन संयोगाभावभानस्यानुभविकतया तस्य संशयत्वासम्भवात्।

यत्तु-समुच्चये विभिन्नावच्छेदकावच्छेदेनैव कोटिद्वयभानम्, अवच्छेदकमप्रतीत्य भावाभावयोरेकत्र भानानभ्युपगमात्, एवञ्च मूलावच्छेदेन तद्बुद्धौ शाखाद्यवच्छेदेन तदभाववत्ताज्ञानस्याविरोधितया न तस्य निरुक्तसंशयत्वापत्तिः, एकावच्छेदेन कोटिद्वयधीः संशय एव; अत एव संयोगतदभावयोरव्याप्यवृत्तित्वग्रहदशायामपि मूलावच्छिन्नो वृक्षः संयोगवान्न वेति संशयोऽनुभवसिद्ध एव-इति।

तदप्यसत्। संयोगतदभावयोरव्याप्यवृत्तित्वग्रहदशायामवच्छेदकीभूतमूलानुपस्थितावपि वृक्षः संयोगवान् तदभाववांश्चेति शाब्दादिज्ञानस्यानुभविकत्वात्। न चानुपस्थितमपि तत्तत्कोटयवच्छेदकावच्छिन्नत्वं सम्बन्धघटकतया भासते सम्बन्धोपस्थितेर्विशिष्टबुद्ध्यहेतुत्वादिति वाच्यम्। विशेष्यतावच्छेदकावच्छिन्नत्वस्य सर्वत्र संसर्गतया भाने मानाभावात् मूलावच्छिन्नो वृक्षः संयोगीत्यादावेव मूलावच्छिन्नत्वस्य संसर्गतया भानात्, समुच्चयस्य विभिन्नावच्छेदकावच्छेदेन भावाभावोभयविषयकत्वेऽव्याप्यवृत्तिताग्रहस्य तत्रानुपयोगित्वापाताच्च, अव्याप्यवृत्तित्वज्ञानस्य प्रागसत्त्वेऽपि विभिन्नावच्छेदकावच्छेदेन भावाभावग्रहात्।

अत्र साम्प्रदायिकाः। एककोटयंशेऽपरकोटिविरोधावगाहित्वमपि संशयत्वघटकं, विरोधानुपस्थितिकाले च प्रकारतया विरोधभानासम्भवेऽपि संसर्गतया तद्भानमुपेयते। न चैवमेकांशे विरोधसम्बन्धेनापरकोटेः प्रकारत्वात् निखिलसंशयानामेव वह्नयभाववह्निमानित्याद्याकारतापत्तिः, स्वातन्त्र्येण प्रकारतायामेव तथाकारतानियमात्, अत्र च पारतन्त्र्येणैव तदुपगमात्। अथवाऽभावांशे प्रतियोगिनोऽनुयोगितासम्बन्धेन प्रकारताया आवश्यकत्वात् तत्रैव विरोधवैशिष्ट्यं निवेश्यते, भावकोट्यंशे न विरोधभाननियमः। अथ धर्म्यंशे कोट्योः संयोगादिसम्बन्धेन प्रकारताया आवश्यकत्वात् तत्रैव विपरीतकोटिनिरूपितविरोधविशिष्टस्य तस्य संसर्गता स्वीकार्या समवायविशेषणताभ्यां संयोगतदभावयोरेकाधिकरणवृत्तित्वनिश्चयदशायामपि जायमानो मूलावच्छिन्नो वृक्षः संयोगी नवेति संशयः मूलावच्छिन्नविशेषणतासंसर्गक एवेति। तत्र च तादृशविशिष्टसंसर्गघटितस्य तादृशसम्बन्धेन तदधिकरणावृत्तित्वरूपविरोधभाने न किञ्चिद्बाधकम्। एवं द्रव्यान्तर्भावेण संयोगतदभावयोः सामानाधिकरण्यनिश्चयदशायां जायमानो गुणः संयोगी न वेति संशयो निरवच्छिन्नसमवायतथाविधविशेषणतासंसर्गकः।

तत्र च तादृशविशिष्टसंसर्गघटकविरोधस्य भाने न किञ्चिद्बाधकं द्रव्या-त्वभविए समवायविशेषणताभ्यामेव तयोःसामानाधिकरण्यग्रहात्। नि-वच्छिन्नसमवायविशेषणताभ्यां भावाभावयोरेकाधिकरणवृत्तित्वज्ञानस्य-नाहार्य्यं नास्त्येव। अथ विरोधानुपस्थितिकाले संसर्गतया भानोपगम-स्तदोपपद्यते यदि विरोधस्य संसर्गता प्रामाणिकी स्यात्, सैव च ना-स्ति। न च समुच्चयस्य संशयत्ववारणायान्यथानुपपत्त्यैव तत्सिद्धिः, अव्या-प्यवृत्तित्वज्ञानादुत्तरत्वस्य संशयत्वघटकतामुपगम्यापि तद्वारणसम्भवा-त्। न च संशयसमुच्चययोर्विलक्षणाकारकता तयोर्विषयस्य विषयता-वैलक्षण्यमन्तरेण नोपपद्यते, अतस्तदन्यथानुपपत्त्यैव विरोधस्य संसर्ग-तासिद्धिरिति वाच्यम्। तर्हि संशयेऽतिरिक्तविरोधविषयतास्वीकारापे-क्षया कोट्योर्धर्म्मिणि च विलक्षणविषयतास्वीकार एवोचितः, विरोधस्य संसर्गतास्वीकारेऽपि तन्निरूपितप्रकारताविशेष्यतयोरन्यत्राक्लृप्ततया अतिरिक्तविषयतायाः कोट्योर्धर्म्मिणि चाऽवश्यकल्प्यत्वात्। यदि च कोटिधर्म्मिणां विषयतासु वैलक्षण्यमेव दुर्वचमिति मन्यते, तदापि संशयसमुच्चययोर्वैलक्षण्योपपत्तये विरोधस्य पदार्थान्तरस्य वा संसर्गता स्वीक्रियत इत्यत्र विनिगमनाविरह इति चेत्। नैवम्, कोटिद्वयस्या-विरुद्धत्वज्ञानदशायां संशयानुत्पादस्यानुभविकतया तदुपपत्तये संशये-विरोधभानस्यावश्यकतया विनिगमनाविरहानवकाशात्।

केचित्तु संशये धर्म्मिणो विलक्षणविषयता स्वीक्रियते, तद्वैलक्षण्य-ञ्च कोटिद्वयप्रकारतानिरूपितत्वम्, समुच्चये तु नकविषयता कोटिद्वय-प्रकारतानिरूपितेति तद्वैलक्षण्यं, विरोधस्य संसर्गतास्वीकारेऽपि अतिरि-क्तविषयताकल्पनस्यावश्यकत्वात्। नचैवं वैपरीत्यमेव किन्न स्यादिति वाच्यम्। तथासति परामर्शादेरनुमितिजनकतायां बाधादिप्रतिबन्धकता-याञ्च तन्निष्ठप्रकारत्वानिरूपिततदभावप्रकारतानिरूपिततद्धर्म्मावच्छिन्न-विशेष्यताशालिज्ञानभिन्नत्वे सति तत्प्रकारतानिरूपिततद्धर्म्मावच्छिन्नवि-शेष्यताशालित्वज्ञानरूपनिश्चयत्वस्य निवेश्यतया गौरवात्. इतरथा तु तदभावप्रकारत्वानिरूपिततत्प्रकारतानिरूपिततद्धर्म्मावच्छिन्नविशेष्य-ताशालिज्ञानत्वस्य तत्र निवेशे लाघवात्।

ननु संशये उभयप्रकारतानिरूपितैकविशेष्यतास्वीकारेऽपि संशयसा-मग्रीदशायां प्रत्येककोटिनिश्चयसामग्र्योरपि सत्त्वात्तदीयविशेष्यताशा-लित्वं संशयस्य निष्प्रत्यूहमेव, निश्चयत्वस्यार्थसमाजग्रस्ततया कस्यापि कार्य्यतानवच्छेदकत्वेन संशयोत्पत्तिदशायां तदवच्छिन्नापत्तिवारणाय निश्चयं प्रति संशयसामग्र्याः प्रतिबन्धकत्वस्याप्रामाणिकतया तत्साम-

त्यास्तदभावप्रयोजकत्वानुपपत्तेः, एवञ्च तदभावप्रकारत्वानिरूपित-तत्प्रकारतानिरूपितविशेष्यताशालित्वं न तत्संशयव्यावृत्तमिति चेन्न।

एतदनुरोधेनैव तत्कोटिमात्रप्रकारतानिरूपितविशेष्यताशालिज्ञानं प्रति स्वप्रतियोगितत्तदभावोभयप्रकारतानिरूपितविशेष्यताशालिज्ञान-कृतिविशिष्टप्रागभावरूपसंशयसामग्र्याः प्रतिबन्धकत्वकल्पनगौरवस्य न्याय्यत्वात्। अत्र प्रतिबन्धकतावच्छेदककोटौ स्वत्वनिवेशादननुगमोऽ-न्यत्रोक्तरीत्या वारणीयः। अस्तु वा संशयस्यापि निश्चयस्थलीयविशे-ष्यताद्वयवत्त्वम्, तथापि तत्तदभावोभयप्रकारतानिरूपिततद्धर्मावच्छिन्न-विशेष्यताकज्ञानभिन्नत्वे सति तत्प्रकारतानिरूपिततद्धर्मावच्छिन्नविशे-ष्यताकज्ञानत्वरूपस्य तन्निष्ठप्रकारत्वानिरूपिततदभावप्रकारता निरूपित तद्धर्मावच्छिन्नविशेष्यताकान्यत्वघटितोक्तधर्मापेक्षया लघोर्निश्चय-त्वस्यैव तन्मते निवेश्यतया समुच्चये कोटिद्वयप्रकारतानिरूपितविशे-ष्यतास्वीकारमादाय विनिगमनाविरहस्यानुद्भावनीयत्वात्, तथाच तत्त-दभावोभयप्रकारतानिरूपितविशेष्यताशालिज्ञानत्वमेव संशयत्वम्, एव-ञ्च धर्मितावच्छेदकाभेदस्थलेऽपि नातिप्रसङ्गदोषस्तत्र विशेष्यताभे-दात्। यदि च धर्मितावच्छेदकत्वादिकं प्रकारताविशेषः, तदा संयो-गाभाववत् द्रव्यं संयोगवदित्याद्येकैककोटिधर्मितावच्छेदककापरको-टिप्रकारकसमुच्चयविशेष्यतायां तत्प्रकारतानिरूपितायामवच्छेदकतात्म-कतदभावप्रकारतया समं निरूप्यनिरूपकभावसत्त्वेनातिप्रसङ्गः स्यात्, इत्यवच्छेदकताभिन्नत्वेन कोटिद्वयप्रकारताया निवेशस्यावश्यकत्वम्। नच यथा विशेष्ये विशेषणमिति रीत्या वक्रदण्डवान् पुरुष इति बोधः वक्रो दण्डः दण्डवान् पुरुष इत्यादिसमूहालम्बनाद्विलक्षणः, तथा द्रव्यं संयोगि संयोगाभाववत् द्रव्यमित्यादिसमूहालम्बनाद्द्रव्यं संयोगि तद-भाववदित्याद्येकत्र द्वयमिति रीत्या ज्ञानमपि विलक्षणमित्यत्र सर्वेषा-मेव सम्मतिरिति वाच्यम्। विशेषणविशेष्यतावच्छेदकभावापन्नयो-रेव तयोरेकत्र द्वयमितिरीत्या बोधे भानात् धर्मितावच्छेदकताभिन्न-प्रकारताया निवेशेनैव तद्वारणात्। नचैवमेकत्र द्वयमिति रीत्या धर्म-द्वयविशेषणकनिखिलज्ञानानामेव एकविशिष्टे विशेषणान्तरवैशिष्ट्याव-गाहितापत्तिः एकविशेषणधर्मितावच्छेदकतापन्नविशेषणज्ञानस्यैव तद-र्थत्वादिति वाच्यम्। यत एकविशिष्टे विशेषणान्तरवैशिष्ट्यावगाहित्व-मित्यस्य नोक्तोऽर्थः, अपि तु एकावच्छिन्नत्वेनापरवैशिष्ट्यानुयोगि-ताविषयकत्वमेवेति प्रपञ्चितं विशिष्टवैशिष्ट्यविचारे। वैशिष्ट्यानु-योगितायाश्च धर्मितावच्छेदकावच्छिन्नत्वं भासते न वेत्यन्यदेतत्।

न च धूमकालीनवह्निमान् पर्वतो वह्निमान् आलोकादित्यनुमितौ वह्नेर्धूमकालीनवह्निधर्म्मितावच्छेदकतया न भानम्, अपि तु पर्वतांशे तुल्यविशेषणतापन्नस्यैव विधेयधर्म्मितावच्छेदकतया भानम्, अन्यथा 'विधेयकालीनत्वस्वसम्बन्धेन यद्धर्म्मं धर्मितावच्छेदकीकृत्यावगाहते माभूत् शाब्दबुद्धिः सा ज्ञायमानतद्धर्म्मजन्या' इति दीधितिकृतामाचार्य्यानुमानव्याख्या न कल्पेत, तथाविधानुमितौ व्यभिचारस्य दुर्वारत्वात्, एवञ्च मिथोविशेषणविशेष्यतावच्छेदकभावापन्नयोरेकत्र द्वयमिति रीत्या भानमिति नियम इति वाच्यम्। द्वयोरेकधर्म्मितावच्छेदकतया यत्र भानं तदतिरिक्तस्थले तादृशनियमात्, भावाभावयोर्द्वयोरेव यत्र धर्म्मितावच्छेदकता तत्र तयोरेकस्यापरधर्म्मितावच्छेदकत्वविरहेऽपि धर्म्मितावच्छेदकताभिन्नतदुभयप्रकारतानिरूपितैकविशेष्यताविरहादेव नातिप्रसङ्गः। न च कोट्योरविरुद्धत्वज्ञानदशायां संशयानुत्पादनिर्वाहाय विरोधविषयतायाः संशयेऽवश्याभ्युपेयत्वे किमेतावता प्रयासेन, तथापि संशयसमुच्चययोर्वैलक्षण्योपपत्तिरिति वाच्यम्। तत्तदभावोभयप्रकारतानिरूपितैकविशेष्यताशालिज्ञानं प्रति एकाविरुद्धत्वज्ञानस्य प्रतिबन्धकतां स्वीकृत्य तज्ज्ञानदशायां संशयाभावस्य निर्वाह्यत्वात्, भवन्मते विरोधविशिष्टबुद्धावेव विरुद्धत्वज्ञानस्य तथाकल्पनात्, विरोधसंसर्गकसंशयानुरोधेनातिरिक्तप्रतिबन्धकताकल्पनस्यावश्यकत्वात्, एवं ग्राह्याभावादौ किञ्चिदवच्छिन्नवृत्तिकत्वरूपाव्याप्यवृत्तित्वज्ञानस्य संशयप्रतिबन्धकत्वमप्युभयमते तुल्यम्। न च विलक्षणविषयतास्वीकारस्यावश्यकत्वे कोटिद्वय एव विलक्षणप्रकारता स्वीक्रियताम् वैलक्षण्यञ्च तस्याः कोटिद्वयवृत्तित्वमेव, समुच्चये प्रकारभेदेन प्रकारताभेदः, एवञ्च जनकतावच्छेदककोटौ तदभावावृत्तिप्रकारताशालिज्ञानत्वरूपमतिलघुशरीरमेव निश्चयत्वं निवेश्यमिति वाच्यम्। घटत्वघटाभावत्वरूपावच्छेदकभेदेन कोट्योः प्रकारताभेदस्यावश्यकत्वात्, अन्यथा निखिलसंशयानामेव कोटितावच्छेदकांशे भ्रमत्वापत्तेः घटाद्यवृत्तिघटाभावत्वावच्छिन्नतन्निष्ठविषयताकत्वात्, भूतलं घटवन्नवेति संशयानन्तरं घटाभावत्वेन घटं सन्देह्मीत्यनुव्यवसायप्रसङ्गाच्चेति वदन्ति।

अत्रेदं चिन्त्यते। कोटिद्वयनिरूपितधर्म्मितावच्छेदकताकसंशयस्थले विशेष्यत्वाभेदस्वीकारेऽपि नीलपर्वतो वह्निमान् पर्वतो वह्न्यभाववान् वेत्यादिसंशये न्यूनाधिकधर्म्मावच्छिन्नयोर्विशेष्यतयोर्भेद आवश्यकः, अन्यथा नीलपर्वतो वह्निमान्नवेति संशयात्तद्वैलक्षण्यानुपपत्तः, तादृशसंशयस्य पीतपर्वतो वह्निमानित्यादिनिश्चयप्रतिबध्यतानापत्तेश्च, पीतत्वपर्वत-

त्वान्यधर्मानवच्छिन्नविशेष्यताकवह्न्यभाववत्ताज्ञानं प्रत्येव तादृशनिश्चयस्य प्रतिबन्धकत्वात्। न च शुद्धपर्वतत्वावच्छिन्नाऽभावप्रकारतानिरूपितविशेष्यता प्रतियोगिप्रकारतानिरूपितविशेष्यतातोऽतिरिक्तैवास्ताम्, नीलपर्वतत्वावच्छिन्नविशेष्यता च कोटिद्वयप्रकारतानिरूपितास्त्विति वाच्यम्। एवंसति तादृशज्ञानस्य वह्निप्रकारतानिरूपितवह्न्यभावप्रकारत्वानिरूपितविशेष्यताशालिज्ञानत्वरूपनिश्चयत्वाक्रान्ततया वह्न्यादिविशिष्टबुद्धिप्रतिबन्धकत्वापत्तेः, तदुत्तरं नीलपर्वते वह्न्यभावं जानामीत्यनुव्यवसायापत्तेश्च। न च तादृशसंशय एवासिद्धः वह्न्यभावधर्म्मितावच्छेदकतया नीलभाने बाधकाभावादिति वाच्यम्। नीलत्वं धर्म्मितावच्छेदकीकृत्य वह्न्यभाववत्ताज्ञानप्रतिबन्धकवह्न्यादिव्याप्यवत्ताज्ञानदशायां तुल्यबलकोटिद्वयसामग्रीभ्यां तादृशसंशयजनने बाधकाभावात् ग्राह्याभावव्याप्यावच्छेदकधर्म्मदर्शनस्याप्रतिबन्धकतया तत्सामग्र्याः प्रतिबन्धकत्वे मानाभावात्, तादृशस्थले पर्वतत्वधर्म्मितावच्छेदककवह्निव्याप्यावच्छेदकनीलादिभानसामग्रीसत्त्वे पर्वतत्वावच्छेदेन वह्न्यभावभानसम्भवात् इति।

अथ तत्र विशेष्यत्वमेकमेव, तस्य च नीलविशिष्टपर्वतत्वावच्छिन्नत्वेन वह्निप्रकारतया शुद्धपर्वतत्वावच्छिन्नत्वेन चाभावप्रकारतया समं निरूप्यनिरूपकभाववैलक्षण्यात् उक्तानुपपत्तीनामुद्धार इति चेत्।

कोटिद्वय एव किमेकप्रकारताभानं न स्वीक्रियते; तस्याश्च तत्कोटितावच्छेदकावच्छिन्नत्वविशिष्टाया एव तत्तत्कोटिवृत्तित्वमित्यधिकरणतावैलक्षण्यमुपगम्योपपत्तिसम्भवात्।

अत्रेदं समीचीनतया प्रतिभाति–संशये कोटिद्वयनिरूपितविशेष्यतयोर्भेद एव, तयोः परस्परमवच्छेद्यावच्छेदकभाव एव वैलक्षण्यम्, एवं च तदभावप्रकारतानिरूपितविशेष्यतावच्छिन्नतत्प्रकारतानिरूपितविशेष्यताशालित्वमेव संशयत्वम्। यदि च पर्वते वह्निर्वह्न्यभावो वेति धर्म्मिविशेषणकोपि संशयः, तदा तदभावविषयतानिरूपितविषयत्वावच्छिन्ना या तद्विषयतानिरूपिता विषयता तच्छालिज्ञानत्वमेव तथा, तत्रोभयकोटिविशेष्यतानिरूपितधर्म्मिप्रकारतयोरवच्छेद्यावच्छेदकभावस्वीकारात्। यदि च पर्वतो वह्निमान् वह्न्यभावो वा पर्वते इत्याकारकोऽपि संशयस्तदा पर्वतत्वावच्छिन्नप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावः स्वीकार्य्यः।

अथवा संशये कोटिद्वयविषयितयोरेव तथा भावः स्वीकार्य्यः, एवञ्च तदभावविषयकत्वावच्छिन्नतद्विषयकत्वमेव संशयत्वम्, एतन्मते निश्चयत्वस्यातिलाघवमित्यवधेयम्।

परे तु संशयत्वं नोक्तरूपम्, स्वत्वघटितत्वेन तस्याननुगतत्वात्(१)॥

इति संशयवाद(६)वीचिः समाप्तः॥

(१) अत्र कियती ग्रन्थत्रुटिः प्रतिभाति।

॥ श्रीगुरुभ्यो नमः ॥

## महामहोपाध्याय श्रीगदाधरभट्टाचार्यकृतो निर्विकल्पकस्मरणवाद(१०)वीचिः ॥ * * ॥

केचन स्मरणमपि निर्विकल्पकमभ्युपगच्छन्ति ।

ननु इदमनुपपन्नम्, घटत्वप्रकारकं तद्व्यक्तिविशेष्यकं स्मरणं संस्कारञ्च प्रति तथाविधनिश्चयस्य (घटत्वप्रकारकतद्व्यक्तिविशेष्यकनिश्चयस्य) कारणतया निर्विकल्पकात् सविकल्पकादेव वा ज्ञानात् निर्विकल्पकयोः संस्कारस्मरणयोरसम्भवात्, अन्यथा घटत्वप्रकारकात् तद्व्यक्त्यवगाहिनः घटत्वेन व्यक्त्यन्तरावगाहिनश्च ज्ञानात् घटत्वेन तद्व्यक्त्यवगाहिनोः संस्कारस्मरणयोरुत्पत्त्यापत्तेः । अथ समवायसंसर्गावच्छिन्नघटत्वप्रकारतेतरप्रकारतानिरूपितविशेष्यताभिन्नतद्व्यक्तिवृत्तिविषयताकसंस्कारादौ घटत्वेन तद्व्यक्त्यवगाहिनो निर्णयस्य कारणतया सम्भवति घट इति सविकल्पकादेव निर्विकल्पकात्मकं स्मरणमिति चेन्न । एवं सति तद्व्यक्तिनिर्विकल्पकसंस्कारादेः घटत्वपटत्वादिप्रकारकसकलनिर्णयकार्यतावच्छेदकावलीढतया कस्याप्यसर्वज्ञस्य तदुत्पत्त्यसम्भवात्, सम्भवे वा व्यभिचारप्रसङ्गात् । न च घटत्वेतरप्रकारत्वाद्यनिरूपिततद्व्यक्तिविषयताकत्वेनैव घटादिनिर्णयानां जनकत्वं तथाविधयावज्जनकधर्मवत्तया निर्विकल्पकादेव निर्विकल्पात्मकस्मरणादितिनव्यभिचार इति वाच्यम् । नीलो घट इति निर्णयात् घट इति संस्कारादेरनुत्पत्तिप्रसङ्गात् । एतेन तद्व्यक्तिविषयतानिरूपितसमवायसंसर्गतेतरसंसर्गत्वानिरूपितघटत्वविषयताकत्वेन निर्णयस्य तथाविधसंस्कारादौ जनकत्वमपि प्रत्युक्तम् । समवायकालिकसंसर्गाभ्यां घटत्वेन तद्व्यक्त्यवगाहिनो ज्ञानात्कालिकसंसर्गपरिहारेण जायमाने घट इति स्मरणादौ व्यभिचारप्रसङ्गात् । अथ तद्व्यक्तिगोचरनिर्विकल्पकस्मरणे तथाविधसंस्कारस्य तद्व्यक्तिगोचरनिर्विकल्पकसंस्कारे च तद्व्यक्तिनिर्विकल्पकज्ञानस्य कारणत्वमनायत्या कल्प्यते इति चेन्न । गगनादिपदादाकाशगोचरनिर्विकल्पकस्मरणानुपपत्तितादवस्थ्यात्, नहि गगनगोचरो निर्विकल्पकः साक्षात्कारोऽस्ति येन तथाविधः संस्कारो जन्येत, अनादिस्मरणसंस्कारपरम्पराकल्पने तु प्रमाणाभावः, अपूर्वस्यातीन्द्रियस्य वस्तुनः पारिभाषिकडित्थादिपदादस्मरणप्रसङ्गश्चेति ।

उच्यते—पर्वतो वन्हिमानित्यादेः संस्कारस्य समानाकारकस्मरणे न तावत्समवायप्रत्यासत्त्या जनकत्वं पर्वतत्वेन महानसं तद्व्य-

क्तित्वेन च गुञ्जामवगाहमानात् संस्कारात् वह्नित्वपर्वतत्वाभ्यां तद्व-ह्नितत्पर्वतावगाहिस्मरणप्रसङ्गात्। अथ वह्नित्वावच्छिन्नतद्व्यक्तिवृत्तिप्रकारतानिरूपितपर्वतत्वावच्छिन्नतद्व्यक्तिवृत्तिविषयताकत्वेनैव संस्कारस्य तथाविधस्मरणजनकत्वमिति चेत। एवंसति वह्नित्वेन तत्स्मरणव्यक्ति पर्वतत्वेन तत्संस्कारव्यक्तिञ्चावगाहमानं स्मरणं प्रति तथाविधस्य संस्कारस्य जनकताया आवश्यकत्वे तत्तद्व्यक्तित्वादिनैव स्मरणसंस्कारयोः कार्यकारणभावौचित्यात्। एतेन वह्नित्वावच्छिन्नतद्व्यक्तिवृत्तिप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतया तदात्मसमवेतस्मरणे तथैव तदात्मसमवेतसंस्कारस्य कारणत्वमित्यपि प्रत्युक्तम्। व्यक्तिभेदेन कारणताभेदध्रौव्ये तत्तद्व्यक्तित्वादिनैव तयोः कार्यकारणभावौचित्यात्, तस्माद्विषयविषयतयोः संसर्गस्य विषयोत्पादकसामग्रीनियम्यतया विषयतया सह ज्ञानस्य संसर्गः ज्ञानोत्पादिकां सामग्रीमपेक्षत इति विषयतानिष्ठनिरूपकतासंसर्गेण तदात्मसमवेतस्मरणं प्रति तेनैव संसर्गेण तदात्मसमवेतसंस्कारः कारणमित्यभ्युपगन्तव्यम्, विद्यते च वह्निप्रकारतानिरूपितपर्वतविशेष्यतायां निरूपकतासंसर्गेण संस्कार इति तत्र निरूपकतासंसर्गेण पर्वतो वह्निमानित्याकारकं स्मरणमपेक्षते, ज्ञानसंस्कारयोः विषयताभेदे प्रमाणाभावात्, तत्तद्विषयतावृत्तिनिरूपकतासंसर्गेण जन्यगुणसामान्यं प्रति तादात्म्येन तत्तद्विषयता कारणमिति तद्विषयताप्रत्यासन्नतदात्मसमवेतसंस्कारस्वरूपसामग्री तत्तद्विषयतानिरूपकस्मरणोत्पादकतदात्मप्रत्यासन्नकारणकलापाधिकरणकालवृत्तित्वविशिष्टत्वे सति तादात्म्यनिरूपकताभ्यां घटितेन सामानाधिकरण्येन तद्विषयतानिष्ठा निरूपकतया स्मरणोत्पादिका स्वीकर्तव्या, इतरथा वह्निमत्पर्वतविषयतायां पटवद्भूतलविषयतायां च निरूपकतया संस्कारसत्त्वे सति च भूतलं न पटवदिति बाधे पटोद्बोधकसम्बन्धिदर्शनादिविरहे वा यथा सामान्यवह्निमत्पर्वतविषयतायां स्मरणं तस्याः पटवद्भूतलविषयतायामपि अवैकल्यात्तत्रापि स्मरणं प्रसज्यते, सा हि सामग्री तदात्मावच्छेदेन वह्निबाधादि, वह्निसम्बन्धिदर्शनाधिकरणं यः क्षणस्तदवच्छेदेन निरूपकतया विद्यमानः तदात्मसमवेतसंस्कार एव, स च विषयताकार्येऽप्यविशिष्टः, तद्विषयतानां प्रतिस्वं कारणताभ्युपगमे तु वह्निसम्बन्धिदर्शनवह्निबाधादिघटितायां सामग्र्यां निरूपकतया संस्कारः तादात्म्येन वह्निमत्पर्वतविषयता च प्रविशतीति न पटवद्भूतलविषयतायामतिप्रसङ्गः। एवञ्च निर्विकल्पकविषयताव्यक्तावपि संस्कारसत्त्वात् तत्र निरूपकतया

स्मरणमुत्पद्यते ।

स्यादेतत् यदि विषयतावृत्तिनिरूपकतया संस्कारं प्रति तथैवानुभवस्य कारणत्वं स्यात्, नचैवं, संशयात्मकानुभवादपि संस्कारोत्पत्तिप्रसङ्गात्, निर्णयत्वेनानुभवस्य जनकत्वे तत्तद्विषयभेदेन कारणताभेदध्रौव्यादात्मनिष्ठप्रत्यासत्त्यैव कार्यकारणभावस्यौचित्यात् न निर्विकल्पकविषयतायां संस्कारोत्पत्तिः सम्भवतीति चेन्न ।

विषयतावृत्तिनिरूपकतासंसर्गेणानुभवस्य तथैव संस्कारं प्रति जनकतायां निर्णयत्वादेरप्रवेशात् वह्निवह्न्यभावोभयप्रकारतानिरूपितविशेष्यताव्यक्त्यादिना तादात्म्येन संस्कारं प्रति प्रतिबन्धकत्वादेव न संशयाकारः संस्कारः. भिद्यते हि तत्तदभावोभयप्रकारकविषयता निश्चयविषयताद्वयात्, अन्यथा सर्वाणि द्रव्याणि संयोगवन्ति तदभाववन्ति चेति समुच्चयात् द्रव्यं संयोगवन्नवेति संशयस्य वैलक्षण्यानुपपत्तेः । भवतु वा पर्वतत्वावच्छेदेन वह्न्यभावावगाहिना संस्कारेणानिरूपिता या विषयता तन्निष्ठनिरूपकतासंसर्गेण संस्कारं प्रति पर्वतत्वावच्छेदेन वह्न्यभावावगाहिनो ज्ञानादन्यस्यानुभवस्य निरूपकतासंसर्गेण कारणत्वम् । भवति च वह्निमत्पर्वतविषयता वह्न्यभाववत्पर्वतविषयताकसंस्कारेण निरूपिता, तत्र च निरूपकतया संस्काराव्यवहितप्राक्क्षणावच्छेदेन विद्यते वह्न्यभाववत्पर्वताविषयकोऽनुभवः, तत्तद्विषयताव्यक्तीनां तादात्म्येन कारणता तत्तन्निष्ठनिरूपकतासंसर्गेण जन्यगुणसामान्यं प्रति इत्यावेदितं प्राक्, तेन वह्निमत्पर्वतविषयतायामिव पटवद्भूतलविषयतायामपि वह्न्यभाववत्पर्वताविषयकात्पर्वतो वह्निमान् भूतलं पटवन्नवेत्यनुभवात् संस्कारोत्पत्त्यापत्तिः समाहिता वेदितव्या वह्निमत्पर्वतविषयतातदात्म्यादेरेव तत्सामग्रीघटकत्वाभ्युपगमात् । न चवं पर्वतो वह्निमानिति, निर्णयात् पर्वतो वह्निमान्नवेत्यादिसंशयाद्वा पर्वत इति वह्निरिति वह्निमानिति च वह्निप्रकारत्वानिरूपकपर्वतविषयतायां वह्निमुख्यविशेष्यतायामनवच्छिन्नायां वह्निप्रकारकविशेष्यतायाञ्च निरूपकतया संस्कारस्य स्मरणस्य चोत्पत्तिर्न घटते । तासु विषयतासु निरूपकतया निरुक्तसंशयनिर्णययोरभावात् वह्नित्वप्रकारकमुख्यविशेष्यत्वादेर्विशिष्टविषयताव्यापकत्वन्तु नाशङ्कनीयम्, भिन्नविषयकानुमितिसामग्रीकाले वह्निविशिष्टप्रत्यक्षं जायतामितीच्छया जनिते पर्वतो वह्निमानिति प्रत्यक्षे, वह्निमुख्यविशेष्यकत्वस्यासम्भवात् वह्निमुख्यविशेष्यकप्रत्यक्षं प्रति प्रतिबन्धकतायामुत्तेजिकाया वह्निप्रत्यक्षं जायतामितीच्छाया अभावात्, वह्निमत्पर्वतप्रत्यक्षेच्छाया अपि तत्रोत्तेजकत्वे ताद्द-

ब्रह्मसूत्रशाङ्करभाष्यम्। चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्या सहितया श्रीगोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम्। सम्पूर्णम्। [ वेदान्तविभागे ९ ] रु० ६—०

सिद्धान्तशिरोमणिः। श्रीभास्कराचार्य विरचितः। वासनाभाष्य सहितः ज्योतिषाचार्य म०म० श्री ६ मद्बापूदेवशास्त्रिकृतटिप्पणी सहितः। "गणिताध्यायः"। रु० २—० "गोलाध्यायः"। रु० २—० [ ज्यो० वि० ४ ] सम्पूर्ण रु० ४—०

काकचण्डीश्वरकल्पतन्त्रम्। पण्डित रामकृष्ण शर्म्मणा सम्पादितम्। पण्डित बटुकनाथ शर्म्मा एम. ए. साहित्योपाध्याय इत्येतेन लिखितया प्रस्तावनया सनाथीकृतम्। [ आयुर्वेद शास्त्रविभागे १ ] रु० ०—८

किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम् मल्लिनाथसूरिकृतया घण्टापथसमाख्यव्याख्यया तथा पं० श्रीगङ्गाधरशर्मणा कृतया सुधाऽऽख्यव्याख्यया समलङ्कृतम्। [ सर्गत्रयमात्रम् ]। [ काव्य वि० १० ] रु० ०—१२

चन्द्रालोकः। पीयूषवर्षश्रीजयदेवकवि प्रणीतः। श्रीमत्पद्मनाभमिश्रापराभिधान प्रद्योतनभट्टाचार्य विरचितया चन्द्रालोकप्रकाशापराख्य 'शरदागम' टीकया सङ्कलितः। साहित्याचार्येण खिस्ते इत्युपाख्यनारायणशास्त्रिणा भूमिकादिभिः समभूष्य सम्पादितः। [ अलङ्कार वि० ३ ] रु० ०—१०

किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम्। मल्लिनाथसूरिकृतया घण्टापथसमाख्यया तथा पं० श्रीकनकलालशर्मणा कृतया भावार्थदीपिनीव्याख्यया समलङ्कृतम्। [ सर्गत्रयमात्रम् ] [ काव्य वि० ११ ] रु० ०—६

शक्तिवादः, श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टाचार्यविरचितविवृतिसहितः। [ न्यायविभागे १० ] रु० ३—०

माथुरीपञ्चलक्षणी। पं श्रीउमानाथज्यौलकृतव्याख्या सहिता तथा माथुरीसहव्याघ्रलक्षणम्। पं० श्रीहरिरामशुक्ल विरचितया व्याख्यया सहितं तथा पं० श्रीहरिहरशास्त्रि सङ्कलित माथुरीपञ्चलक्षणी क्रोडपत्रेण च। [न्याय वि० ११] रु० ०—६

[illegible]साध्यायः। टीकया संवलितः। [ आयुर्वेदशास्त्र वि० २ ] रु० ०—१०

(१) पाणिनिव्याकरणे वादरत्नम्। न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम्। ( तत्र च न्यास परिष्कारपरिशिष्ट भेदेन प्रकरणत्रयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १४५ महताटोपेन न्यासाविचारताः तत्र प्रथमं प्रकरणं मुद्रितं प्रथमो भागः। [ व्या० वि १० ] रु० १—८

(२) पाणिनीव्याकरणे वादरत्नम्। द्वितीयोभागः [ न्या० वि० ] रु० १—४

गणितकौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितगणितग्रहपुस्तकम्। [ गणितविभागे १ ] रु० ०—६

छन्दः कौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दग्रहपुस्तकम्। [ छन्दोविभागे ३ ] रु० ०—६

योगदर्शनम्। महर्षिप्रवरपतञ्जलिप्रणीतम्। तत्र ( १ ) भोजवृत्तिः, [ २ ] भावागणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६]योगसुधाकराख्य टीका षट्कसमेतम्। सटिप्पण। [ योग० विभागे १ ] रु० २—०

रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम्। म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। १ से ४ सर्गः मूल्यम् रु० १-४-०, तथा १ से ९ सर्गः रु० १—८ तथा ६ से १० सर्गः। रु० १—८

योगदर्शनम्। पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम्। सटिप्पण। [ योग वि० २ ] १—०

काव्यमीमांसा। राजशेखरविरचिता। साहित्याचार्य पं० श्रीनारायणशास्त्रि[illegible] कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ९ अध्याय ] प्रथमो[illegible]। [ काव्यविभागे १३ ] रु० ०—८

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । [ नाटक विभागे १ ] रु० १—४

८८ मेघदूतकाव्यम् । महाकवि श्रीकालीदास विरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायण शास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम् । [काव्य० १४] रु० ०—८

८९ जागदीशोव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे १२ ) रु० २—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोर-शास्त्रिणानिर्मितया चक्रधराख्य महत्या टिप्पण्या अन्वयार्थमालया लिङ्गानुशासन-प्रक्रियया उणादिकोषेण च सहिता । ( व्या० वि० ११ ) पूर्वार्द्धम् । रु० २—८
उत्तरार्द्धं । रु० २—८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-हत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् ।(पुराणेतिहास वि०१) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३) रु० १—४

९५ संस्कारदीपकः । गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग-निरूपणात्मकः प्रथमो भागः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः । ( कर्मकाण्ड वि० ८ ) रु० २—०

९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापनसहितः । म० म० पं० नित्यानन्दपन्त-पर्वतीय विरचितः । ( कर्मकाण्ड वि० ९ ) रु० ३—८

९७ श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम् । (कर्म० वि० १०) रु० २—०

९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि०१६) रु० १—४

९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

१०० वाग्वल्लभः । सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छ-न्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागममामिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्त्तिना महामहोपाध्यायेन देवीप्रसाद-पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः । ( छन्दः शास्त्र वि० ४) रु० २—८

१०१ सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम् । (न्याय विभागे १४) ) रु० १—८

February 1936

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 446.

# वादवारिधिः ।

महामहोपाध्याय—

श्रीगदाधरभट्टाचार्यादिविपश्चिद्वरैर्विरचितः ।

काशीविश्वविद्यालय-वेदान्तप्रधानाध्यापक-दार्शनिक-

प्रवरश्रीबालकृष्णमिश्रेण निर्यातः ।

नित्यानन्दवेदविद्यालय—प्रधानाध्यापक पण्डितवर

श्रीढुण्ढिराजशास्त्रिणा संशोधितः ।

# VÂDA VÂRIDHI

*By*

M. M. ŚRI GADÂDHARA BHATTÂCHÂRYA

and others.

*Edited by*

Pandit Śri Bālakrishna Miśra,

Vedānta Pradhānādhyāpak,

Hindu University, Benares, and

Pandit Dhundhirāj Shâstri,

Principal, N. Veda Vidyālaya, Benares.

FASCICULUS II–२.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Benares City.*

1936

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा–संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः ४४६.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

प्रत्यक्षसामग्र्यामसत्यां वह्निमत्पर्वतप्रत्यक्षेच्छया वह्निमुख्यविशेष्यक-प्रत्यक्षजननप्रसङ्गात् । वह्नित्वविशिष्टस्य वह्नेः स्मरणेन जनिते पर्वतो वह्निमानित्युपनीतवह्निप्रकारकचाक्षुषे वह्निमुख्यविशेष्यकत्वस्यासम्भवाच्च अन्यथा वह्नित्वप्रकारतानिरूपितालौकिकमुख्यविशेष्यतासंसर्गेण चाक्षुषं प्रति जनिकायाः चक्षुःसंयुक्तविशेष्यकचाक्षुषप्रकारतापन्नवह्नित्वस्वरूपसामान्यप्रत्यासत्तेर्जनकतायां व्यभिचारप्रसङ्गात् । सामान्यधर्मप्रकारतानिरूपितविशेष्यतया जन्यप्रत्यक्षे ज्ञायमानं सामान्यं प्रत्यासत्तिरिति नव्यमतेऽपि पर्वतो वह्निमानित्यनुमितौ वह्निमुख्यविशेष्यकत्वं न सम्भवति पक्षतापरामर्शबाधाभावादीनां कार्यताया विशिष्टविषयकत्वेनैवावच्छेदात्, वह्निमुख्यविशेष्यतायाः केनापि कारणेनाप्रयुक्तत्वात्, परोक्षबुद्धीनां कारणाप्रयोज्यविषयतास्वीकारे मानाभावात्, विशिष्टविषयताऽखण्डविषयतयोर्व्याप्यव्यापकभावस्य च खण्डितत्वादिति चेत् ।

मैवम्, भिन्नविषयकानुमितिसामग्रीमदन्यजन्यबुद्धौ भिन्नविषयकानुमितिसामग्र्यभावः तत्तदिच्छाविशिष्टजन्यप्रत्यक्षादौ च तत्तदिच्छा कारणं, वह्निमत्पर्वतप्रत्यक्षं जायतामितीच्छाघटिता तु वह्निमत्पर्वतप्रत्यक्षसामग्री वह्निमुख्यविशेष्यकत्वरूपव्यापकधर्मावच्छिन्नमपि प्रत्यक्षं प्रयोजयतीत्यभ्युपगमात्, वह्निमुख्यविशेष्यताया वह्निमत्पर्वतविषयताव्यापकत्वन्तु वह्निमुख्यविशेष्यकस्मरणादिकार्यदर्शनादभ्युपेयते इति परोक्षबुद्धीनामपि तत् सिद्ध्यत्येव, वह्निमत्पर्वतविषयकानुमितिजनकसाध्यप्रसिद्धिप्रभवात् संस्कारादेव वा वह्निरिति स्मरणमभ्युपेतव्यम् ।

वस्तुतस्तु निरूपकताविशेषसंसर्गेण संस्कारं प्रत्यनुभवत्वेन कारणता न तु निर्णयत्वेन गौरवात्, पर्वतो वह्निमानिति वह्नित्वेन गुञ्जागैरिकाद्यवगाहिषु पर्वतत्वेन गिरिगण्डोपलमृत्कूटाद्यवगाहिषु च ज्ञानेषु नानाकारणतानामवच्छेदककुक्षौ निर्वह्निपर्वतविषयकज्ञानान्योन्याभावनिवेशे संख्यातोऽप्यधिकगौरवाच्च, संशयाच्च संस्कारोत्पत्तिवारणाय पर्वतत्वावच्छेदेन वह्न्यभावावगाहिनो ज्ञानस्य प्रतिबन्धकत्वमभ्युपेयम् । तत्प्रतिबध्यतावच्छेदकञ्च निर्वह्निपर्वतगोचरसंस्कारनिरूपितविषयताकसंस्कारत्वं, तेन पर्वतो वह्निमानिति पर्वतो वह्न्यभावाभाववानिति पर्वतो वह्न्यभाववदन्योन्याभाववानिति सकलसंस्कारपरिग्रहः । संशयानन्तरितनिश्चयाच्च संशयनाशानन्तरमेव संस्कारोत्पत्तिरभ्युपेतव्या । एवं वह्निप्रकारतानिरूपितविशेष्यत्वावच्छेदेन वह्न्यभावाद्यवगाहिनामप्रामाण्यज्ञानानां तथाविधाप्रामाण्यविषयकसंस्कारनिरूपितविषयताकसंस्कारं प्रत्येव

प्रतिबन्धकतया वह्निप्रकारकविशेष्यतावान् वह्न्यभाववान् वह्निमान्वेति
संशयकाले वह्निप्रकारकविशेष्यतावान् वह्निमानितिसंस्कार इव पर्व
वह्निमानिति संस्कारोऽपि नोत्पद्यते वह्निमत्पर्वतविषयताया अपि निरुक्त
प्रामाण्यविषयकसंस्कारनिरूपितत्वनियमात्, न हि अप्रामाण्यग्रहका
लीनेन पर्वतो वह्निमानित्यनुभवेन संस्कारो जन्यते। एवं वह्निज्ञानत्वावच्छे
देनाप्रामाण्यावगाहिनो ज्ञानस्याप्रामाण्यवद्वह्निज्ञानगोचरसंस्कारनिरू
पितविषयताकसंस्कारं प्रत्येव प्रतिबन्धकत्वमास्थेम्, तेन वह्निज्ञानं प्रम
न वेति संशयकाले वह्निज्ञा ˙ प्रमेति वह्निज्ञानमप्रामाण्याभाववदिति व
ह्निज्ञानमप्रामाण्यवदन्योन्याभाववदिति संस्कारा इव पर्वतो वह्निमानि
महानसं वह्निमदिति वह्निमत्पर्वतवानिति वह्निमन्महानसं द्रव्यमित्याद
योऽपि संस्कारा नोत्पद्यन्ते, न हि वह्निमत्पर्वतादिविषयता जात्वि
वह्निज्ञानाप्रामाण्यावगाहिना संस्कारेण निरूप्यते, यानि तु तत्तद्व्यक्ति
त्वावच्छेदेनाप्रामाण्यं वह्निज्ञानत्वसामानाधिकरण्येन तत्तद्व्यक्तावप्रा
माण्यञ्चावगाहमानानि ज्ञानानि तेषां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगि
ताकोऽभावो वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यता
कसंस्कारसामान्यं प्रत्येव करणं, न तु वह्न्यादिव्यक्तिभेदेन भिन्नासु का
रणतासु तत्तदप्रामाण्यज्ञानाभावनिवेशः। एवं सर्वांशे आहार्यव्यक्ती
सर्वांशे उपेक्षाव्यक्तीनाञ्च संस्कारसामान्यं प्रत्येव प्रतिबन्धकत्वमभ्युपे
आहार्यज्ञानजनकविशेषणज्ञानादेरेव विशेषणादिगोचरसंस्कारोदयात्, कि
ञ्चिदंशे उपेक्षास्वरूपाणामाहार्याणां च ज्ञानानां वह्निमत्पर्वतादिविष
कसंस्कारत्वावच्छिन्नं प्रत्येव प्रतिबन्धकत्वमभ्युपेयम्।

ननु यत्र पर्वतो वह्निमानित्यनुभव एव वह्नित्वेन गुञ्जागैरिकाद्यव
हितया समूहालम्बनभूतः वह्नीनां वह्निप्रकारतानिरूपितपर्वतविशेष्यता
नां निरूपकः किञ्चिदंशे भवत्युपेक्षास्वरूपः, तत्र तद्व्यक्तेर्विषयभेदभि
प्रत्येकविषयतानिरूपकसंस्कारं प्रत्येव प्रतिबन्धकत्वमाश्रयणीयं, तथा
तद्व्यक्तिभिन्नानुभवस्य वह्नित्वावच्छिन्नगैरिकप्रकारतानिरूपितपर्वतवि
शेष्यताकसंस्कारं प्रति जनकत्वं तथाविधविषयतानिरूपकत्वेनावच्छि
तां, प्रविशतु तत्रैव निर्णयत्वमुपेक्षाया भेदश्चेति चेन्न।

सकलोपेक्षाव्यक्तिभेदावच्छिन्नकारणतायाः प्रमाणागोचरत्वात् स
र्वज्ञेनापि प्रायशस्तावतां भेदानां ग्रहणे न किमपि प्रमाणमस्ति
न हि सर्वज्ञाः सर्वत्राबाधितानि रूपाणि प्रतियन्तीत्यागमो बोधय
किन्तु व्यवहितं विप्रकृष्टञ्च बुभुत्सया साक्षात्कुर्वन्तीति। न च व्य
हारकाले तादृशी कारणता केनापि प्रमाणेन बोधयितुमिष्यते।

ननु तदुपेक्षाभिन्नवह्निमत्पर्वतानुभवत्वेनैव समानविषयकसंस्कारं प्रति जनकत्वम्। एवं प्रत्येकव्यक्तिभिन्नानुभवानां मिलित्वा संस्कारोपधायकत्वोपगमान्नोपेक्षान्तरात्संस्कारसम्भवः। यत्र पुनरविरलक्रमेणोत्पन्नमुपेक्षाद्वयं तत्र तदुभयभेद एकत्रैव कारणतायामभिनिविशते इति न तत्र संस्कारप्रसङ्ग इति विषयतान्तर्भावेण कारणतैवानुभवस्य युज्यते, न तु प्रतिबन्धकत्वमुपेक्षायाः, पृथगनुभवस्य कारणताकल्पने गौरवात् उपेक्षासमनन्तरोत्पन्नोपेक्षया संस्कारजनने क्षणविलम्बप्रसङ्गात्। विषयतानां तादात्म्येन स्वनिरूपकजन्यगुणादौ कारणत्वाधिक्याच्च इति चेन्न।

एकत्र कुत्रचिदंशे अपेक्षात्मकमितरांशे चापेक्षात्मकं यत्समूहालम्बनं तदन्योन्याभावस्य कारणकोटावन्तर्भावे गौरवात्। तत्तदुपेक्षाव्यक्तिभिन्नानुभवविशिष्टसंस्कारत्वावच्छिन्नस्य निरूपकताविशेषसंसर्गेणोत्पत्तौ तद्व्यक्तिभिन्नानुभवस्य निरूपकताविशेषसंसर्गेण कारणत्वमिति पक्षस्यैवोचितत्वात्। चैत्रीयत्वादेर्जन्यताजनकतयोरवच्छेदककोटिप्रवेशस्तु विषयीभूतचैत्रादिभेदभिन्नविषयताभेदावच्छिन्नकार्यकारणभावस्वीकाराद्यपेक्षया न गौरवमावहति। विषयताव्यक्तीनान्तु स्मरणं प्रति क्लृप्तं यत्कारणत्वं तदेव संस्कारं प्रत्यपीति नातिरिच्यते, अनुभवसंस्कारयोः संस्कारस्मरणयोश्च विषयताभेदावच्छिन्नकारणतास्वीकारे महागौरवात्। संस्कारस्य तत्तदुपेक्षाभिन्नानुभववैशिष्ट्यन्तु स्वसमवायिसमवेतत्वं स्वनिरूपकविषयतानिरूपकत्वं स्ववृत्तिप्रागभावप्रतियोगित्वं कालिकसंसर्गश्चेति चतुष्टयात्मकमवसेयम्। यत्रापेक्षाबुद्ध्यात्मकः पटानुभवः, ततो वह्न्यंशे उपेक्षात्मकं वह्निगुञ्जागैरिकाणां समूहालम्बनं, तत्र गुञ्जाविषयतायां निरूपकताविशेषसम्बन्धेन जायमानोऽपि संस्कारस्तदुपेक्षाभिन्नपटानुभवविशिष्टः, तन्निरूपकविषयतानिरूपकत्वाभावात्, विनश्यदवस्थेनानुभवेन तु न कुत्रापि जन्यते संस्कारः, येन विभिन्नकालिकयोः कालिकसंसर्गाभावात् तदसंग्रहो दोषः स्यात्। कार्यसहभावेनैव चानुभवस्य स्मरणजनकत्वमभ्युपेयम्, तेन अविरलक्रमोत्पन्नोपेक्षाद्वयस्य द्वितीयोपेक्षाभिन्नेन प्रथमेन विनश्यता न संस्कारजन्म। एवमांशिकोपेक्षाव्यक्तिभिन्नानुभवस्य तथाविधानुभवविशिष्टसंस्कारे सर्वांशोपेक्षाव्यक्तिभिन्नानुभवस्य तु संस्कारसामान्ये विषयतावृत्तिनिरूपकतासंसर्गेण कार्यकारणभावः। विषयताव्यक्तीनाञ्च स्ववृत्तिनिरूपकतासंसर्गेण जन्यगुणसामान्ये जनकत्वम्, विपरीतज्ञानस्य तु विपरीतविषयकसंस्कारनिरूपितविषयताकसंस्कारसामान्यं प्रत्येव प्रतिबन्धक-

त्वम् । तत्तद्विषयतानिरूपकसंस्कारे तु तत्तदप्रामाण्यज्ञानाभावादिर्जनकः ।

अथवा तत्तदप्रामाण्यज्ञानानालिङ्गितानुभवविशिष्टसंस्कारे तथाविधानुभवस्य निरूपकताविशेषघटितस्य सामानाधिकरण्यप्रत्यासत्त्या जनकत्वम् । तदात्मसमवेतसंस्कारस्य तु विषयतानिष्ठप्रत्यासत्त्या तदात्मसमवेतस्मरणं प्रति एक एव कार्यकारणभाव इत्याखण्डलकार्थः । समवायप्रत्यासत्त्या कार्यकारणभावे तु पर्वतो वह्निमानिति स्मरणसंस्कारानुभवानां वह्निगैरिकगुञ्जादिविषयभेदभिन्नविषयताकाद्यवच्छिन्नः स्मरणसंस्कारयोः संस्कारानुभवयोश्च कार्यकारणभावकूटः । विषयताभेदेनानुभवस्य संस्कारजनकतायां संशयसर्वांशोपेक्षादेरांशिकोपेक्षायाश्चाप्रामाण्यज्ञानाभावस्येव तत्र प्रवेशे तेषां परस्परविशेष्यविशेषणभावे विनिगमकाभावेन कारणतानन्त्यम् । तत्तदन्योन्याभावात्यन्ताभावादिभेदेन भिन्ना वा तत्तद्विषयतानिरूपकाभावस्य कारणताकोटिरिति व्यक्तमेव गौरवम् । नन्वेवं पर्वतो वह्निमानित्यनुमितिसाक्षात्कारानुभवस्य निरूपकतासंसर्गेण लौकिकविशिष्टविषयतायामपि सत्त्वात् तत्र निरूपकतया संस्कारस्मरणयोरुत्पत्तिप्रसङ्गः, एवं पर्वतो वह्निमानित्यनुमितिरूपानुभवस्य पर्वतोद्देश्यतानिरूपितवह्निविधेयतायामपि निरूपकतया विद्यमानत्वात्तत्रापि संस्कारस्मरणयोरापत्तिः इति चेत् । उच्यते–पर्वतो वह्निमानित्याकारकसंस्कारव्यक्तिवृत्तिर्या समवायसंसर्गावच्छिन्ना कार्यता तन्निरूपककारणतावच्छेदकावच्छिन्नाधिकरणताकूटस्य चैत्रात्मप्रत्यासन्नस्यावच्छेदको यः क्षणः तदवच्छेदेन निरूपकताविशेषसंसर्गावच्छिन्नतद्व्यक्तिवृत्तिकार्यतानिरूपककारणताकूटाधिकरणं या विषयता सा तत्क्षणाव्यवहितोत्तरक्षणावच्छेदेन चैत्रात्मसमवेतसंस्कारस्य निरूपकतासंसर्गावच्छिन्नोत्पत्तिमतीति सामान्यतो व्याप्तिः । भवति च पर्वतो वह्निमानित्यलौकिकविषयतासंस्कारव्यक्तिवृत्तिर्या समवायसंसर्गावच्छिन्ना कार्यता तन्निरूपककारणतावच्छेदकावच्छिन्नानां विपरीतज्ञानाभावसम्बन्धदर्शनादीनां तदात्मनि अधिकरणतावच्छेदको योऽनुभवोत्पत्तिक्षणस्तदवच्छेदेन तादृश्यामलौकिकविषयतायां निरूपकताविशेषसंसर्गावच्छिन्नकार्यतानिरूपककारणतावच्छेदकावच्छिन्नानां चैत्रीयानुभवनिरूपकत्ववत्तद्विषयतादात्म्यादीनामधिकरणत्वमिति तदव्यवहितोत्तरक्षणावच्छेदेन सैवालौकिकविषयतासंस्कारोत्पत्तिमती, न तु लौकिकी, यादृशविषयताकसंस्कारं प्रति समवायिप्रत्यासन्नानि कारणानि प्रसिद्धानि तथाविधविषयताक[illegible]तादात्म्यस्यैव सामग्रीघट-

कत्वाभ्युपगमात्, लौकिकविशिष्टविषयताविधेयत्वोद्देश्यत्वादयस्तु न तादात्म्येन जनिकाः न वा संस्कारसामग्रीघटिकाः ।

नन्वेवमलौकिकबाधनिर्णयाव्यवहितोत्तरोत्पत्तिकलौकिकवह्निमत्पर्वतसाक्षात्कारेण संस्कारो न जन्येत, अलौकिकवह्निप्रकारतानिरूपितपर्वतविशेष्यताकविशिष्टबुद्धौ बाधनिर्णयस्य प्रतिबन्धकतया तत्र लौकिक्या एव वह्निप्रकारतायाः स्वीकारात्, तस्याश्च संस्कारसामग्र्यामननुप्रवेशात् इति चेन्न ।

स्वाव्यवहितोत्तरोत्पत्तिकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन बाधनिर्णयवदन्यजन्यबुद्धौ बाधनिर्णयस्य प्रतिबन्धकतया बाधनिश्चयोत्तरलौकिकविशिष्टबुद्धावलौकिक्या अपि वह्निप्रकारताया अभ्युपगमात् तस्यामेव संस्कारोत्पादात् । वह्न्युपनयघटिता हि सामग्री द्वेधा-एका बाधनिर्णयाभावघटिता, द्वितीया पर्वतवह्निसंयोगावच्छेदकावयवावच्छिन्नवह्निचक्षुःसंयोगपर्वतचक्षुःसंयोगादिकारणकलापघटिता च, इति लौकिकेऽपि ज्ञानेऽवश्यमलौकिकप्रकारता स्वीकर्तव्यैव ।

वस्तुतः प्रकारतापि लौकिकविषयताऽभिन्ना न भवत्येव किन्तु तदवच्छिन्ना, लौकिकी विषयता तु निर्विकल्पकविषयतातो नातिरिच्यते इति तयोर्द्वयोः संस्कारो जन्यत एव । संस्कारे तु लौकिकविषयताप्रकारतयोर्नावच्छेद्यावच्छेदकभावः, किन्तु साक्षात्कारिणि ज्ञान एवेति न काचिदनुपपत्तिरिति पटाद्युद्बोधकसत्त्वे निर्विकल्पकं स्मरणमुपपद्यत इति सम्भाव्यते ।

तत्रेदमालोचनीयम्-एवमपि निर्विकल्पकविषयतायाः संस्कारनिरूपितत्वे मानाभावः । यदि हि निर्विकल्पकविषयताव्यक्तेस्तादात्म्येन कारणत्वं प्रामाणिकं स्यात्तदा तदघटितया सामग्र्या जायेतापि तत्र संस्कारः स्मरणं वा, न चैतावता गगनादिपदादाकाशादिगोचरं निर्विकल्पकमुपपद्यते, नहि गगनपदज्ञानादेर्निर्विकल्पकविषयतानिरूपकस्मरणसामग्र्यामनुप्रवेशः प्रामाणिकः, न वा गगनादिवृत्तिनिर्विकल्पकविषयता केनचिदनुभवेन निरूप्यते, शब्दबुद्धेर्निर्विकल्पकाजनकत्वात् लौकिकप्रत्यक्षस्य तत्रासम्भवात् इति किमधिकेन ॥

महामहोपाध्यायश्रीगदाधरभट्टाचार्यविरचितो निर्विकल्पकस्मरणवाद(१०)वीचिः समाप्तः ॥ ** ॥

## महामहोपाध्याय श्रीहरिरामभट्टाचार्यविरचितः
## स्मृतिसंस्कारवाद(११)वीचिः ॥

ज्ञानादीनां सविषयकत्वं प्रत्यक्षसिद्धमेव, भावनाख्यसंस्कारस्य न तथा तस्यातीन्द्रियत्वात्, किन्तु कालान्तरभाविस्मृतिं प्रति ज्ञानस्य हेतुताया व्यापारं विनाऽनिर्वाहात् ज्ञानव्यापारतया तादृशसंस्कार इव तस्य भावनासंस्कारस्य सविषयकत्वमन्तरेण स्मृतिविषयतानियमानिर्वाहात् तस्य तथाहि—संस्कारस्य निर्विषयकत्वे पटादिस्मारकसंस्कारात् घटादिस्मरणवारणाय तत्प्रकारकतद्विशेष्यकस्मृतिं प्रति तत्प्रकारकतद्विशेष्यकज्ञानजन्यसंस्कारत्वेन हेतुता वाच्या, तस्य सविषयकत्वे च लघीयसी तत्प्रकारकतद्विशेष्यकसंस्कारत्वेन हेतुता इति लाघवज्ञानसहकृतेन जनकतायामवच्छिन्नत्वग्राहकानुमानेन तादृशधर्मावच्छिन्नत्वसिद्धौ, संस्कारः सविषयकः विषयत्वावच्छिन्नकारणतावत्त्वात् इत्यनुमानेन संस्कारस्य सविषयता सिध्यति ।

अथ सामान्यतः स्मृतित्वावच्छिन्नं प्रति संस्कारत्वेनैव हेतुता न तु विषयविशेषोऽप्यन्तर्भाव्यः, तत्प्रकारकतद्विशेष्यकस्मृतित्वावच्छिन्नं प्रति तादृशज्ञानत्वेनैव हेतुता वाच्या तावतैव स्मृतिविषयतानियम उपपद्यते । यत्तु-स्मृत्युत्पादाव्यवहितपूर्वक्षणे तज्जनकज्ञानासत्त्वादव्यवहितपूर्वक्षणावच्छिन्नायाः संस्कारत्वादिरूपसाक्षात्कारणतावच्छेदकावच्छिन्नस्तोमात्मकसामग्र्याः तद्विषयकस्मृतित्वावच्छिन्नोत्पत्तिप्रयोजिकायाः स्वीकरणीयत्वात् पटादिस्मारकसंस्कारदशायामपि घटादिस्मृत्युत्पादप्रयोजकसामग्रीसत्त्वात् तत्प्रसङ्गो दुर्वार एव-इति । तन्न, अव्यवहितप्राक्क्षणे कालिकसम्बन्धेन ज्ञानासत्त्वेऽपि व्यापारसम्बन्धेन तत्सत्त्वात् समानविषयकज्ञानस्यापि स्मृत्युत्पत्तिप्रयोजकसामग्रीघटकत्वोपपत्तेः । न च देशे कार्योत्पत्तौ अव्यवहितपूर्वक्षणावच्छिन्नदेशनिष्ठसामग्र्येव प्रयोजिका, तत्र च विनष्टस्य ज्ञानस्यान्तर्भावो न सम्भवति, तस्याव्यवहितप्राक्क्षणावच्छेदेनावृत्तेः कालिकसम्बन्धेन स्वानधिकरणकालस्य स्वीयवृत्तावनवच्छेदकत्वात्, व्यापारसम्बन्धेन तादृशक्षणस्य ज्ञानाधिकरणत्वेऽपि देशे तद्वृत्तावच्छेदकत्वासम्भवात, अन्यथा, एकावच्छेदेन एकत्र प्रतियोग्यत्यन्ताभावयोर्वृत्तौ विरोधात् ज्ञाननाशकालावच्छेदेन ज्ञानात्यन्ताभावस्तदाधिकरणेऽवर्तमानताप्रसङ्गात्, विपरीतज्ञाननाशेऽपि विशिष्टबुद्ध्युदयप्रसङ्गात्, अव्यवहितपूर्वक्षणवृत्तिसामग्र्याः देशे कार्योत्पत्तिनियामकत्वोपगमे च विपरीतज्ञानोत्पत्तावपि विशिष्टमत्यापत्तः विपरीतज्ञाना-

धिकरणक्षणस्याऽपि अन्यावच्छेदेन तदभावाधिकरणत्वात् तद्वतो देशस्य चान्यकालावच्छेदेन तदभाववत्त्वात्, तद्देशावच्छिन्नतदव्यवहितपूर्वक्षण-निष्ठायाः सामग्र्याः तद्देशनिष्ठकार्योत्पत्तिप्रयोजकत्वेऽपि चिरविनष्टज्ञान-स्य स्मृत्युत्पादकसामग्र्यन्तर्भावो न सम्भवति व्यापारसम्बन्धेन कालवृ-त्तौ देशस्यानवच्छेदकत्वात्, कालिकसम्बन्धेन काले वृत्तावेव देशस्य तथात्वात्, देशवृत्तिसामग्र्याः अव्यवहितपूर्वक्षणसत्त्वस्य देशे कार्योत्प-त्तिप्रयोजकत्वोपगमे च पूर्वोक्त एवातिप्रसङ्ग इति वाच्यम् । व्यापारसम्ब-न्धेनैव व्यापारि कारणं, तदव्यवहितप्राक्क्षणावच्छिन्नसाक्षात्कारणस्तो-मीयदेशसत्तायाः अव्यवहितप्राक्क्षणावच्छिन्नं यदेककारणव्यापारसत्त्वं तत्सहितस्य एकदेशे तथाविधेतरकारणसमुदायसत्त्वस्य च तत्र कार्यो-त्पत्तिप्रयोजकत्वोपगमेऽनुपपत्त्यभावात् । व्यापारत्वञ्च तज्जन्यत्वे सति साक्षात्प्रकृतकार्यजनकत्वम् । तत्र तज्जन्यत्वं फलोपधानरूपं निवेश्यते, तेन पटादिज्ञानजन्यसंस्कारं प्रति घटादिज्ञानस्य ज्ञानत्वेन स्वरूपयोग्यत्वेऽपि तस्य न तद्व्यापारता इति न तादृशसंस्कारघटितसामग्रीबलात् घटा-दिगोचरस्मरणापत्तिः । जनकतायां साक्षात्त्वनिवेशात् घटज्ञानानु-व्यवसायस्यापि घटज्ञानत्वेन घटस्मृतिजनकतया व्यापारत्वसम्भवेना-पेक्षात्मकघटज्ञानानुव्यवसायात् पटादिज्ञानजन्यसंस्कारबलात् घटस्म-रणापत्तेर्नावकाशः । एवं जनकत्वमसाधारणं निवेशनीयम्, तेन तादृश-घटज्ञानध्वंसस्य कालोपाधिविधया घटस्मृतिजनकत्वेऽपि न तद्वद्घट-स्मरणापत्तिः । असाधारणत्वं च जन्यत्वावच्छिन्ना या जन्यता तदनिरू-पितत्वं, कारणजन्यतावच्छेदकावच्छिन्नत्वं वा इति चेत् ।

एवंसति ध्वंसस्यैव ज्ञानव्यापारतासम्भवेन भावना न प्रमाणपद-वीमारोहेत् । यदि च भावनानुपगमे उपेक्षाज्ञानादपि स्मरणापत्तिः ध्वं-सरूपव्यापारस्य तत्राप्यक्षतत्वात्, तदुपगमे च तत्र संस्काराकल्पनात् नापत्तिः । न च ध्वंसद्वारा उपेक्षान्यज्ञानत्वेनैव स्मृतिजनकताऽस्तु, भव-न्मतेऽपि उपेक्षात्मकज्ञानेन संस्कारजननवारणाय संस्कारं प्रति उपेक्षा-न्यज्ञानत्वेन हेतुताया आवश्यकतया तेन रूपेण जनकत्वेऽवच्छेदकगौर-वस्य उपेक्षान्यत्वज्ञानत्वयोः विशेष्यविशेषणभावे विनिगमनाविरह-स्याकिञ्चित्करत्वात् इति वाच्यम् । उपेक्षान्यज्ञानत्वेन स्मृतिजनकत्वे उपेक्षात्मकानां तत्तज्ज्ञानव्यक्तीनां भेदकूटस्य एकत्र ज्ञाने निवेश्यतया-ऽवच्छेदकतायाऽव्यासज्यवृत्तित्वे तावतां भेदानां विशेष्यविशेषणभावे विनिगमनाविरहेण गौरवात् एकभेदनिवेशस्यासम्भवात् उपेक्षात्व-स्याऽनुगतस्यानिर्वचत्वात्, चाक्षुषत्वादिना सङ्करप्रसङ्गेन आंशिक-

त्वेन च तस्य जातित्वासम्भवात्। संस्कारं प्रति तेन रूपेण हेतुत्वे च तावतां भेदानां नैकत्र निवेशः, किन्तु एकैकभेदमन्तर्भाव्य ज्ञानस्य पृथक् पृथक् हेतुतायाः कल्प्यत्वात् उपेक्षाज्ञानकाले च तद्व्यक्तिभिन्नज्ञानरूपकारणविरहेणापत्त्यसम्भवात् न विनिगमनाविरहः। स्मृतिं प्रति च ज्ञानस्य प्रत्येकभेदान्निवेश्य नानाकारणत्वकल्पनं न सम्भवति उपेक्षात्मकनानाज्ञानध्वंसदशायां व्यापारसम्बन्धेन सकलकारणतावच्छेदकावच्छिन्नसत्त्वात् स्मरणापत्तेः। न च संस्कारं प्रति तादृशनानाकारणत्वकल्पने उपेक्षात्मकज्ञानद्वयसमवधानस्य एकदासम्भवात तदानीञ्च तादृशसकलकारणतावच्छेदकावच्छिन्नसत्त्वात् संस्कारापत्तिरिति वाच्यम्। तदनुरोधेन यादृशयादृशोपेक्षाव्यक्तेरेकदा समवधानम् तादृशतादृशोपेक्षाव्यक्त्योर्भेदद्वयस्यैकत्र निवेशात् स्मृतिकारणतामते तु तथाविधसहस्रव्यक्तीनां तत्र व्यापारसम्बन्धेन एकदा सत्त्वसम्भवेन सहस्रभेदानामेकत्र निवेशनीयतया गौरवात्।

अथवा ज्ञानस्य संस्कारं प्रति कार्यसहभावेनैव हेतुता, उपेक्षात्मकज्ञानद्वयानन्तरक्षणे च पूर्वज्ञानविनाशात न तदा संस्कारसम्भवः। यद्वा संस्कारं प्रति उपेक्षाज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वमेव। यत्र चोपेक्षाज्ञानानन्तरमुपेक्षाज्ञानान्तरं तत्र पूर्वज्ञाननाशानन्तरमेव संस्कारो जायते तद्व्यक्तेः प्रतिबन्धकतैव वा न कल्प्यते, द्वितीयेनेव प्रथमेनापि संस्कारजनने क्षतिविरहात्, स्मृतिं प्रति च नोपेक्षाव्यक्तीनां प्रतिबन्धकतासम्भवः, तासां नाशे स्मरणापत्तेर्वज्रलेपत्वात्, नापि तद्ध्वंसानां कदाचिदुपेक्षात्मकस्य ध्वंसे अपेक्षात्मकज्ञानानन्तरमपि स्मरणानुपपत्तेः, तस्मात् तत्र उपेक्षाभेदानां कारणतावच्छेदकत्वमेव स्वीकरणीयमिति उक्तं गौरवं दुर्वारमेव इति संस्कारसिद्धिरिति मन्यते, तदा पटाद्यंशे अपेक्षात्मकेन घटाद्यंशे चोपेक्षात्मकेन ज्ञानेन जन्यात् संस्कारात् घटादिस्मृतिवारणाय संस्कारस्य समानविषयकत्वेन हेतुत्वमावश्यकम्, अन्यथा तादृशतादृशज्ञानव्यक्तिभेदकूटस्य एकत्र स्मृतिजनकतावच्छेदककोटौ निवेशनीयतया उक्तगौरवापत्तेः, मन्मते च तदुपेक्षाव्यक्तिभेदानां विभिन्नतयैव संस्कारकारणतास्वेवावच्छेदकतया तत्तदुपेक्षाव्यक्तीनां घटादिविषयक संस्कारं प्रति प्रतिबन्धकतया तत्र घटादिविषयकसंस्काररूपकारणविरहेण तद्विषयस्मरणवारणसम्भवात्, तावतां भेदानामेकत्रानिवेशात् पटादिस्मरणानुरोधेन संस्कारस्यावश्यकतया तन्मते संस्कारहेतुतया तत्तदावश्यकोपेक्षाव्यक्तिभेदविशेषस्य तासां संस्कारं प्रति प्रतिबन्धकत्वकल्पनस्य चासम्भवात्।

अथ यथापि आंशिकोपेक्षाभेदाः स्मृतिजनकतावच्छेदककोटौ न निवेश्यन्ते, किन्तु तत्तज्ज्ञानव्यक्तीनां घटादिविषयकस्मृतित्वावच्छिन्नं प्रति प्रतिबन्धकत्वं कल्प्यते, तादृशज्ञानोत्तरापेक्षात्मकघटादिज्ञानात् घटादिस्मरणोपपत्तये तादृशापेक्षात्मकज्ञानजन्यसंस्कारव्यक्तीनां तत्र उत्तेजकत्वमुपगम्यते इतिचेत्।

एवमपि संस्कारं प्रति तत्तज्ज्ञानव्यक्तीनां प्रतिबन्धकत्वकल्पनापेक्षया गौरवमेव प्रतिबन्धकतावच्छेदकेऽधिकस्याभावान्तरस्य निवेशात्। न च संस्कारं प्रति तत्तज्ज्ञानव्यक्तीनां प्रतिबन्धकत्वे संस्कारत्वं भावनात्वं वा प्रतिबध्यतावच्छेदकमुपेयते इत्यत्र विनिगमनाविरहात् विविधप्रतिबन्धकताकल्पनेन महागौरवमिति वाच्यम्। भवन्मतेऽपि तत्तज्ज्ञानतत्तत्संस्काराभावयोः विशेष्यविशेषणभावे विनिगमनाविरहसत्वात्। वस्तुतस्तु व्यापकसंस्कारत्वजातेरप्रामाणिकत्वात् अस्मिन्मते नोक्तविनिगमनाविरहप्रसक्तिरपि।

अथ संस्कारसत्वे स्मृतिवारणाय तदुत्पत्तौ उद्बोधकस्यापेक्षणीयतया तस्य च फलबलकल्पनीयतया प्रयोजनाभावादेव तस्याकल्पनेन उपेक्षातः स्मरणवारणासम्भवे आंशिकोपेक्षाभेदाः स्मृतिजनकतावच्छेदककोटौ न निवेश्यन्ते, न वा तज्जन्यसंस्कारव्यक्तिमुत्तेजकीकृत्य प्रतिबन्धकता कल्प्यते, नापि संस्कारस्य समानविषयकत्वेन हेतुत्वं, सर्वांशे उपेक्षाज्ञानादपि एवंक्रमेण स्मृतिवारणसम्भवेऽपि तादृशज्ञानजन्यपण्डसंस्कारव्यक्तीनामप्रामाणिकानां कल्पनागौरवभयेन केवलं तादृशोपेक्षान्यत्वं संस्कारकारणतावच्छेदककोटौ निवेश्यते, तत्तद्व्यक्तीनां संस्कारं प्रति प्रतिबन्धकत्वं वा कल्प्यते इति चेत्। एवंसति स्मृतिं प्रति ज्ञानस्य हेतुताकल्पनं तद्व्यापारतया संस्कारकल्पनं च निरर्थकम् उद्बोधकसहकृतात्ममनोयोगादिसामान्यसामग्रीत एव स्मृतिसम्भवात्। वस्तुतस्तु सम्बन्धिपदादिज्ञानरूपोद्बोधकानामनुगतरूपेणैव स्मृतिहेतुतया तत्सत्वेऽननुभूतपदार्थस्मरणवारणाय स्मृतिं प्रति ज्ञानहेतुतायाः तद्व्यापारतया संस्कारकल्पनायाश्चावश्यकत्वात्। आंशिकोपेक्षाज्ञानानन्तरं नियतोद्बोधकसत्वे तद्विषयकस्मरणवारणाय समानविषयकत्वमावश्यकमेव।

अथ पदज्ञानादेः यद्यनुगतरूपेण पदज्ञानत्वादिना हेतुता, तदाऽगृहीतवृत्त्यादिरूपसम्बन्धस्य पुंसः पदज्ञानादितः तदर्थस्मरणप्रसङ्गः। यदि च गृहीतवृत्तिकपदज्ञानत्वादिना तथा, तदा स्मृतिगृहीतवृत्तिकपदज्ञानादितोऽपि स्मरणप्रसङ्गः। न च संस्कारविशिष्टतत्सम्बन्धिज्ञानत्वेन

हेतुत्वान्नायं दोष इति वाच्यम्। एवमपि तादृशसंस्कारस्यानुद्बुद्धतादशायां सम्बन्धिज्ञानात्स्मरणापत्तेः। उद्बुद्धसंस्कारनिवेशे च तादृशोद्बोधकानामननुगमात् अनुगतरूपेण हेतुत्वं दुर्वचम्। न च सम्बन्धिज्ञानस्य प्रतियोगिन इव सम्बन्धांशस्याप्युद्बोधकतया तत्सत्त्वे सम्बन्धिगोचरज्ञानस्यानुद्बोधकत्वमेव कुत इति वाच्यम्। हस्तीत्यादिना हस्त्यादिज्ञानेऽपि कदाचित् तन्निष्ठहस्त्यादिसम्बन्धाऽस्मरणदर्शनात् सम्बन्धितावच्छेदकरूपेण सम्बन्धिज्ञानस्य नियतसम्बन्धानुद्बोधकत्वात्। न च तत्पदार्थसम्बन्धविषयकसम्बन्धिज्ञानत्वेन तत्पदार्थस्मृतौ अनुगतहेतुता कल्प्यत इति वाच्यम्। सम्बन्धाविषयकस्यापि हस्त्यादिज्ञानस्य हस्तिपकादिस्मारकत्वात्, अन्यथा हस्तिपकादिसन्निकर्षासत्त्वे हस्तिपकादिसम्बन्धित्वेन हस्त्यादिज्ञानस्यासम्भवेन हस्तिदर्शनादितः हस्तिपकादिस्मरणानुपपत्तेः, तस्मात् सम्बन्धिज्ञानस्यापि अननुगतेनैव रूपेण हेतुता।

मैवम्। सम्बन्धाविषयकस्य सम्बन्धिज्ञानस्यानियतोद्बोधकतयाऽनियतेन तत्तद्व्यक्तित्वादिना हेतुत्वेऽपि तत्तत्पदार्थसम्बन्धित्वेन तत्तत्पदार्थसम्बन्धविषयकसम्बन्धिज्ञानसत्त्वे असत्यां विरोधिसामग्र्यां ज्ञानसामान्यसामग्रीसत्त्वे नियमतस्तत्तत्पदार्थस्मरणोपगमात् तादृशज्ञानस्यानुगतरूपेणैव हेतुता कल्प्यते लाघवात्। न च तत्तद्व्यक्तित्वादिनाऽनन्तकारणताप्रसङ्गात् तादृशसम्बन्धिज्ञानानन्तरं तत्तत्पदार्थस्य मानसज्ञानमेव सम्भवति उपनायकज्ञानसत्त्वादिति स्मरणमेव तत्राप्रामाणिकमिति वाच्यम् तादृशसम्बन्धिज्ञानस्योद्बोधकतयैव सिद्धेः स्मरामीत्यनुव्यवसायानुरोधेन स्मरणस्योपगन्तव्यत्वात्, अन्यथा संस्कारस्योपनायकतावादिनां प्राचां सर्वत्र स्मृतिस्थले उपनीतभानसम्भवेन स्मृतिमात्रस्यैव विलयापत्तेः। न च तादृशसम्बन्धिज्ञानस्य व्यभिचारात् तत्पदार्थविषयकस्मृतित्वावच्छिन्नं प्रति हेतुता न सम्भवति, तज्जन्यतावच्छेदकतया उद्बोधकान्तराधीनस्मृतिव्यावृत्तजातिविशेषकल्पनमपि न सम्भवति सकलपदार्थज्ञानजन्यतावच्छेदकतया सकलपदार्थस्मृतिनिष्ठैकजातिस्वीकारे सम्बन्धिज्ञानजन्यएकपदार्थस्मरणे उद्बोधकान्तरात् पदार्थान्तरभाने तत्र पदार्थसम्बन्धिज्ञानस्य व्यभिचारात् नानाजातीनामेव कल्पनीयतया तासां परस्परं सङ्करप्रसङ्गात्, अतस्तत्तद्व्यक्तित्वमेव तस्य जन्यतावच्छेदकं वाच्यं, तथाचानुगतरूपेण कारणताकल्पनमपि निष्प्रयोजनं, तत्तद्व्यक्तित्वेन कारणत्वेऽपि न कारणताधिक्यमिति वाच्यम्। अनन्तकारणताकल्पनापेक्षया कार्यतावच्छेदककोटौ [illegible]हितोत्तरत्वसम्बन्धेन का[illegible]

रणवशिष्ट्यं निवेश्य अनुगतरूपेणैव तादृशज्ञानानामेकैककारणताकल्पनात् । एवं सम्बन्धितावच्छेदकीभूतयादृशधर्मप्रकारकज्ञानसत्त्वेऽसत्यां विरोधिसामग्र्यां यस्य पुंसो नियमतो यादृशपदार्थस्मरणं तत्पुरुषीयतादृशपदार्थस्मरणे सम्बन्धाविषयकस्यापि तादृशधर्मप्रकारकज्ञानस्यानुगतरूपेणैव हेतुता कल्प्यते, नतु तत्तद्व्यक्तित्वेन गौरवात्, इत्थञ्च उक्तयुक्त्या गौरवमप्रतमेव । एवं भूतलं घटवन्नवेत्यादिसंशयात्मकज्ञानात् भूतलत्वाद्यवच्छिन्नविशेष्यकघटादिस्मरणवारणाय तादृशस्मृतौ तादृशसंस्कारत्वेन हेतुताया आवश्यकत्वात् संस्कारस्य सविषयतासिद्धिः, संशयात्मकज्ञानात् धर्मिस्मरणाद्यनुरोधेन संस्कारस्यावश्यकतया तादृशस्मृतौ तादृशसंस्कारत्वेनाहेतुत्वे संशयात् तादृशस्मरणस्य दुर्वारत्वात् । न च तादृशस्मृतौ समानविषयकनिश्चयत्वेन हेतुताऽस्तु तावतैव तादृशापत्तिवारणसम्भवात्, अवन्मतेऽपि संस्कारविशेषं प्रति तेन रूपेण हेतुताया आवश्यकत्वादन्यथा तादृशसंशयात् भूतलत्वाद्यवच्छिन्नविशेष्यकघटादिप्रकारकसंस्कारोत्पत्तौ बाधकाभावात् तादृशसंस्कारत्वेन हेतुत्वेऽपि अतिप्रसङ्गतादवस्थ्य स्व इति वाच्यम् । तद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नप्रकारकस्मृतिं प्रति तद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नाभावप्रकारकान्यतद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नप्रकारकज्ञानत्वरूपनिश्चयत्वापेक्षयालघुना तद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नप्रकारकसंस्कारत्वेन हेतुत्वात्, संशयात्तादृशसंस्कारवारणाय तत्र तादृशनिश्चयत्वेन हेतुताकल्पनप्रयुक्तगौरवस्य फलमुखत्वेनाकिञ्चित्करत्वात् ।

अथवा संस्कारं प्रति ज्ञानस्य हेतुतायां तदभावाप्रकारकत्वतत्प्रकारकत्वयोर्नैकत्र निवेशः, किन्तु तदभावाप्रकारकत्वेन तत्प्रकारकत्वेन च पृथगेव कारणत्वम् । घटप्रकारकसंशयघटाभावाप्रकारकपटादिज्ञानाभ्यामविरलक्रमेणोत्पन्नाभ्यामग्रिमक्षणे संस्कारविशेषापत्तिस्तु कार्यसहभावेन ज्ञानस्य संस्कारहेतुतामुपगम्य निरसनीया, स्मृतिं प्रति निश्चयत्वेन हेतुत्वे च तदभावाप्रकारकत्वतत्प्रकारकत्वज्ञानत्वानां मिथोविशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यमिति स्फुटमेव गौरवम् । न चैतन्मते त्रयाणां विनिगमनाविरहेण कारणताषट्कप्रसङ्गोऽपि, भवतामपि तदभावाप्रकारकत्वज्ञानत्वयोः तत्प्रकारकत्वज्ञानत्वयोश्च विशेष्यविशेषणभावे विनिगमनाविरहेण संस्कारं प्रति ज्ञानकारणताचतुष्टयं, तत्प्रकारकत्वसंस्कारत्वयोश्च तथात्वेन स्मृतिं प्रति कारणताद्वयीति वाच्यम् । एवमपि निश्चयत्वेन स्मृतिहेतुतामते कारणतावच्छेदकगौरवस्य विषयम-

निवेश्य सामान्यतः संस्कारत्वावच्छिन्नं प्रति ज्ञानत्वेन कारणताया आधिक्यात् ।

अथवा संस्कारं प्रति निश्चयत्वेन हेतुताऽस्माकमपि न, किन्तु तत्प्रकारकतद्विशेष्यकज्ञानत्वमात्रेण । संशयात् संस्कारविशेषापत्तिस्तु तदभावप्रकारकज्ञानत्वेन प्रतिबन्धकतां कल्पयित्वा वारणीया। संशयानन्तरोत्पन्ननिश्चयादिद्वितीयक्षणे संस्कारनिर्वाहाय चोत्पत्तिक्षणावच्छिन्नत्वं प्रतिबन्धकतावच्छेदककोटौ निवेश्यते। ज्ञानस्य संस्कारं प्रति कार्यसहभावेन हेतुत्वात् न संशयतृतीयक्षणे संस्कारविशेषापत्तिः। निश्चयत्वेन स्मृतिहेतुतामते च घटाभावाद्यप्रकारकत्वरूपैकविशेषणस्य घटवद्भूतलवान् देश इत्याद्यनन्तबोधनिष्ठस्मृतिहेतुतायां निवेशे गौरवात् ।

वस्तुतस्तु अस्मन्मते संस्कारं प्रति तद्विशेष्यकतत्प्रकारकज्ञानत्वेनैव हेतुता न तु निश्चयत्वेन। संशयात् संस्कारविशेषवारणाय तत्र संशयस्य तद्विशेष्यकतदभावप्रकारकज्ञानत्वेन प्रतिबन्धकता कल्प्यते । एवं संस्कारस्य निर्विषयतामते तद्विशेष्यकतदभावप्रकारकान्यतद्विशेष्यकतत्प्रकारकज्ञानत्वरूपस्मृतिकारणतावच्छेदकतदभावाप्रकारकत्वतत्प्रकारकत्वज्ञानत्वानां त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताषट्कं विषयभेदेन, संस्कारं प्रति च ज्ञानत्वेनैकहेतुता विषयाभेदेन, अस्मन्मते तद्विशेष्यकतत्प्रकारकसंस्कारे तादृशज्ञानस्य तत्प्रकारकत्वज्ञानत्वयोः विशेष्यविशेषणभावे विनिगमनाविरहेण संशयस्य प्रतिबन्धकताद्वयं, संस्कारस्य च स्मृतिं प्रति तत्प्रकारकत्वसंस्कारत्वयोः विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताद्वयमिति कारणताषट्कं, स्मृतिं प्रति ज्ञानत्वेनैकहेतुता इति भवन्मते विषयभेदेन अनन्तकारणतासु अवच्छेदकगौरवम्, एककारणताया आधिक्यम् । न च संशयस्य प्रतिबन्धकत्वे संशयानन्तरोत्पन्ननिश्चयात् संस्कारानुपपत्तिरिति वाच्यम् । संशयनाशानन्तरमेव तत्र संस्कारजननात् संस्कारं प्रति कार्यसहभावेन हेतुताया अपि अनभ्युपगमात् ।

अथवा ज्ञानस्य संस्कारं प्रति तदभावाप्रकारकत्वेनैव हेतुत्वं, न तु संशयस्य प्रतिबन्धकत्वं कल्प्यते । तत्प्रकारकज्ञानत्वेनापि कारणत्वान्तरं कल्पनीयम्, अत उपदर्शितधर्मत्रयस्य विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्तकारणषट्कस्य नावकाशः । स्मृतिं प्रति तदभावाप्रकारकत्वविशिष्टतत्प्रकारकज्ञानत्वेनैव हेतुता, न तु निरुक्तधर्मावच्छेदेन पृथक्कारणताद्वयम्, तथासति घटाभावाप्रकारकपटज्ञानजन्यसंस्कारस्य सत्त्वे घटप्रकारकसंशयजन्यसंस्कारस्य सत्त्वे च घटप्रकारकस्मरणापत्तिः प्रत्येकतादृश-

धर्मद्वयावच्छिन्नस्य व्यापारसत्त्वात्, अस्मन्नये च क्रमोत्पन्नाभ्यां पटादिज्ञानघटादिसंशयाभ्यां घटादिप्रकारकसंस्कारजननस्य न प्रसङ्गः कार्यसहभावेन ज्ञानस्य संस्कारजनकत्वात् कार्यकाले तादृशज्ञानद्वयस्यासत्त्वात्, एवं च संस्कारस्य निर्विषयत्वमते विषयभेदभिन्नानां कारणतानां साम्येऽपि पूर्ववत् अनन्तकारणतास्ववच्छेदकगौरवमेककारणताधिक्यञ्चेति ।

वस्तुतस्तु स्मृतिं प्रति निश्चयत्वेन हेतुतामते भूतलविशेष्यकघटाभावप्रकारकत्वरूपैकविशेषणस्य घटविशिष्टभूतलं घटवद्भूतलविशिष्टदेशादि इत्यादिनानाविधविशिष्टपदार्थगोचरस्मृतिहेतुतायां निवेशनीयतयाऽनन्तस्थले तादृशधर्मेण सह धर्मान्तराणां विशेष्यविशेषणभावे विनिगमनाविरहात् कारणतानन्त्यम्, अस्मन्मते च तथाविधसकलविशिष्टपदार्थगोचरसंस्कारसाधारणघटविशिष्टभूतलादिविषयकसंस्कारत्वावच्छिन्नं प्रति भूतलविशेष्यकघटाभावप्रकारकान्यज्ञानत्वादिना एकैककारणता तत एव निर्वाहः, भवतां तथाविधसकलपदार्थस्मरणे घटविशिष्टभूतलमुख्यविशेष्यकघटनिश्चयजन्यसंस्कारस्य घटांशे संशयात्मकपटवद्भूतलदेशादिविषयकज्ञानजन्यसंकारस्य च सत्त्वे घटवद्भूतलवान्देश इत्याकारकस्मरणापत्तेस्तादृशस्मृतौ तत्समानाकारकज्ञानीयकारणतान्तरेऽपि तन्निवेशनमावश्यकमेव, अस्मन्मते समानाकारकज्ञानस्य कार्यसहभावेन हेतुतया क्रमोत्पन्नतादृशसंशयतादृशनिश्चयाभ्यां घटवद्भूतलविशिष्टदेशसंस्कारजननासंभवेन तदुत्तरं तादृशविशिष्टविषयकस्मरणापत्तेर्नावकाशोऽपीति ।

अथ संशयोत्तरमेकैककोटिस्मारक उद्बोधक इष्यत एव एकैककोटिनिश्चयः, किन्तु संशयात्मकस्मरणमेव सिद्धान्तविरुद्धतया नाभ्युपेयते, तद्वारणञ्च निश्चयत्वेन स्मृतिं प्रति संस्कारं प्रति च ज्ञानस्य हेतुताकल्पनसाध्यम् । तत्कल्पनेऽपि एकधर्मावच्छिन्नविशेष्यकप्रत्येककोटिनिश्चयद्वयजन्यसंस्कारयोः युगपदुद्बोधकसमवधाने तादृशस्मरणापत्तेर्वज्रलेपत्वात्, अतः समानधर्मितावच्छेदकैककोटिस्मरणसामग्र्याः अपरकोटिस्मृतिं प्रति प्रतिबन्धकत्वं स्वीकृत्यैव संशयाकारकस्मृतिर्वारयितव्या इत्यलं समानविषयकत्वेन संस्कारहेतुतया सामान्यतः संस्कारस्य संस्कारत्वेन हेतुत्वेऽपि स्मृतिकारणतायां निश्चयत्वानिवेशेन गौरवानवकाशात् इति चेन्न ।

संशयादेकैककोटिस्मरणास्वीकारे उपेक्षात्मकसंशयात् तादृशस्मरणवारणाय संस्कारकारणतायां तत्तदुपेक्षाव्यक्तिसहस्रभेदनिवेशे महा-

गौरवात्, तदपेक्षया लाघवात् स्मृतिं प्रति निश्चयत्वेन हेतुताया भवतैव कल्पनीयत्वात्, तदपेक्षया उक्तलाघवेन च स्मरणं प्रति समानविषयकत्वे- न संस्कारस्य तं प्रति च निश्चयत्वेन ज्ञानस्य हेतुताया निष्प्रत्यूहत्वात्। न चोपेक्षात्मकसंशयात् विशकलितानां तद्विषयपदार्थानां स्मरणवारणा- य तदुपेक्षाव्यक्तिभेदानां संस्कारजनकतावच्छेदककोटौ निवेशनमावश्य- कमिति वाच्यम्। उपेक्षानात्मकविशकलिततावत्पदार्थज्ञानानन्तरं यत्रो- पेक्षात्मकसंशयः, तदनन्तरं विशकलिततावत्पदार्थस्मरणस्यावश्यकतया तादृशव्यक्तीनां भेदनिवेशस्यानावश्यकत्वात्। एवं संस्कारस्य निर्विषय- कत्वमते मानसादिकं प्रति स्मृतिसामग्र्या उद्बोधकविशेषसमवहितघ- टादिस्मारकोद्बोधकादिज्ञानजन्यसंस्कारत्वेन प्रतिबन्धकता वाच्या, घ- टादिविषयकज्ञानजन्यत्वाप्रवेशे घटादिस्मारकोद्बोधकसमवहितपटादि- ज्ञानजन्यसंस्कारस्याऽपि प्रतिबन्धकताऽनपायात्। संस्कारस्य सविषय- कत्वोपगमे घटादिविषयकज्ञानजन्यसंस्कारस्य न घटादिविषयकत्वमात्रं निवेश्यते इति लाघवानुरोधेनाऽपि संस्कारस्य विषयतासिद्धिः। एतन्मते संस्कारस्य विषयतानियामककार्यकारणभावकल्पनागौरवन्तु फलमुख- तया न दोषाय। वस्तुतो नानाविधोद्बोधकमनन्तर्भाव्य कल्पनीयना- नासामग्रीप्रतिबन्धकतास्ववच्छेदकलाघवेन, तद्विषयकसंस्कारे तद्विषयज्ञा- नत्वेनैककारणताधिक्यं गौरवप्रयोजकमपि।

अथ तद्विषयकत्वेनाभिमतेषु संस्कारेषु विषयताविशेषकार्यका- रिणो जातिविशेषा एव स्वीक्रियन्ताम्, किं विषयतया। न च ज्ञाना- दिषु क्लृप्ततया विषयतयैवोपपत्तौ अक्लृप्तजातिविशेषस्वीकारोऽनुचित इति वाच्यम्। घटादिविशेष्यकघटत्वादिप्रकारकस्मृतौ घटादिविशेष्य- कघटत्वादिप्रकारकसंस्कारस्य हेतुत्वे तदघटकसंस्कारत्वघटत्वप्रका- रकत्वादीनां विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतावृद्धेः अवच्छेदकगौरवाच्च जातिविशेषस्य कारणतावच्छेदकतया कल्पयि- तुमुचितत्वात्, एवं जातिविशेषस्वीकारे सामग्रीप्रतिबन्धकतायामपि लाघवं सम्भवतीति। न च घटादिविषयकपटादिविषयकस्मृतिजन- कतावच्छेदकनानाजातीनां समूहालम्बनज्ञानजन्यसमूहालम्बनसंस्कारे सामानाधिकरण्यात् एकैकविषयकज्ञानजन्यसंस्कारे परस्परपरीहारे- ण वृत्तेः जातिसङ्करप्रसङ्गात् न जातिकल्पनासम्भव इति वाच्यम्। स- मूहालम्बनस्थले प्रत्येकविषयकनानासंस्काराणामेव स्वीकारेण तासां जातीनामैकाधिकरण्याप्रसक्तेः उक्तलाघवेन जातिसिद्धौ तत्सङ्करपरीहा- राय व्यक्तिभेदकल्पनागौरवस्य फलमुखत्वेनादोषत्वात्। न च घटवद्

भूतलमिति ज्ञानादिजन्य विशिष्टस्मरणजनकसंस्कारेषु घटवद्भूतलमि-त्यादिप्रत्येकपदार्थस्मरणजनकतावच्छेदकनानाजातिस्वीकार आवश्यक एव, अन्यथा विशिष्टस्मरणस्यापि प्रत्येकविषयकतया तादृशसंस्काराद् विशिष्टस्मरणोत्पत्तेरसम्भवात् इति वाच्यम् । तत्रापि विशिष्टस्मृत्युत्पादकसंस्कारातिरिक्तानां प्रत्येकस्मारकतावच्छेदकनानाजात्याक्रान्तानां संस्काराणां कल्प्यतया तादृशनानासंस्कारात् विशिष्टस्मरणोपपादनसम्भवात् एकसंस्कारे तादृशनानाजातेरेवाकल्पनात् इति चेन्न ।

फलमुखगौरवस्यापि दोषतायां व्यवस्थापनीयत्वात् । अनन्तसंस्कारव्यक्तीनां अनन्तजातीनां च कल्पनापेक्षयोक्तविनिगमनाविरहेणाधिककतिपयकारणताकल्पनस्यावच्छेदकगौरवस्यादोषतायाः प्राग् व्यवस्थापितत्वात् । तादृशव्यक्तिभेदादिकल्पनागौरवस्य जातिविशेषकल्पनायामविरोधित्वे धूमादिलिङ्गकपरामर्शादिकार्य्यतावच्छेदककोटाव्यवहितोत्तरत्वस्य अन्यलिङ्गकानुमितौ व्यभिचारवारणाय निवेशे गौरवात्, तज्जन्यतावच्छेदकतया अनुमित्यादौ जातिविशेषाणां नानालिङ्गकसमूहालम्बनपरामर्शादिस्थले तेषां साङ्कर्य्यपरिहारानुरोधेन च नानुमित्यादेर्युगपदुत्पादस्य च सिद्धिप्रसङ्गः, न हि सजातीयज्ञानानां युगपदुत्पादसाधकाभावादन्यत् किमपि बोधकं, निर्युक्तिकसिद्धान्तभङ्गस्यातथात्वात् । प्रत्यक्षाद्युत्पादकाले अनुमित्याद्युपगमे अनुमिनोमीत्यनुव्यवसायापत्तिवत् प्रकृतेऽतिप्रसङ्गविरहात् । नचैवं परस्परविजातीयनानाचेष्टानां युगपदुत्पादस्थले चेष्टाविशेषजनकतावच्छेदकजातीनां सङ्करभयेन कृतियौगपद्यस्वीकारो विरुध्येत, व्यक्तिभेदादिकल्पनागौरवभयेन कार्य्यकारणभावेऽवच्छेदकगौरवादिसहिष्णुतायां तत्तज्जातीयचेष्टां प्रति तत्तज्जातीयचेष्टानिष्ठसाध्यतानिरूपितोपादानत्वस्वावच्छेदकत्वोभयसम्बन्धेन कृतित्वेन हेतुत्वमुपगम्य समूहालम्बनैककृतित एव नानावयवेषु युगपत् प्रतिनियतनानाजातीयचेष्टोत्पत्तिनिर्वाहात् कृतिवैजात्यस्यैवासिद्धेरिति वाच्यम् । कृतियौगपद्यानभ्युपगमे क्षतिविरहात्, प्राचीनैर्योग्यात्मविशेषगुणानां यौगपद्यस्यैवानभ्युपगमात् ।

वस्तुतस्तद्विषयकस्मृतिं प्रति विजातीयसंस्कारत्वेन हेतुत्वे विषयभेदेन स्मृतिसंस्कारयोरनन्तकार्य्यकारणभावप्रसङ्गाद्गौरवम्, संस्कारस्य सविषयकत्वोपगमे च विषयमनिवेश्यैव समानविषयत्वप्रत्यासत्त्या कार्य्यकारणभावोपगमात् न विषयभेदेन तद्भेद इति लाघवम् । न च स्मृतिं प्रति समानविषयत्वप्रत्यासत्त्या संस्कारस्य हेतुत्वे द्रव्यत्वेन घटं पृथिवीत्वेन च पटमवगाहमानेन ज्ञानेन जनितात् संस्कारात् पृथिवीत्वेन

घटस्य द्रव्यत्वेन च पटस्य स्मरणापत्तिः, अतस्तत्प्रकारतानिरूपिततद्वि-शेष्यताशालिस्मृतौ तत्प्रकारतानिरूपिततद्विशेष्यताशालिसंस्कारस्य हेतुताकल्पनमावश्यकम् इति विषयभेदेन हेतुताभेद आवश्यक इति वाच्यम् । तद्धर्मप्रकारतानिरूपितविशेष्यतासम्बन्धेन स्मृतिं प्रति तादृश-सम्बन्धेन संस्कारत्वेन हेतुत्वोपगमादुक्तातिप्रसङ्गनिरासात् विषयभेदेन कारणताभेदविरहेण लाघवस्यापि सम्भवात् ।

अथ दर्शितविशेष्यनिष्ठविशेष्यतानिरूपितप्रकारताप्रत्यासत्त्या प्रकारं निवेश्य तन्निष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन स्मृतिं प्रति तादृशप्रत्यासत्त्या तन्निष्ठप्रकारतानिरूपित विशेष्यताप्रत्यासत्त्या वा विशेष्यं निवेश्य तादृशप्रत्यासत्त्या तद्धेतुता कल्प्यते इत्यत्र विनिगमनाविरह इति चेत्,

आस्तां विनिगमनाविरहादुभयविधप्रत्यासत्त्यैव कार्य्यकारणभावः, तथापि विशेष्यप्रकारत्वे निवेश्यात्मनिष्ठप्रत्यासत्त्या कार्य्यकारणभावकल्पनापेक्षया एतन्मते कार्य्यकारणभावानामल्पतरत्वमेव, तन्मते विशेष्यसहस्रस्य प्रत्येकमन्तर्भाव्य प्रकारसहस्रभेदेन सहस्रगुणितं कारणतासहस्रम् , एतन्मते एकैक विशेष्यं प्रकारत्वञ्चान्तर्भाव्य एकैककार्य्यकारणभावमात्रकल्पनम् ।

अथवा संस्कारस्य सविषयकत्वोपगमे स्वनिरूपितविशेष्यतासम्बन्धेन स्मृतिं प्रति तादृशसम्बन्धेन विषयमन्तर्भाव्य हेतुता कल्प्यते, तावतैव एकसंस्कारादन्यविषयकस्मरणस्य द्रव्यत्वपृथिवीत्वाभ्यां घटपटविषयकसंस्कारात् विपरीतप्रकारेण तदुभयस्मरणस्य वारणात् । यादृशविषयता संस्कारनिरूपिता तादृशविषयतायामेव निरूपितत्वसम्बन्धेन स्मृत्युत्पादात् एकविषयताशालिसंस्कारादन्यविषयताशालिस्मृत्यसम्भवात् । घटवद्भूतलमित्यादिज्ञानजन्यसंस्कारे घटत्वादिप्रकारतानिरूपितघटादिमुख्यविशेष्यतापि स्वीक्रियते घटत्वादिप्रकारकघटादिमुख्यविशेष्यकज्ञानघटितसामग्र्या एव तन्नियामकत्वात् , तस्याश्च घटवद्भूतलमित्यादिज्ञानकाले सत्त्वात् , अतो घटवद्भूतलमित्यादिज्ञानजन्यसंस्कारात् भूतलादिभासकोद्बोधकासमवधानदशायां न तादृशमुख्यविशेष्यताशालिस्मरणस्यानुपपत्तिः । एवञ्च स्मृतिसामग्र्याः प्रतिबन्धकतायां घटादिज्ञानजन्यसंस्कारस्य घटादिविषयसंस्कारत्वेन निवेशापेक्षया वैजात्यपुरस्कारेण निवेशे लाघवम् । यदि च तत्र जातिविशेषाः सिध्यन्ति तदा सिध्यन्तु, यदि तदुपगमे समूहालम्बनस्थले नानासंस्काराणां कल्पनीयतया गौरवं न बाधकं तदा तत्र नास्माकं विद्वेषः, तत्सिद्धावपि उक्तलाघवेन संस्कारस्य सविषयकत्वसिद्धेर्निष्प्रत्यूहत्वात् इति ।

केचित्तु संस्कारस्य सविषयकत्वानुपगमे घटादिज्ञानजन्यसंस्कारस्य पटादिस्मरणेन नाशप्रसङ्गस्तन्मते विषयमनन्तर्भाव्य संस्कारत्वस्मृतित्वाभ्यामेव सामान्यतो नाश्यनाशकभावस्योपेयत्वात्, तद्विषयकज्ञानजन्यसंस्कारत्वेन तद्विषयकस्मृतित्वेन नाश्यनाशकभावोपगमे गौरवात् लाघवेन तद्विषयकसंस्कारत्वस्यैव नाश्यतावच्छेदकत्वसिद्धेः संस्कारस्य सविषयताया निष्प्रत्यूहत्वात्। न च जनकतासम्बन्धेन स्मृतित्वावच्छिन्नस्य प्रतियोगितासम्बन्धेन संस्कारनाशं प्रति हेतुत्वात्तत्संस्कारफलीभूतस्मृत्यैव तत्संस्कारनाशः सम्भवतीति न पटादिस्मरणेन स्वाजनकघटादिज्ञानजन्यसंस्कारस्य नाशापत्तिरिति वाच्यम्। संस्कारस्य निर्विषयत्वमते सामान्यतः स्मृतित्वावच्छिन्नं प्रति संस्कारत्वेनैव जनकत्वात्, घटादिज्ञानजन्यसंस्कारस्यापि पटादिस्मृतिजनकतया उक्तापत्तेर्वारयितुमशक्यत्वात्। तत्तद्व्यक्तित्वावच्छिन्नजनकतानां प्रत्यासत्तित्वेऽननुगमात् तादृशजनकताकूटसाधारणानुगतरूपे प्रत्यासत्तितावच्छेदकत्वस्य दुर्वारत्वात्, उद्बोधकसमवधानस्थलीयस्मरणेषु उद्बोधकानां तत्तद्व्यक्तित्वेन हेतुतया तेषामेव तत्तद्व्यक्तित्वावच्छिन्नोत्पादनियामकतया तत्र संस्कारस्य तत्तद्व्यक्तित्वेन हेतुताया अप्रामाणिकत्वात्। एतेन स्वरूपसम्बन्धावच्छिन्नावच्छेदकताकजनकतात्वेन समवायसम्बन्धावच्छिन्नसंस्कारत्वनिष्ठावच्छेदकताकजनकताव्यावृत्तेन तत्तद्व्यक्तित्वावच्छिन्नजनकताकूटस्य प्रत्यासत्तित्वेऽपि न निस्तारः। अथ संस्कारस्य सविषयकत्वेऽपि तत्तत्स्मृतित्वेनैव तत्तत्संस्कारनाशकता वाच्या, तद्विषयकसंस्कारनाशं प्रति सामानाधिकरण्यसम्बन्धेन तद्विषयकस्मृतित्वेन सामान्यतः संस्कारनाशं प्रति जनकतासम्बन्धेन स्मृतित्वेन वा कारणत्वोपगमे घटपटादिगोचरसंस्कारस्य केवलपटादिविषयकस्मरणेन नाशापत्त्या तदुत्तरं घटादिस्मरणानुपपत्तिः, एवञ्च संस्कारस्य निर्विषयकत्वेऽपि नाश्यनाशकभावः सम्भवति पटादिस्मरणेन तादृशसंस्कारनाशेऽपि घटादिविषयकसंस्कारस्थले तदुत्तरं घटादिस्मरणोपपत्तेः। न च घटवद्भूतलमितिज्ञानात् यत्र केवलघटादिस्मरणं तत्र विशिष्टविषयकसंस्कारो न नश्यति घटत्वान्यधर्मनिष्ठप्रकारत्वानिरूपितघटादिमुख्यविशेष्यताशालिसंस्कारस्यैव घटत्वादिना घटादिविशेष्यकस्मृतित्वावच्छिन्ननाश्यतोपगमात्, अतो न तत्रापि तदुत्तरं भूतलादिस्मरणानुपपत्तिरिति वाच्यम्। समूहालम्बनस्थले नानासंस्कारस्वीकारे घटादिस्मृतिनाश्यतावच्छेदकतथाविधकार्य्यकारिणां जातिविशेषाणामेवावच्छेदकतालाघवानुरोधेन स्वीकर्तुमुचितत्वात् इति चेन्न।

संस्कारस्य सविषयकत्वेऽपि तत्तद्व्यक्तित्वेन संस्कारस्मरणयोर्न नाश्यनाशकभावः अनन्ततत्कल्पनापातात्, अपितु घटत्वादिप्रकारकघटादिविशेष्यकसंस्कारनाशं प्रति तादृशस्मृतित्वेनैव हेतुता, तत्र कार्य्यस्य प्रतियोगित्वं कारणस्य च सामानाधिकरण्यं प्रत्यासत्तिः। स्वजन्यसंस्कारस्य स्मृत्या नाशवारणाय स्वपूर्वत्वमपि हेतुतावच्छेदकसम्बन्धो वाच्यः।

वस्तुतःस्वजन्यसंस्कारस्य स्वतृतीयक्षणे न नाशसम्भवः, प्रतियोगितासम्बन्धेन नाशत्वावच्छिन्नं प्रति पूर्वंस्वसम्बन्धेन नाशत्वेन हेतुतायाः क्लृप्तत्वात्,संस्कारोत्पत्तिक्षणे च तादृशसम्बन्धेन तत्र नाशरूपकारणविरहात्, नापि संस्कारोत्पत्तितृतीयक्षणे, तदव्यवहितपूर्वक्षणे स्मरणरूपकारणस्याभावात्। अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वमते तस्यास्तृतीयक्षण एव संस्कारोत्पत्त्या न तादृश(१)स्मरणजन्यसंस्कारस्य तादृशस्मरणचतुर्थक्षणे नाशप्रसङ्गः, दर्शितप्रत्यासत्त्या नाशरूपकारणस्य तृतीयक्षणेऽसत्त्वात्। कालादिजन्यसंस्कारनाशे व्यभिचारवारणाय स्वसामानाधिकरण्यस्वपूर्वत्वकालिकविशेषणतैतत्त्रितयसम्बन्धेन संस्कारे तादृशस्मृतिवैशिष्ट्यं तदीयकार्य्यतावच्छेदककोटौ निवेशनीयम्। कालिकविशेषणतानिवेशात् कालादिजन्यसंस्कारनाशे न व्यभिचारः। कालाद्रोगाद्वा संस्कारनाश इत्यादिप्रवादे कालरोगयोस्तु तत्तद्व्यक्तिनैव नाशकता तत्तद्व्यक्तित्वेनैव च संस्कारे तन्नाश्यतोपगमात्। तन्नाश्यतावच्छेदकतया जातिविशेषकल्पनन्तु न सम्यक् विपरीतज्ञाननाश्यतावच्छेदकतयापि तुल्ययुक्त्या जातिविशेषसिद्धेरावश्यकतया उभयनाश्यसमूहालम्बनसंस्कारे जातिसङ्करप्रसङ्गात्। घटपटादिगोचरसमूहालम्बनसंस्कारस्य च न केवलघटादिस्मरणेन नाशापत्तिसम्भवः, तन्नाशे पटादिस्मरणस्यापि हेतुतया तादृशकारणविरहेण सामग्रीविरहात्। न च पटादिस्मरणं विनापि घटादिस्मरणेन स्वजन्यतावच्छेदकावच्छिन्नस्य केवलघटादिगोचरसंस्कारनाशस्य जननात् समूहालम्बनसंस्कारे घटादिस्मरणात् तज्जन्यतावच्छेदकावच्छिन्नोत्पत्तिर्दुर्वारेति वाच्यम्। घटत्वादिविशिष्टघटादिमात्रविषयकसंस्कारनाशं प्रति तादृशसंस्कारत्वेनापि प्रतियोगिनस्तादात्म्यप्रत्यासत्त्या हेतुत्वात्, समूहालम्बनसंस्कारे तादृशकारणविरहेण केवलघटादिगोचरसंस्कारनाशकसामग्रीविरहादिति।

अथवा प्रतियोगितासम्बन्धेन नाशं प्रति स्वावृत्तिविषयतासम्ब-

(१) तादृशेति, अपेक्षाबुद्ध्यात्मकेत्यर्थः। एवमग्रेऽपि।

न्धेन स्वनिष्ठभेदप्रतियोगितावच्छेदकविषयतासम्बन्धेन वा न्यूनविषयकस्मरणस्य स्मृतित्वेन प्रतिबन्धकता कल्प्यते । यत्र च प्रत्येकघटादिगोचरसंस्काराभ्यां क्रमेण स्मृतिर्जन्यते तत्र घटस्मरणविनाशे सत्येव पटस्मरणेन पटसंस्कारो नाश्यते । यत्र च तदुत्तरमपि न कस्यापि स्मरणं तत्र तदुत्तरभावीतरस्मरणाभावकालीनपटस्मरणेन कालविशेषेण वा पटसंस्कारो नाश्यते, तदितरस्मरणकालीनपटस्मरणं प्रति प्रतिबन्धकस्य समवहितत्वात् ।

अथवा प्रतियोगितया संस्कारनाशं प्रति स्मृतित्वेनैव हेतुता तत्र स्वावृत्तिविषयताशून्यत्वं कारणस्य प्रत्यासत्तिः, अतो न्यूनविषयकस्मरणात् न संस्कारनाशापत्तिः ।

यद्वा आधेयतासम्बन्धावच्छिन्नप्रतियोगिताकस्मरणाभावविशिष्टत्वेन संस्कारनाशं प्रति प्रतिबन्धकता स्वीक्रियते, तत्र प्रतिबन्धकस्य विशेषणताविशेषः प्रतिबध्यस्य च प्रतियोगित्वं संसर्गः । आधेयता च स्वसमानविषयताकत्वसम्बन्धेन । आधेयतासम्बन्धेनावच्छिन्नप्रतियोगिताकस्मरणाभाव एव वा स्वाश्रयविषयतावत्त्वसम्बन्धेन प्रतिबन्धकः । तत्संस्कारविषययावद्विषयकस्मरणदशायामेव प्रतिबन्धकाभावस्तादृशसंस्कारे वर्तते, न तु तदीययत्किञ्चित्स्मरणदशायां स्मरणाभावविशिष्टायाः विषयतायाः स्वाश्रयविषयतावत्त्वसम्बन्धेन स्मरणाभावस्य वा संस्कारे सत्त्वात् । एवं सति स्मरणस्य नाशकत्वेनैव प्रस्थितमिति चेत्, नाशकत्वं हि नाशनिर्वाहकत्वं तच्च प्रतिबन्धकताया अभावेऽपि स्मरणेऽक्षतमेव । एतेन–घटपटादिगोचरस्मरणानां जातिविशेष एव नाश्यतावच्छेदकः विशयिताविशेषावच्छिन्नसंस्कारत्वापेक्षया लाघवात्, तत्पुरस्कारेणैव च प्रतियोगिनां तज्जातीयसंस्कारनाशे हेतुता यदि सामानाधिकरण्यं कारणतावच्छेदकप्रत्यासत्तिः स्यात् । जनकतायाः प्रत्यासत्तित्वे च पटादिस्मारकसंस्कारस्य घटादिस्मरणजनकताविरहादेव तन्नाशापत्त्यसम्भवात् प्रतियोगिनां तेन रूपेण हेतुता न कल्प्यते, किन्तु स्मृतिरूपकारणबलात् तज्जनकशरीरादावपि प्रतियोगितासम्बन्धेन संस्कारनाशापत्तिवारणाय सामान्यतः संस्कारनाशं प्रति संस्कारत्वेनैव हेतुता कल्प्यते, समूहालम्बनस्थले नानासंस्कारा एव कल्प्यन्ते तत्कल्पनागौरवस्य फलमुखत्वेनादोषत्वात् इति संस्कारो निर्विषयकः—इति परास्तम् । संस्कारस्य निर्विषयकत्वे घटपटादिस्मृतीनां विषयविशेषान् निवेश्यानन्तनाशककल्पने गौरवात्, सविषयकत्वे तु उक्तरीत्यैकप्रतिबध्यप्रतिबन्धकभावकल्पनयैव निर्वाहात् । नच अन्नविषयकैकयू-

पुरुषीयस्मरणदशायां पुरुषान्तरीयसंस्कारनाशवारणाय तत्पुरुषीयसंस्कारनाशं प्रति तत्पुरुषीयस्मरणाभावस्यैव प्रतिबन्धकतया वाच्यतया तन्मते पुरुषभेदेनानन्तप्रतिबध्यप्रतिबन्धकभावकल्पनात् गौरवमिति वाच्यम्। पुरुषापेक्षया विषयाणां बहुतरतया एतन्मते लाघवानपायादिति वदन्ति।

अत्रेदं चिन्त्यते स्मरणस्य संस्कारनाशकत्वमेवाप्रामाणिकं स्मरणान्तरमपि तज्जन्यसंस्कारेण स्मरणजननात् प्राचीनसंस्कारसत्त्वे बाधकाभावात्। अथैवं तादृशसंस्कारस्य मुक्तिपर्य्यन्तमवस्थानप्रसङ्ग इति चेन्, न, भवन्मतेऽपि चरमस्मरणजन्यसंस्कारस्य तत्प्रसङ्गो दुर्वारः। यदि च तस्य काल एव नाशकः, तदा प्राचीनस्यापि स एव तथाऽस्तु। न च कालस्यानुगतरूपेण नाशकत्वासम्भवात् तत्संस्कारनाशं प्रति तद्व्यक्तित्वेन नाशकता वाच्या, इत्थञ्चागत्या चरमस्मृतिजन्यसंस्कारनाशं प्रति तस्या हेतुत्वोपगमेऽपि प्राचीनसंस्कारनाशं प्रति तद्रूपया हेतुत्वं न कल्प्यते दर्शितानुगतनाश्यनाशकभावकल्पनयैव उपपत्तेरिति वाच्यम्। संस्कारं प्रति तन्मतेऽनुभवत्वेनैव कारणताया वक्तव्यतया स्मृत्या संस्काराजननात् चरमस्मृतिजन्यसंस्कारनाशनिर्वाहकत्वेन परानुमतकारणत एवानुभवजन्यसंस्कारनाशनिर्वाहेण कारणान्तरकल्पनाविरहात्। अनुभवत्वजातौ प्रमाणान्तरविरहेऽपि स्मृतिजन्यानन्तसंस्कारतन्नाशतन्निर्वाहककारणताकल्पनापेक्षया संस्कारकारणतावच्छेदकतयाऽनुभवत्वकल्पनस्यैवोचितत्वात्। अनुभवत्वस्य च सन्दिग्धव्यभिचारकत्वं यत्कारणतानवच्छेदकत्वे बीजमभिहितम्, तदप्यकिञ्चित्करम्, लाघवसम्भवे तादृशस्यापि कारणतावच्छेदकत्वात्। (१)( न च स्मृतिजन्यसंस्कारघटितगौरवम्, तादृशसंस्कारसिद्ध्यधीनस्यैकजातिकल्पनायां एव न्याय्यत्वात्, निश्चयतया तादृशसंस्कारसिद्धेः प्राग् भाविनि ज्ञानत्वेन कारणताग्रहो विरोधीति तेन रूपेण कारणत्वं निष्प्रत्यूहमेव, कारणतावच्छेदकतयाऽनुभवत्वजातिसिद्धिस्तादृशसंस्कारसिद्धेः प्राक् न सम्भवति कारणताया अवच्छिन्नत्वग्राहकप्रमाणस्य ज्ञानत्वावच्छिन्नत्वमादायैव चरितार्थत्वात् तादृशसंस्कारसिद्ध्यधीननिश्चयविषयगोचरस्य तदानीमनुपस्थितत्वेन ज्ञानत्वस्यावच्छेदकत्वनिरासासम्भवात्।) न च स्मृतिजन्यसंस्कारसिद्धौ व्यभिचारनिर्णयेन ज्ञानत्वन्यूनवृत्तिधर्मस्य कारणतानवच्छेदकत्वनिश्चयात् कारणतावच्छेदकतयाऽनुभवत्व-

(१)( ) एतच्चिह्नितः पाठोऽधिक इव प्रतिभाति।

सिद्धेरसम्भव इति वाच्यम्। स्मरणाव्यवहितोत्तरक्षणे संस्कारोत्पत्तिसन्देहदशायां तादृशक्षणं पक्षीकृत्य कालत्वादिहेतुना संस्कारोत्पत्तितदभावान्यतरत्वावच्छिन्नसाधने लाघवादन्यत्र क्लृप्तस्य तदभावस्यैव विशिष्यसिद्धया तादृशाभावप्रयोजकतया तदव्यवहितप्राक्क्षणे यत्किञ्चित्संस्कारत्वावच्छिन्नाभावसिद्धेः, तादृशकारणत्वेऽनुभवत्वेतरधर्मावच्छिन्नत्वबाधसहकृतेन अवच्छिन्नत्वग्राहकमानेन स्मृतिव्यावृत्तधर्मावच्छिन्नत्वसिद्धेर्निष्प्रत्यूहत्वात्, तादृशधर्मस्य लाघवाज्जातिरूपस्यैव कारणतावच्छेदकतया सिद्धेः लघुधर्मानुपस्थितिकालीनस्यैव तत्समनियतगुरुधर्मे कारणतावच्छेदकत्वग्रहस्य प्रामाण्यं कल्प्यते अतो न ज्ञानत्वेन कारणताग्रहः। यदि च बाधनिश्चयादिप्रतिबध्यतावच्छेदकतया सिद्धेन परोक्षज्ञानवृत्तिना स्मृतिसाधारणपरोक्षत्वजातिविशेषेण सङ्करात् अनुभवत्वजातिकल्पनं न सम्भवति, तदा स्मृत्यन्यज्ञानत्वमेव संस्कारजनकतावच्छेदकम्, स्मृतिजन्यानामनन्तसंस्काराणां कल्पनापेक्षया तादृशगुरुधर्मस्यावच्छेदकताया एव कल्पयितुमुचितत्वात्, तादृशगौरवस्य ज्ञानत्वावच्छिन्नकारणताग्रहपूर्वमशक्यनिश्चयतया प्रथमं तेन रूपेण कारणताग्रहेऽपि दर्शितदिशा स्मरणानन्तरक्षणे संस्कारानुत्पत्तिसिद्धौ तदुपपादकतया स्मृत्यन्यत्वस्याधिकस्य गृहीतकारणतायामवच्छेदकत्वं कल्प्यते। ध्वंसं प्रति केवलेन जन्यत्वेन हेतुताकल्पने ध्वंसानामनन्तध्वंसकल्पनागौरवेण हेतुतायां भावत्वस्यावच्छेदकतावत्। संस्कारं प्रति स्मृतित्वेन प्रतिबन्धकत्वमेव कल्पनीयम्, ध्वंसम्प्रति प्रतियोगिमात्रस्य हेतुत्वे घटादीनां द्वितीयक्षणे विनाशकल्पनप्रयुक्तगौरवात् लाघवानुरोधेन द्रव्यविनाशे।असमवायिकारणनाशादिहेतुतावत्, अन्यथा क्षणभङ्गस्य दुर्वारतापातात्। तादृशयुक्तौ च टीकाकारानुयायिभिः क्रियासंयोगघटितपरस्परविजातीयसंयोगद्वयसामग्रीसम्वलनस्थलवत्प्रतिबन्धकताद्वयञ्च कल्प्यते, अन्यथा अनन्तसंयोगव्यक्तिकल्पनाधिक्यात्॥

अथ स्मृतेः संस्कारप्रतिबन्धकत्वे "स्मृतीनां स्वजन्यसंस्कारव्यक्तिविरोधिनीनामसद्भावादिति" टीकाकारलिखनविरोध इति चेत्, का क्षतिः? तदनुरोधेन निर्युक्तिकपक्षालम्बनानौचित्यात्। ननु व्यक्तिकल्पनागौरवभयेनातिरिक्तकार्यकारणभावोपगमे प्राथमिकघटाद्यनुभवजन्यसंस्कारादेव द्वितीयादितदनुभवोत्तरमपि तत्स्मरणोत्पत्तौ द्वितीयादितदनुभवजन्यसंस्कारव्यक्तीनामनन्तानां कल्पनामपेक्ष्य लाघवेन संस्कारं प्रति संस्कारस्य प्रतिबन्धकत्वं कल्प्येत इति चेत्। कल्प्यत एव। एवं

सति स्मृतित्वेन संस्कारं प्रति प्रतिबन्धकताकल्पनमनुचितमिति चेत्, अनर्थकमेव। एवं परोक्षत्वजात्यनङ्गीकारपक्षे संस्कारकारणतावच्छेदकतया अनुभवत्वजातिकल्पनमपि हेयमेव, ज्ञानत्वेन कारणत्वेऽपि अनुभवजन्यसंस्काररूपप्रतिबन्धकवशेन स्मृत्या संस्कारस्याजनयितव्यत्वात्।

अथ संस्कारं प्रति संस्कारत्वेन सामान्यतः प्रतिबन्धकत्वं न सम्भवति, घटज्ञानजन्यसंस्कारसत्त्वेऽपि पटज्ञानेन संस्कारजननात् इति घटादिविशेष्यकघटत्वादिप्रकारकज्ञानजन्यसंस्कारं प्रति तादृशसंस्कारस्य प्रतिबन्धकता वाच्या, तदपेक्षया लाघवेन घटादिविशेष्यकघटत्वादिप्रकारकसंस्कारं प्रति तादृशसंस्कारत्वेन प्रतिबन्धकतायाः कल्पयितुमुचितत्वात् इति संस्कारस्य सविषयकत्वं निष्प्रत्यूहमेव इति चेत्।

तादृशयुक्त्या सिध्यतु संस्कारस्य सविषयकत्वं न तत्रास्माकं विद्वेषः।

केचित्तु विपरीतज्ञाननाश्यतया भेदकतया संस्कारस्य सविषयकत्वसिद्धिः, तथाहि-विपरीतज्ञानं संस्कारं नाशयति, अत एवात्मज्ञानेन आत्मनि शरीराद्यभेदावगाहिना मिथ्याज्ञानेन जन्यः संस्कारो नाश्यते, तस्य भूतलादिविशेष्यकघटाद्यभावप्रकारकनिश्चयत्वेन भूतलादिविशेष्यकघटादिप्रकारकज्ञानजन्यसंस्कारनाशत्वावच्छिन्नं प्रति हेतुत्वे कार्यतावच्छेदकगौरवात्। नच भूतलादिविशेष्यकघटादिप्रकारकसंस्कारनाशं प्रति हेतुताकल्पने विपरीतज्ञानं विनापि समानाकारकस्मरणेन रोगादिना वा संस्कारनाशात् व्यभिचार इति नानुगतधर्मस्य नाश्यतावच्छेदकत्वसम्भवः, तत्तद्व्यक्तित्वस्य च तथात्वे न विषयतान्तर्भावः प्रयोजनविरहात् इति कथं नाश्यतावच्छेदकतया विषयतासिद्धिरिति वाच्यम्। कालादिनाश्यसंस्कारवृत्तिजातिविशेषस्यैव नाश्यतावच्छेदकत्वोपगमात् कालादीनामनुगतरूपेण नाशकत्वासम्भवात् स्मरणस्य संस्कारनाशताया निराकृतत्वात् नाशकान्तरनाश्यतावच्छेदकजातेरसम्भवेन सङ्करानवकाशात्।

अथ यादृशविपरीतज्ञानं यादृशज्ञानविरोधि तादृशज्ञानजन्य एव संस्कारस्तादृशविपरीतज्ञानेन नाश्यते, दोषविशेषज्ञानजन्यमिथ्याज्ञानं प्रति अविरोधिना औपनायिकेन शाब्देन वा संसारिणामात्मतत्त्वज्ञानेन तज्जन्याया वासनाया न विनाशः, एवञ्च घटादिप्रकारकालौकिकचाक्षुषादिज्ञानजन्यसंस्कारनाशत्वावच्छिन्नं प्रति घटाभावादिप्रकारकलौकिकचाक्षुषादिनिश्चयत्वेन कारणता कल्पनीयेति तत्तद्विषयज्ञानजन्यत्वनिवेशस्यावश्यकतया कृतं संस्कारस्य सविषयकत्वेनेति चेत्।

एवमपि अतीन्द्रियप्रकारकज्ञानं प्रति विपरीतनिश्चयमात्रस्यैव प्रति-

बन्धकतया तादृशज्ञानजन्यसंस्कारस्य विपरीतज्ञाननाश्यतायां ज्ञानविशेषजन्यत्वनिवेशस्यानावश्यकतया तादृशज्ञाननाश्यतावच्छेदकतयैव संस्कारस्य सविषयकत्वसिद्धिरिति ।

अथ नानाधर्मप्रकारकसमूहालम्बनज्ञानजन्यसंस्कारस्य यत्किञ्चिदेकधर्माभावनिश्चयेन विनाशवारणाय तत्तद्व्यक्तित्वेन नाश्यनाशकभावो वाच्यः,तथा च कृतं संस्कारस्य सविषयतया, तत्तद्व्यक्तिनाशत्वस्य विपरीतज्ञानजन्यतावच्छेदकत्वेऽपि सामानाधिकरण्यरूपकारणतावच्छेदकप्रत्यासत्त्या विपरीतज्ञानस्य संस्कारान्तरेऽपि सत्त्वेन तत्तत्संस्कारनाशं प्रतितत्तत्संस्कारत्वेन तादात्म्यप्रत्यासत्त्या हेतुताया आवश्यकत्वे विपरीतज्ञानस्यानुगतधर्मावच्छिन्नं प्रत्यपि कारणत्वं न सम्भवति। न च समूहालम्बनानात्मकसंस्कारव्यक्तीनामेव विपरीतज्ञानेन फलजनने सहकारितामुपगम्यातिव्याप्तिवारणसम्भव इति वाच्यम्। यादृशसमूहालम्बनसंस्कारः विपरीतज्ञानेन नाशयिष्यते तादृशसंस्कारव्यक्तेर्विपरीतज्ञानसहकारिताया आवश्यकतया पूर्वोत्पन्नेन यत्किञ्चिदेकधर्माभावनिश्चयेन तन्नाशस्य दुर्वारतया विपरीतज्ञानस्य तन्नाशं प्रति तत्तद्व्यक्तित्वेन हेतुताया आवश्यकत्वात् इति चेन्न ।

उक्तातिप्रसङ्गवारणाय समूहालम्बनसंस्कारनाशं प्रति विपरीतज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुत्वमुपगम्यते, समूहालम्बनानात्मकतद्धर्मप्रकारकविजातीयसंस्कारनाशं प्रति तु अनुगतरूपेण तद्धर्माभावप्रकारकज्ञानानां कारणत्वमुपगम्यते, विजातीयसंस्कारनाशं प्रति विजातीयसंस्कारत्वेनैव प्रतियोगिनो हेतुत्वमेकं कल्प्यते, विपरीतज्ञाननाश्यतावच्छेदिका च जातिः समूहालम्बनसंस्कारव्यावृत्ता इति नानुगतकारणतावच्छेदकावच्छिन्नबलात् यत्किञ्चिदेकधर्माभावनिश्चयदशायां समूहालम्बनसंस्कारनाशापत्तिः ।

वस्तुतः समूहालम्बनजन्यसंस्कारस्य यत्किञ्चित्विपरीतज्ञानेनाविनाशे तदुत्तरं विषयान्तरस्येव तस्यापि विषयस्य स्मरणापत्तिः, अतस्तन्नाशोऽवश्यमङ्गीकार्य्यः, तथाच तदुत्तरं विषयान्तरस्य स्मरणनिर्वाहायागत्या तत्र नानासंस्कारा एव कल्पनीयाः, तथाच न कुत्रापि तत्तद्व्यक्तित्वेन विपरीतज्ञानव्यक्तीनां नाशकता ।

अथैवं नाशकतावच्छेदकलाघवाय विषयभेदेन विभिन्ना एव जातिविशेषास्तत्तद्विपरीतज्ञाननाश्यतावच्छेदकतया स्वीक्रियन्तां किं संस्कारस्य सविषयतयेति चेन्न ।

यादृशसमूहालम्बनोत्तरं तावत्पदार्थाभावविषयकं समूहालम्बना-

त्मकमेव विपरीतज्ञानं जातं नतु अनन्तरं तावदन्तर्गतयत्किञ्चिदेकाभावज्ञानं, तत्र नानासंस्कारानभ्युपगमे क्षतिविरहेण लाघवात् एकसंस्कारस्यैव कल्पनात् तादृशसंस्कारे नानाविपरीतज्ञाननाश्यतावच्छेदकजातीनां सङ्करप्रसङ्गेन नानाजातिकल्पनासम्भवात् नाश्यतावच्छेदकलाघवेन उपदर्शितस्थले नानासंस्कारकल्पनाया अनुचितत्वादिति ।

वस्तुतः संस्कारस्य निर्विषयकत्वे तन्नाशे विषयभेदेन विपरीतज्ञानहेतुताभेदस्यावश्यकतयाऽनन्तकारणताकल्पनप्रसङ्गः, संस्कारस्य सविषयकत्वे च प्रतियोगितासम्बन्धेन संस्कारनाशं प्रति स्वीयाभावविषयतानिरूपितप्रतियोगित्वसंसर्गावच्छिन्नप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितस्वीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यताकत्वस्वसामानाधिकरण्योभयसम्बन्धेनाभावनिश्चयत्वेन विषयविशेषमनिवेश्यैव कार्यकारणभावकल्पनयैवोपपत्तेस्तद्धर्मावच्छिन्नविशेष्यताकतद्धर्मावच्छिन्नप्रकारताकसंस्कार एव तद्धर्मावच्छिन्नविशेष्यताकतद्धर्मावच्छिन्नाभावनिश्चयस्योक्तसम्बन्धेन सत्त्वादतिप्रसङ्गविरहात् । नचैवं वायुर्गुरुत्वाभाववान् घटश्च वायुत्वाभाववान् इति निश्चयात् घटो गुरुत्ववान् इत्यादिज्ञानजन्यसंस्कारनाशापत्तिः, तादृशसंस्कारस्य वायुत्वावच्छिन्नविशेष्यतानिरूपिततादृशनिश्चयीयाभावविषयतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकगुरुत्वत्वावच्छिन्नप्रकारतानिरूपितस्वीयविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यताकत्वादिति वाच्यम् । स्वीयविशेष्यताविशिष्टविशेष्यताकत्वस्यैव प्रथमसम्बन्धतया निवेशनीयत्वात् । विशेष्यतावैशिष्ट्यं च स्वावच्छेदकावच्छिन्नत्वस्वनिरूपिताभावप्रकारतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन वाच्यतया पूर्वकल्पस्य एकस्याभावात् उत्तरप्रकारद्वयमेव सम्यक् इति ध्येयम् ॥

इति स्मृतिसंस्कारवादः ॥

इति श्रीमहामहोपाध्याय श्रीहरिरामभट्टाचार्येण विरचितः स्मृतिसंस्कारवाद(११)वीचिः समाप्तः ॥

## स्मृतिनिश्चयहेतुतावाद(१२)वीचिः ।

घटगोचरस्मृतिं प्रति घटगोचरज्ञानत्वेन न हेतुता, घटनिर्विकल्पकादपि स्मरणापत्तेः । अवच्छिन्नविषयताशालिज्ञानत्वेन हेतुत्वं कल्पयित्वा तद्वारणेऽपि, द्रव्यत्वेन घटज्ञानसत्त्वे घटत्वेन तत्स्मरणापत्तेः । न च घटत्वज्ञानत्वेन हेतुत्वकल्पनादेव न तादृशस्मरणापत्तिरिति वाच्यम् । घटत्वेन पटादिज्ञानस्य सत्त्वे तथापत्तिसम्भवात्, किन्तु घटत्वेन तद्घटस्मरणं प्रति घटत्वेन तद्घटज्ञानत्वेन हेतुता, स्वजन्यसंस्कारः प्रत्यासत्तिः । एवं तथाविधसंस्कारत्वेन तथाविधस्मृतित्वावच्छिन्नं प्रति व्यापारीभूतसंस्कारस्य तथाविधसंस्कारं प्रति च तथाविधज्ञानत्वेन हेतुता बोध्या ।

अथोपेक्षात्मकज्ञानात् स्मरणापत्तिः । नचोपेक्षान्यत्वेन हेतुत्वकल्पनान्नापत्तिरिति वाच्यम् । उपेक्षान्यत्वस्य दुर्वचत्वात् । न चोपेक्षात्वं जातिः, चाक्षुषत्वादिना सङ्करात् । नापि संस्काराजनकत्वम्, उपेक्षाज्ञानव्यावृत्तसंस्कारजनकतावच्छेदकधर्माभावात् । न च ज्ञाननिष्ठं तत्तद्व्यक्तित्वं संस्कारजनकतावच्छेदकं तथाच जनकतासम्बन्धेन संस्कारवत्त्वेनैव हेतुत्वं पर्यवसितमिति वाच्यम् । अननुगतजनकताकूटघटितत्वेन कारणतावच्छेदकस्याननुगमात् । अत्र स्मृतिं प्रत्येव ज्ञानस्य तत्तद्व्यक्तित्वेन हेतुत्वम्, जनकतासम्बन्धेन स्मृतिमत्त्वेनैव संस्कारं प्रति हेतुतेति विनिगमनाविरहोऽपि प्रसक्तः । एवञ्च संस्कारं प्रति स्मृतिजनकत्वेन जनकत्वे ज्ञानस्य स्मृतिजनकताज्ञानाधीनं संस्कारजनकताज्ञानं संस्कारजनकताज्ञानाधीनमेव स्मृतिजनकताज्ञानमित्यन्योन्याश्रयप्रसङ्ग इति चेत् ।

अनायत्या प्रातिस्विकरूपेणैवोपेक्षात्मकज्ञानव्यक्तीनां भेदकूटः कारणतावच्छेदककोटौ निवेश्यते ॥

यत्तु चाक्षुषत्वादिव्याप्या नानैवोपेक्षात्वजातयः, तदवच्छिन्नप्रतियोगिकाश्चाल्पीयांसो भेदा जनकतावच्छेदककोटौ निवेश्यन्ते । न च जातेरांशिकत्वभिया आंशिकोपेक्षाज्ञाने तादृशजात्यस्वीकारे आंशिकोपेक्षाज्ञानात्स्मरणापत्तिरिति वाच्यम् । आंशिकोपेक्षाज्ञानानामनन्तव्यक्तीनां प्रातिस्विकरूपेणैव भेदस्य निवेशात् । एवमपि सर्वांशोपेक्षाज्ञानसहस्राणां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदसहस्राणामनिवेशनीयतया लाघवादिति ।

तत्र श्रद्दधीमहि । तथाविधजातीनामनुगतानतिप्रसक्तनियामकाभा-

वात्, तुल्ययुक्त्याऽऽहार्यत्वादेरपि जातित्वापत्तेश्च । उपेक्षाज्ञानव्यक्तीनां भेदाः संस्कारजनकतावच्छेदककोटावेव निवेश्याः, नतु ज्ञाननिष्ठस्मृतिजनकतावच्छेदककोटौ, तत्र संस्कारविरहेणैव स्मृतिविरहोपपत्तेः । न च विनिगमनाविरहः,संस्कारजनकतावच्छेदककोटौ तद्भेदानिवेशे सर्वांशे उपेक्षात्मकज्ञानेभ्योऽप्रामाणिकानन्तसंस्कारकल्पनापत्तेः । आंशिकोपेक्षाज्ञानभेदास्तु स्मृतिजनकतावच्छेदककोटावेव निवेश्याः । न च तत्र विनिगमनाविरहः, आंशिकोपेक्षाज्ञानादन्यांशे स्मरणोदयात् तदनुरोधेन तद्धेतुसंस्कारस्यावश्यकत्वात्, संस्कारजनकतायामांशिकोपेक्षात्मकज्ञानव्यक्तिभेदानिवेशे एतद्विषयकत्वरूपधर्ममात्रकल्पनम् ,इतरथा तु धर्मिकल्पनमिति धर्मिकल्पनातो धर्मकल्पना लघीयसीत्यस्यैव विनिगमकत्वात्। एतेन-ज्ञानस्मरणयोर्ज्ञानत्वस्मरणत्वाभ्यां सामान्यत एव कार्यकारणभावे विषयनिवेशो न क्रियते, संस्कारस्मरणयोस्तु न तथा, तत्र विषयविशेषमन्तर्भाव्यैव तस्य वक्तव्यत्वात् । न चात्र विनिगमनाविरह इति वाच्यम् । संस्कारस्मरणयोः कार्यकारणभावे तदनिवेशे घटगोचरोपेक्षाज्ञानसत्त्वे पटसंस्कारसत्त्वे घटस्मरणापत्तेः। न च संस्काररूपव्यापारसम्बन्धेन घटज्ञानाभावान्नापत्तिरिति वाच्यम् । घटांशे उपेक्षात्मकात् पटांशेऽपेक्षात्मकात् ज्ञानात् संस्कारसत्त्वे घटस्मरणापत्तेः-इत्येषा फक्किका परास्ता, आंशिकोपेक्षाभेदानां स्मृतिजनकतायामेव निवेशात् घटांशे उपेक्षाज्ञानादपि घटगोचरसंस्कारोदयात् तदनन्तरं घटस्मरणापत्तेः तदन्यपटज्ञानसत्त्वादिति घटस्मृतिं प्रति घटांशे उपेक्षान्यतद्गोचरज्ञानत्वेन हेतुताया आवश्यकत्वात् । संस्कारस्मरणयोः कार्यकारणभावे तु विषयानिवेशेऽपि क्षत्यभावात् । तत्र स्मृतित्वसंस्कारत्वाभ्यामेव कार्यकारणभावः पटगोचरसंस्कारसत्त्वे घटांशे उपेक्षान्यघटज्ञानस्य संस्कारसम्बन्धेनासत्त्वादेव नापत्तिः । यथाच संस्कारस्य सविषयकत्वव्यवस्थितिस्तथाग्रे विवेचयिष्यते । न चैवमनुमितिलक्षणस्य विशिष्टस्मरणेऽतिव्याप्तिसम्पादकस्य संस्कारानुपपत्त्यैवेत्यादिदीधितिग्रन्थस्यासंगतिः स्मृतिजनकतायामांशिकोपेक्षान्यत्वनिवेशात अनुमितिजनकतायां तदनिवेशादिति वाच्यम् । तावता क्षतेरभावात् । वस्तुतस्तु अग्रे तत्त्वगमनप्रकारो दर्शयिष्यते ॥

एवं भूतलत्वधर्मितावच्छेदककतद्भूतलविशेष्यकघटत्वावच्छिन्नतद्घटप्रकारकस्मृतिं प्रति तथाविधनिश्चयत्वेन हेतुतेति न संशयात्स्मरणापत्तिः ।

अथ संस्कारजनकतावच्छेदककोटावेव निश्चयत्वं निवेश्यं, तत प्

स्मरणवारणसम्भवे किं स्मृतिजनकतायां तन्निवेशेन। न च विनिगमनाविरहः, संशयादपि धर्मिणः विशकलितकोट्योरपि स्मरणोदयेन संस्कारकल्पनायास्तत्रावश्यकत्वादिति वाच्यम्। एवंसति संस्कारजनकतावच्छेदके तदनिवेशे संशयजन्यसंस्कारे विशिष्टविषयताकल्पन एव गौरवात्। न चोपेक्षाभेदैः सह विशेषणविशेष्यभावे विनिगमनाविरह इति स्मृतिजनकतायामेव तन्निवेश इति वाच्यम्। तथाविधांशिकोपेक्षाभेदैः सह तत्रापि तत्प्रसङ्गादिति।

मैवम्, स्मृतिजनकतावच्छेदककोटौ निश्चयत्वानिवेशे संशयानन्तरं स्मृतिवारणासम्भवात्। न च संस्काराभावादेव न स्मृतिरिति वाच्यम्। धर्म्यंश एव संस्कारसत्त्वात्। न च भूतलत्वावच्छिन्नविशेष्यतानिरूपितघटप्रकारताशालिसंस्कारविरहान्न तथाविधस्मरणमिति वाच्यम्। तत्संस्कारस्य हेतुत्वाकल्पनात् स्मृतिं प्रति संस्कारत्वेनैव हेतुत्वात्, तदवच्छिन्नस्य धर्मिगोचरसंस्कारस्यैव सत्त्वात् तादृशापत्तिसम्भवात्, तस्मात्स्मृतिजनकतावच्छेदककोटौ निश्चयत्वनिवेशनमावश्यकमेवेति।

अथोपेक्षान्यत्वं न स्मृतिजनकतावच्छेदकमपि तु उपेक्षात्मकज्ञानात्स्मृतिवारणाय संस्कारं प्रत्युपेक्षाज्ञानानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वमास्थीयते। न चोपेक्षात्मकज्ञानानन्तरमपेक्षात्मकज्ञानात्संस्कारानुदयप्रसङ्ग इति वाच्यम्। उपेक्षात्मकज्ञाननाशानन्तरमेव तत्र संस्कारोदयात्। नच यत्रादावुपेक्षात्मकं ज्ञानं तदनन्तरमपेक्षात्मकं तद्द्वितीयक्षणे च पुनरुपेक्षान्तरं तत्र संस्कारानुदयप्रसङ्ग इति वाच्यम्। तदुपेक्षात्मकव्यक्तेः प्रतिबन्धकत्वाकल्पने क्षतिविरहात्। न चाननुगम इत्याशङ्कनीयम्। भवन्मते विशेष्यविशेषणभावे विनिगमनाविरहेण महागौरवात्। इत्थं चानुमितिलक्षणे विशिष्टस्मरणेऽतिव्याप्तिरपि सङ्गच्छते घटाभावप्रकारताऽनवच्छिन्नघटप्रकारतावच्छिन्नभूतलत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन भूतलत्वावच्छिन्नधर्मिकघटप्रकारकस्मृतिं प्रति हेतुतेति न कश्चिद्दोष इत्याहुः। तद्दूषितमन्यत्र।

वस्तुतस्तु संस्कारजनकतायामेव निश्चयत्वनिवेशान्न काप्यनुपपत्तिः, तथाहि—घटत्वातिरिक्तधर्मानवच्छिन्नघटत्वावच्छिन्नप्रकारतावच्छिन्नभूतलत्वावच्छिन्नविशेष्यताशालिघटत्वावच्छिन्नाभावाप्रकारकज्ञानत्वेन हेतुता कल्प्यते, नीलघटवदित्याकारकज्ञानान्नीलघटवदित्याकारक एव संस्कारो जायते नतु कदाचिदपि घटवदित्याकारकः संस्कारः, स्मृतिहेतुतायां तु पर्याप्तिनिवेशान्नीलांशे उपेक्षात्मकज्ञानदशायां न घटवदितिस्मरणमिति न काप्यनुपपत्तिरिति। नच नीलघटवदित्याकारकज्ञानान्नी-

लांशे उपेक्षात्मकाद्घटवदितिसंस्कारोदयात् कथं संस्कारजनकतायां पर्याप्तिनिवेशः स्यात्, तत्र तु नीलघटवदिति संस्कारो नोत्पद्यते नीलसंस्कारं प्रति नीलांशे उपेक्षाज्ञानस्य प्रतिबन्धकत्वकल्पनात्, अन्यथा तदनन्तरं नीलस्मरणापत्तेरिति वाच्यम् । नीलस्मरणं प्रति संस्कारस्य जनकतायां तत्संस्कारभेदनिवेशादेव तादृशस्मरणवारणे तज्ज्ञानस्य नीलसंस्कारं प्रति प्रतिबन्धकत्वाकल्पनात् तदानीं नीलघटवदित्याकारकसंस्कारस्यैवोपपत्तेरिति सम्यगालोचयामः ।

अथ निश्चयत्वं संशयाकारस्मरणवारणायैव निवेश्यते, तथा च घटाभाववत्तास्मरणं प्रति घटाभावप्रकारकज्ञानस्य हेतुतायां निश्चयत्वनिवेशेनैव संशयाकारस्मरणवारणं शक्यम्, उभयकोटिकज्ञानस्यैव संशयतया घटवन्नवेति संशयस्य घटाभावानिश्चयात्मकतया ततो घटाभावस्मरणानुदयेनैव संशयाकारस्मरणासम्भवादिति घटवत्ताज्ञानहेतुतायां निश्चयत्वनिवेशो निरर्थकः, इत्थं च विशिष्टस्मरणेऽतिव्याप्तिरपि न सङ्गच्छते, उक्तयुक्त्या वह्निव्याप्यवत्तास्मरणे तज्ज्ञानहेतुतायामपि निश्चयत्वानिवेशात् । नच संशयादेककोटिकस्मरणमपि न जायेत इति वाच्यम् । तत्र प्रमाणाभावेनेष्टापत्तेः । नच नास्त्येतादृशानुभवविरोधो येन गुरुणा निश्चयत्वेन न हेतुत्वमभ्युपेयेत इति दीधितिकृतोऽपि निश्चयत्वनिवेशेन संशयाकारस्मरणवारणसम्भवे तत्रैव किं न निवेश्यत इति विनिगमनाभावात् उभयत्रैव निवेशः स्यादिति वाच्यम् । घटवत्तानिश्चयत्वस्य घटाभावत्वावच्छिन्नप्रकारताशून्यज्ञानत्वरूपस्य घटाभाववत्तानिश्चयत्वापेक्षया गुरुत्वात् तत्रैव निश्चयत्वस्य निवेशयितुमुचितत्वात् । वस्तुतस्तु न कुत्रापि निश्चयत्वनिवेशः, निश्चयत्वेन हेतुत्वेऽपि प्रत्येकनिश्चयजनितसंस्काराभ्यां नियमोद्बोधकसमवधानदशायां संशयापत्तिः, तद्वारणाय प्रकारान्तरानुधावने निश्चयत्वे हेतुत्वाभ्युपगमो विफल एवेति चेत्,

न, संशयाकारस्मरणवारणायैककोटिस्मरणसामग्र्या अपरकोटिस्मरणं प्रति प्रतिबन्धकताया आवश्यकत्वे संशयाकारज्ञानजन्यसंस्कारादपि संशयाकारस्मरणवारणादिति, संस्कारजनकतावच्छेदककोटौ निश्चयत्वानिवेशे संशयात्मकज्ञानात्संशयाकारसंस्कारोत्पत्तौ अननुगतकालादीनामपि तन्नाशकत्वं स्वीकार्यं संशयाकारस्मरणस्य कदाप्यनुदयात्, अन्यविधस्मरणस्यासमानप्रकारकत्वेन तन्नाशानिर्वाहादिति गौरवात्, संशयात्मकोपेक्षात्मकज्ञानादेकैककोट्युद्बोधकदशायामेकैककोटिस्मरणवारणाय तत्तज्ज्ञानानां प्रातिस्विकरूपेणानन्तभेदनिवेशे गौरवात्, अनुगतसंस्कार[illegible]निश्चयत्वनिवेशे लाघवाच्च । एतेन पू-

वौकफक्किकाऽपि निरस्ता। न चोपेक्षान्यत्वमपि अनुगतमेव निवेशयितुं शक्यते, प्रागेव दूषितत्वात्॥

ननु संस्कारे किं मानम्? अनुभवध्वंसस्य व्यापारत्वसम्भवात्। प्रतियोग्यभावयोरेकत्राजनकत्वप्रवादस्य प्रमाणाभावेनाश्रद्धेयत्वात्। न च अनुभवे स्मृतिप्रतिबन्धकत्वापत्तिः, कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकतापदार्थत्वादिति वाच्यम्। संसर्गाभावत्वावच्छिन्नाया अभावत्वावच्छिन्नाया वा जनकतायाः स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनावच्छेदको यो धर्मस्तदवच्छिन्नत्वस्य प्रतिबन्धकत्वपदार्थत्वात्, अत्र चाभावत्वेनाजनकत्वात्। न च ज्ञानद्वितीयक्षणजनितसंस्कारेण तृतीयक्षणे स्मरणोदयात् ध्वंसस्य व्यापारत्वासंभवात् फलस्य प्राक्काले अनुभवध्वंसाभावादिति वाच्यम्। तत्रापि क्षणविलम्बेनैव स्मरणाभ्युपगमादिति चेन्न।

संस्कारानभ्युपगमे उपेक्षात्मकज्ञानादपि स्मरणापत्तेः। न च स्मृतिं प्रति उपेक्षान्यज्ञानत्वेनैव हेतुत्वकल्पनान्नानुपपत्तिरिति वाच्यम्। गौरवात्। न च भवन्मते उपेक्षात्मकज्ञानात्संस्कारवारणाय तज्जनकतायामुपेक्षान्यत्वनिवेशस्यावश्यकत्वेन साम्यमिति किमन्तर्गडुना संस्कारेण, स्मृतिजनकतावच्छेदककोटौ वा तत्प्रवेशेनैव सर्वसामञ्जस्यमिति वाच्यम्। संस्कारं प्रति उपेक्षान्यज्ञानत्वेन हेतुताकल्पनस्योदीच्यत्वेन गौरवस्य फलमुखत्वात्। स्मृतिजनकतावच्छेदककोटिप्रविष्टांशिकोपेक्षाज्ञानभेदकूटेन सर्वांशोपेक्षात्मकज्ञानभेदकूटेन च सह विशेष्यविशेषणभावे विनिगमकाभावेन गौरवसम्पादकानामनिवेशे लाघवाच्च, सर्वांशोपेक्षाभेदानेव कारणतावच्छेदकीकृत्य संस्कारं प्रति ज्ञानस्य हेतुतायाः कल्पयितुमुचितत्वात्। एवं संस्कारस्वीकारे संस्कारं प्रति उपेक्षाज्ञानप्रतिबन्धकतयोपपत्तौ स्मृतिजनकतायामुपेक्षाभेदसहस्राणां विशेषणविशेष्यभावे विनिगमनाविरहेण गौरवसम्पादकानामनिवेशे लाघवाच्च। न च स्मृतिं प्रत्युपेक्षाज्ञानानां प्रतिबन्धकत्वं कल्प्यत इति वाच्यम्। कालान्तरे स्मरणापत्तेः। न च तद्ध्वंसानां प्रतिबन्धकत्वमिति वाच्यम्। यदा कदाचिज्ज्ञातोपेक्षाज्ञानानन्तरं तदनात्मकज्ञानोत्पत्तावपि स्मरणानुदयप्रसङ्गात् प्रकारान्तरानुसरणेऽतीवगौरवात्। एवं विपरीतज्ञानानन्तरोत्पन्नानुभवनाशात् स्मरणानुदयापत्तेः।

अथ भूतलत्वावच्छिन्नधर्मिकघटवत्तास्मृतिं प्रति भूतलत्वावच्छिन्नधर्मिकघटवत्ताज्ञानध्वंसाभावविशिष्टभूतलविशेष्यकघटाभावप्रकारकज्ञानध्वंसत्वेन प्रतिबन्धकत्वा, तादृशाभावश्च स्वप्रतियोगिविशिष्टस्वसा-

मानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकः स्वप्रागभावविशिष्ट-स्वसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताको वा ग्राह्यः, तेन विपरीतज्ञानोत्तरं ग्राह्याभावज्ञानानुदयेऽपि पूर्वज्ञानध्वंससत्त्वान्न स्मरणापत्तिः। अथवा विपरीतज्ञानध्वंसाभावविशिष्टग्राह्यज्ञानध्वंसस्य हेतुत्वेन न तदीयज्ञानोत्तरं स्मरणापत्तिः। विपरीतज्ञानध्वंसाभावश्च स्वप्रागभावविशिष्टस्वसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः अतो न विपरीतज्ञानोत्तरोत्पन्नानुभवनाशात्स्मरणानुपपत्तिरिति चेन्न।

गौरवात् तदपेक्षया संस्कारं स्वीकृत्य संस्कारनाशं प्रति विपरीतज्ञाने जनकत्वकल्पनस्यैव लाघवेनोचितत्वात्।

अथोद्बोधकानामनुगतरूपेणैव हेतुत्वकल्पनात् विपरीतज्ञानानन्तरं तादृशानुगतोद्बोधकसत्त्वे स्मरणापत्तिरिति वाच्यम्। तेषामपि व्यक्तिपौर्वापर्यनिर्वाहाय तत्तद्व्यक्तित्वेन हेतुत्वकल्पनाया आवश्यकत्वात्, विपरीतज्ञानोत्तरव्यक्तीनां च फलाभावेन हेतुत्वकल्पनाया अनावश्यकतयापत्त्यभावादिति चेत्।

मैवम्। तेषां तत्तद्व्यक्तित्वेन हेतुत्वकल्पनेऽपि सामान्यसामग्रीतः सामान्यधर्मावच्छिन्नापत्तेः। न च तत्तद्विशेषसामग्रीसहकृताया एव सामान्यसामग्र्याः फलजनकत्वान्न दोष इति वाच्यम्, अनन्ततत्तद्व्यक्तीनां प्रातिस्विकरूपेण सहकारित्वकल्पने गौरवात्, अन्यथोपेक्षात्मकज्ञानानन्तरमप्युद्बोधकविरहेणैव स्मरणवारणसम्भवे उपेक्षान्यत्वेनापि हेतुताया विलयप्रसङ्गात्, उक्तयुक्त्याऽनुभवादिहेतुताविलयापत्तिश्चेति वदन्ति॥

अथ संस्कारस्य सविषयत्वे किं मानम्? न च स्मृतिविषयतानियामकत्वेन तद्विषयतासिद्धिः, ज्ञानविषयतायास्तन्नियामकत्वात्। न च तादृशगुरुधर्मापेक्षया घटगोचरसंस्कारत्व एवावच्छेदकत्वस्योचितत्वात्संस्कारे सविषयतासिद्धिरिति वाच्यम्। लौकिकचाक्षुषजन्यसंस्कारस्यानुमानादिविपरीतज्ञानानाश्यतया ज्ञानविषयजन्यतायास्तत्रावश्यं निवेश्यत्वात्। न च स्मृतिनाश्यतावच्छेदकतया तत्सिद्धिः, घटज्ञानजन्यसंस्कारत्वस्य तथात्वे गौरवादिति वाच्यम्। विपरीतज्ञानजन्यसंस्कारादिनाशे व्यभिचारवारणाय स्वसामानाधिकरण्यविशिष्टकालिकविशेषणतासम्बन्धेन स्मरणादिविशिष्टसंस्कारनाशस्य जन्यतावच्छेदकताया आवश्यकत्वेनैव व्यभिचारवारणस्य विषयनिवेशनं विनाप्युपपत्तेः। न च माऽस्तु व्यभिचारः, एवमपि कदाचिद्घटज्ञानजन्यस्य संस्कारस्य नाशः कदाचित्तदजन्यस्यैवेति नियामकाभाव इति वाच्यम्। प्रतियोगितासम्-

त्वेन संस्कारनाशं प्रति जनकतासम्बन्धेन स्मरणत्वेन हेतुत्वाभ्युपगमात् घटज्ञानजन्यसंस्कारस्य पटस्मरणाजनकतया तत्र जनकतासम्बन्धेन स्मरणाभावान्नातिप्रसङ्ग इति चेन्न ।

ज्ञानजन्यतावच्छेदकतया संस्कारे विषयतासिद्धिः । तथाहि—संस्कारं प्रति ज्ञानस्य यदि विषयामिश्रितज्ञानत्वेन हेतुता, तदा उपेक्षात्मकज्ञानात् संस्कारापत्तिः, तद्वारणाय घटादिविषयकानन्तोपेक्षाभेदानामेकत्र निवेशे गौरवम्, परन्तु घटविषयकज्ञानत्वादिना जनकता, जन्यतावच्छेदकं च यदि संस्कारत्वं, तदा व्यभिचार इति घटविषयकसंस्कारत्वमेव तथेति तत्सिद्धिः । यदि चोपेक्षाज्ञानभेदानां कारणतावच्छेदककोटौ न निवेशः किन्तु तादृशज्ञानात् संस्कारवारणाय संस्कारं प्रति तेषां प्रतिबन्धकत्वकल्पनमेव समीचीनं, लाघवात्, तथा च संस्कारसविषयतायां युक्त्यभाव इति विभाव्यते, तदा आंशिकोपेक्षाज्ञानप्रतिबध्यतावच्छेदकतया संस्कारे सविषयतासिद्धिः, तथाहि—सर्वांशोपेक्षाज्ञानस्य प्रतिबध्यतावच्छेदकं संस्कारत्वं, तत्सत्त्वे कुत्राप्यंशे संस्कारानुदयात्—तद्वदांशिकोपेक्षाज्ञानस्य प्रतिबध्यतावच्छेदकं यदि घटादिसंस्कारत्वं तदा घस्यंशेऽपि संस्कारानुदयप्रसङ्ग इति तत्तद्विषयकसंस्कारं प्रति तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वं कल्प्यमिति संस्कारे सविषयतासिद्धिः । एवं संस्कारस्य सविषयतानभ्युपगमे घटांशे उपेक्षाज्ञानानन्तरं घटस्मरणापत्तिः व्यापारसम्बन्धेन घटज्ञानसत्त्वात् । न चोपेक्षान्यज्ञानस्यैव संस्कारसम्बन्धेन हेतुत्वोपगमान्नापत्तिरिति वाच्यम् । तथापि पटस्मरणादपि घटज्ञानजन्यसंस्कारनाशापत्तिः । न चोक्तरीत्या प्रतियोगितासम्बन्धेन संस्कारनाशं प्रति जनकतासम्बन्धेन स्मृतित्वेन हेतुत्वान्न दोष इति वाच्यम् । जनकतायाः स्वरूपयोग्यतारूपायाः प्रत्यासत्तित्वे घटज्ञानजन्यसंस्कारस्यापि संस्कारत्वेन निखिलस्मृतिस्वरूपयोग्यत्वात् । न च घटादिविषयकज्ञानजन्यसंस्कारत्वेनैव संस्कारस्य हेतुता न तु सामान्यतः संस्कारत्वेन हेतुतेति वाच्यम् । तदपेक्ष्य लाघवेन घटविषयकसंस्कारत्वेनैव तथात्वकल्पनाया औचित्यात्प्रकृतसिद्धिः । नापि फलोपधायकतायाः प्रत्यासत्तित्वम्, अननुगमात् । यदि च सामानाधिकरण्यमेव नाश्यतावच्छेदकप्रत्यासत्तिः, तथापि न निस्तारः तेन सम्बन्धेन पटस्मरणस्य घटज्ञानजन्यसंस्कारेऽपि सत्त्वात्तन्नाशापत्तेरवारणादेव तत्सिद्धिः । न च भवन्मते घटादिगोचरसंस्कारनाशत्वस्य जन्यतावच्छेदकत्वेऽपि तादृशधर्मावच्छिन्नसंस्कारनाशस्यैव पटसंस्कारे आपत्तिः कारणतावच्छेदकप्रत्यासत्त्या तत्कारणसत्त्वादिति वाच्यम् । तादृशसंस्कारनाशत्वावच्छिन्नं प्रति ता-

दाम्यप्रत्यासत्त्या तादृशसंस्कारत्वेन हेतुत्वकल्पनात्। न च सामाना-धिकरण्यस्य स्वरूपयोग्यताया वा प्रत्यासत्तित्वे स्मरणजन्यसंस्कारस्य क्षणिकत्वापत्तिः स्वजन्यसंस्कारे तादृशप्रत्यासत्तिभ्यां स्मरणसत्त्वात्, अत उपधायकतायाः प्रत्यासत्तित्वे तत्संस्कारनाशत्वं जन्यतावच्छेदकं वाच्यमिति कुतः संस्कारस्य सविषयतासिद्धिरिति वाच्यम्। क्षणिकसंस्काराभ्युपगमे क्षत्यभावात् तृतीयक्षणोत्पन्नसंस्कारादेव स्मरणनिर्वाहात्। अस्तु वाऽननुगतोपधायकतायाः प्रत्यासत्तित्वं तत्तत्संस्कारनाशत्वानां जन्यतावच्छेदकत्वं चापेक्ष्य लाघवाद्विनश्यदवस्थत्वेनैव संस्कारस्य हेतुत्वम्, विनश्यदवस्थत्वं च न स्वाश्रयनाशविशिष्टत्वम्, आश्रयस्यात्मनो नाशासम्भवात्, अपि तु स्वप्रागभावविशिष्टकालिकविशेषणतयाकृतिविशिष्टत्वमतो नापत्तिः स्वसामानाधिकरण्यावच्छिन्नस्वप्रागभावसम्बन्धाभावात्। वस्तुतस्तु शब्दादीनां क्षणिकतावारणाय प्रतियोगितासम्बन्धेन नाशत्वावच्छिन्नं प्रति स्ववृत्तिप्रतियोगिकत्वसम्बन्धेन नाशत्वेन हेतुताया आवश्यकत्वे तत एव सर्वत्र क्षणिकतावारणसम्भव इति। नच घटवद्भूतलमितिज्ञानजन्यसंस्कारनाशत्वावच्छिन्नं प्रति घटाभाववद्भूतलमिति निर्णयत्वेन हेतुत्वमतो न दोष इति वाच्यम्। जन्यत्वादिनिवेशे गौरवात्, लाघवात् लौकिकज्ञानाजन्य तद्विशेष्यकतत्प्रकारकसंस्कारनाशत्वावच्छिन्नं प्रति तद्विशेष्यकतदभावप्रकारकनिर्णयत्वेन हेतुत्वोपगमात्तदवच्छिन्नजन्यतावच्छेदकघटकतया संस्कारविषयतासिद्धिरिति। एवं संस्कारविषयतानभ्युपगमे घटस्मरणादिसामग्र्या उद्बोधकादिविशिष्टघटज्ञानजन्यसंस्कारत्वेनैव प्रतिबन्धकत्वमनुभवं प्रति कल्पनीयमिति गौरवम्, स्वमते घटविषयकसंस्कारत्वेन अतिलाघवात्। न च मन्मतेऽपि संस्कारसम्बन्धेन घटज्ञानत्वेन प्रतिबन्धकत्वान्न गौरवमिति वाच्यम्। संस्कारादिना घटादिस्मरणकाले ज्ञानरूपप्रतिबन्धकाभावसत्त्वेन प्रतिबध्यज्ञानापत्तिरिति स्मरणस्य घटगोचरस्मरणत्वेन हेतुता, जन्यतावच्छेदकं तु घटविषयकसंस्कारनाशत्वं प्रत्यासत्तिर्विचारितैव।

अथ स्मरणस्य संस्कारनाशकत्वे मानाभावः। स्मरणेनापि संस्कारजननात् स्मरणोत्तरमपि स्मरणोदयात्पूर्वं संस्कारसत्त्वेऽपि क्षतिविरहादिति चेन्न।

अनुभवानन्तरं यत्रोपेक्षात्मकस्मरणं तदनन्तरं स्मरणवारणाय तथात्वस्यावश्यकत्वात्।

अथ कालादिजन्यसंस्कारनाशे व्यभिचारः। कालाद्यजन्यत्वस्य नि-

वेशे तुल्ययुक्त्या तज्जन्यतावच्छेदककोटावपि स्मरणाजन्यत्वस्य निवेशेऽन्योन्याश्रयात्। नापि वैजात्यं तन्नाश्यतावच्छेदकं, विपरीतज्ञाननाश्यतावच्छेदकतयापि वैजात्यसिद्धौ प्रत्येकमात्रनाश्यसंस्कारेऽपि प्रत्येकपरिहारेण वर्तमानयोस्तयोर्घटस्मरणपटविपरीतज्ञाननाश्ये घटपटगोचरसमूहालम्बनसंस्कारे साङ्कर्यापत्तेः, तत्र चैतादृशवैजात्यान्तरस्वीकारेऽतिगौरवापत्तेरिति चेत्।

अनायत्या स्वसामानाधिकरण्यविशिष्टकालिकविशेषणतया घटस्मरणविशिष्टसंस्कारनाशत्वमेव तादृशस्मरणजन्यतावच्छेदकं, रोगकालादीनां चाननुगततया तत्तद्व्यक्तित्वं विपरीतज्ञानस्य तु वैजात्यम्। न च किं वैजात्यं स्मरणस्य नाश्यतावच्छेदकं तद्विपरीतज्ञानस्य वेति विनिगमनाविरह इति वाच्यम्। विपरीतनिश्चयस्य नाशकतायां नाशकतावच्छेदकगौरवात्। अत्र वैशिष्ट्यस्य जन्यतावच्छेदकत्वे कार्यतावच्छेदककोटिप्रविष्टविशेषणानां विशेष्यविशेषणभावेन नानाधर्मावच्छिन्नकारणताया वाहुल्यापत्तेः तत्रैव वैजात्यस्य नाश्यतावच्छेदकत्वौचित्यादिति॥

अथ समूहालम्बनसंस्कारस्य प्रत्येकगोचरस्मरणान्नाशापत्तिः, घटपटोभयविषयकसंस्कारस्य घटपटविषयकतया तन्नाशकीभूतघटस्मरणस्य सत्त्वात्। न च पटविषयकसंस्कारनाशे पटस्मरणस्य हेतुत्वात्तस्य पटविषयकत्वेन पटस्मरणरूपनाशकाभावान्न तन्नाश इति वाच्यम्। पटस्मरणं विनापि निरुक्तसंस्कारकार्यतावच्छेदकावच्छिन्नजननादत्रापि तदापत्तिसम्भवात्, तन्नाशाभ्युपगमे चानन्तरं पटस्मरणानुपपत्तिः। न च चरमस्मृतित्वेन नाशकत्वान्न दोष इति वाच्यम्। चरमत्वस्य निर्वक्तुमशक्यत्वात्। न च स्वजनकसंस्कारजन्यस्मृतिप्रागभावविशिष्टान्यत्वं तत्, जनकत्वादिकं तु फलोपधायकत्वादिरूपं ग्राह्यम्, अन्यथा संस्कारान्तरजन्यस्मृतिप्रागभावकालीनाया अपि चरमत्वानुपपत्तिरिति वाच्यम्। स्वत्वघटितत्वेनाननुगमात्। स्वप्रतियोग्युपधायकसंस्कारोपहितत्वविशिष्टकालिकसम्बन्धेन स्मृतिप्रागभावविशिष्टं यत्तदन्यत्वरूपस्याप्यननुगतोपधायकताघटितत्वात्, प्रथमस्मृतिश्च संस्कारं नाशयित्वा चरमत्वशालिनी न भवतीत्यत्र नियामकाभावाच्च। न च वैजात्यमेव चरमत्वं, तच्च फलबलकल्प्यमतो न दोष इति वाच्यम्। तादृशजातेरेकस्या एव सकलस्मरणनिष्ठनाशकतावच्छेदकत्वे घटपटौ कुडयकुसूलौ एतादृशसंस्कारद्वयजनितात् घटविषयककुसूलविषयकस्मरणात् कुड्यकुसूलविषयकसंस्कारनाशापत्तिः घटपटाविति संस्कारनाशकत्वात्

तेन हि तादृशजातिरत्रावश्यमुपेया। कुड्यकुसूलाविति संस्कारनाशकताव-च्छेदकजात्यन्यत्वेन घटसंस्कारनाशकस्मरणकुड्यसंस्कारनाशकस्मरणयोः परस्परपरिहारेण वर्तमानयोरुभयसंस्कारनाशकसमूहालम्बनस्मरणे सा-ङ्कर्यापत्तेरिति। न च चरमस्मृतित्वं यावत्स्मृतिसाधारणी एकैव जातिः, कार्यकारणभावस्तु तत्संस्कारनाशत्वतद्विजातीयस्मृतित्वाभ्यामिति वा-च्यम्। तादृशजातिः प्रथमस्मरणे नास्ति किन्तु चरमस्मृताविस्यत्र निया-मकाभावात् अननुगततत्तल्लक्षणानामिदानीमेव नियामकत्वमङ्गीकार्यमिति गौरवम्। नचानायत्या गौरवं स्वीक्रियत इति वाच्यम्। गत्यन्तरस्य द-र्शयिष्यमाणत्वादिति चेत्।

अत्र केचित्—घटविषयकसंस्कारत्वेन नाश्यता घटस्मरणत्वेन ना-शकता, एवं घटपटोभयगोचरसंस्कारत्वेन नाश्यता घटपटस्मरणत्वेन नाशकता, विशिष्य प्रतियोगिनामपि तथाहेतुत्वमनापत्त्या कल्प्यत इत्याहुः।

अन्ये तु समूहालम्बनज्ञानाद्घटादिप्रत्येकविषयका नानैव संस्कारा जायन्ते नतु समूहालम्बनसंस्कारः, तथा च घटस्मरणात्पटसंस्कारो न-श्यति नान्यः। न च समूहालम्बनात्मकसंस्कारानभ्युपगमेऽपि घटवद्भू-तलमिति ज्ञानाद्विशिष्टविषयक एव संस्कारोऽभ्युपेयः, अन्यथा विशिष्टस्म-रणानुपपत्तिः, तथा च भूतलसंस्कारोद्बोधकविरहकालीनघटमात्रविष-यकस्मरणाद्विशिष्टसंस्कारनाशापत्तिरिति वाच्यम्। घटमुख्यविशेष्यक-संस्कारत्वस्यैव घटस्मरणजनकतावच्छेदकत्वात् घटवद्भूतलमिति सं-स्कारनाशे विशिष्टविषयकस्मृतित्वेन हेत्वन्तरस्यावश्यकत्वात्, अन्यथा विशकलितघटभूतलयोः स्मरणात्तथाविधसंस्कारनाशापत्तिः।

अथैवमपि घटवद्भूतलं पटवदितिसंस्कारस्य घटाभाववद्भूतलमि-ति विपरीतज्ञानेन नाशे पटवदितिस्मरणानुपपत्तिः। न च यत्र तादृशसं-स्कारेण (विशिष्टसंस्कारेण) क्वचिद्विशिष्टस्मरणं जायते तत्रापि घटवद्भू-तलं पटवत् भूतलमिति संस्कारद्वयमेवाभ्युपेयते न तु विशिष्टविषय-क एकः संस्कार इति वाच्यम्। यत्र विशिष्टविषयकसंस्कारस्या-वश्यकत्वं तत्रैव तादृशसंस्कारविषयीभूतएकधर्मावच्छिन्नेऽपरधर्माव-च्छिन्नप्रतियोगिताकाभावज्ञानसत्त्वे तादृशसंस्कारनाशापत्तेः। न चेष्टाप-त्तिः, तादृशविपरीतज्ञानोत्तरं तादृशस्मरणापलापप्रसङ्गादिति चेन्न।

तादृशानुभवस्य प्रामाणिकत्वे तद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्न-प्रकारकसंस्कारनाशत्वावच्छिन्नं प्रति तद्धर्मावच्छिन्नविशेष्यकतद्धर्माव-च्छिन्नाभावप्रकारकज्ञानत्वेन हेतुत्वान्नानुपपत्तिः। न च तथापि वहि-

व्याप्यत्वभाववान्धूम इति ज्ञानकाले वह्निव्याप्यो धूम इति संस्कारासत्त्वे विपरीतज्ञानरूपकारणबलात्तन्नाशापत्तिरिति वाच्यम् । तादृशसंस्कारनाशं प्रति तादृशसंस्कारस्यापि प्रतियोगिविधया हेतुत्वेन तदभावादेव तथापत्त्यसंभवादित्याहुः ॥

इति स्मृतिनिश्चयहेतुतावाद( १२ )वीचिः ।

## अथ प्रतियोगिज्ञानकारणतावाद(१३)वीचिः ।

प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानमभावप्रत्यक्षे कारणं तेन विना तस्यानुदयात् । न च घटो नास्तीति प्रत्यक्षस्य घटत्वविशिष्टप्रकारकत्वात् विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव तस्य तत्कारणत्वं न तु स्वातन्त्र्येणेति वाच्यम्। तथा सति घटत्वादिप्रकारकज्ञानाभावदशायां नेत्याकारकप्रत्यक्षापत्तेः, घटत्वादिनिर्विकल्पकानन्तरं विशेष्ये विशेषणमिति रीत्या घटाभावप्रत्यक्षापत्तेर्दुर्वारत्वाच्च। न च तादृशाभावप्रत्यक्षयोरप्रसिद्धत्वेन नापत्तिरिति वाच्यम् । इन्द्रियसन्निकर्षबलादभावप्रत्यक्षत्वादिरूपेणापत्तिसम्भवात् उक्तस्थले विशेषणतावच्छेदकप्रकारकज्ञानाभावात् विशिष्टप्रकारकप्रत्यक्षबाधेनाभिहितप्रत्यक्ष एव पर्य्यवसानात् । न च विशेषणतावच्छेदकघटत्वादिप्रकारकज्ञानस्य सन्निकर्षादिसहकारितया तदभावादेव नापत्तिरिति वाच्यम्। घटवद्भूतलमित्यादिबोधसाधारणरूपावच्छिन्नं प्रति घटत्वादिप्रकारकज्ञानस्य घटाभावादिबोधसाधारणरूपावच्छिन्नं प्रति च कारणीभूतसन्निकर्षादिसहकारिताया असम्भवात् कार्यतावच्छेदकयोर्व्याप्यव्यापकभावस्य सहकारितायां तन्त्रत्वात्, स्वतन्त्रकारणत्वे तु घटाभावचाक्षुषत्वादेरेव कार्यतावच्छेदकत्वं वाच्यम्, तच्चाभावचाक्षुषत्वादिरूपसन्निकर्षादिकार्य्यतावच्छेदकव्याप्यम् इति न सहकारित्वानुपपत्तिः, अभावप्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियसम्बद्धविशेषणतायाः सामान्यतः कारणत्वस्यासम्भवेऽपि घटाभावप्रत्यक्षत्वादिकमेव प्रतियोगिज्ञानकार्यतावच्छेदकमुपगन्तव्यम् ।

अथ पटादिज्ञानाभावदशायां घटत्वादिप्रकारकज्ञानकालीनेन्द्रियसन्निकर्षादिबलात् घटाभाववत् पटाभावस्यापि प्रत्यक्षापत्तिः । यदि च तदभावविषयकप्रत्यक्षादिकं प्रति तत्तदभाववृत्तिसन्निकर्षस्य विशिष्य कारणत्वात्तत्र च तत्तदभावप्रतियोगितावच्छेदकधर्मप्रकारकज्ञानस्यैव

तत्तदभावप्रत्यक्षनिशामकत्वात् उक्तस्थले घटाभावादिवृत्तिसन्निकर्षस्य पटाभावादावसत्त्वात् पटाभावादिवृत्तिसन्निकर्षस्य च घटत्वादिप्रकारकज्ञानरूपसहकारित्वविरहात् नापत्तिरित्युच्यते, तदा कृतं प्रतियोगिज्ञानस्य स्वतन्त्रहेतुताकल्पनेन, घटत्वादिविशिष्टप्रकारकबुद्धित्वरूपसामान्यधर्मावच्छिन्नं प्रत्येव कारणीभूतघटत्वादिप्रकारकज्ञानस्य सामान्यसामग्रीविधयैव सहकारित्वसम्भवात् इति चेन्न ।

अभाववृत्तिविषयतासम्बन्धेन प्रत्यक्षं प्रति स्वप्रकारीभूतधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावनिष्ठतयैव प्रतियोगिज्ञानस्य कारणत्वं कल्प्यते, उक्तस्थले च पटाभावादौ सन्निकर्षसत्त्वेऽपि दर्शितसम्बन्धेन ज्ञानासत्त्वान्नातिप्रसङ्गः। न चैवं घटाभावत्वेन पटाद्यभावभ्रमानुपपत्तिः, इष्टत्वात्। एतेन—एकाभावप्रतियोगितावच्छेदकप्रकारकज्ञानात् अभावान्तरप्रत्यक्षानुत्पत्त्या विशिष्य घटत्वादिप्रकारकज्ञानत्वेन कारणत्वं वाच्यम्, तत्र च घटाभावप्रत्यक्षत्वस्य घटाभावचाक्षुषत्वस्य वा तज्जन्यतावच्छेदकत्वे घटध्वंसत्वादिप्रकारकज्ञानं विनापि जायमाने घटो नास्तीत्याकारकस्य घटध्वंसाभावस्य प्रत्यक्षे व्यभिचारः घटात्यन्ताभावस्य प्राचाम्मते घटध्वंसाद्यभावत्वात्, एवं समनियताभावैक्यमते संख्या नास्तीति प्रत्यक्षे परिमाणत्वादिप्रकारकज्ञानस्य व्यभिचारः, तत्तदभावप्रत्यक्षे तत्तदभावप्रतियोगितावच्छेदकप्रकारकज्ञानत्वेन हेतुत्वेऽपि घटाद्यभावत्वादिना पटाद्यभावप्रत्यक्षे व्यभिचारः, घटत्वादिविशिष्टप्रकारकप्रत्यक्षं प्रति घटत्वादिप्रकारकज्ञानत्वेन कारणत्वोपगमे नेत्याकारकाभावप्रत्यक्षवारणमशक्यम्, तस्य घटत्वादिप्रकारकज्ञानकार्यतावच्छेदकानाक्रान्तत्वात् तादृशज्ञानमन्तरेणापि इन्द्रियसन्निकर्षादिना तदुत्पादने व्यभिचाराप्रसक्तेः इत्यादिकं परास्तम् । घटाभावत्वादिना पटाद्यभावप्रत्यक्षस्यानभ्युपगमेन उक्तकार्यकारणभावे व्यभिचारानवकाशात् । यस्य येन विना स्वकार्य्यजनकत्वोपगमे व्यभिचारो न प्रसज्यते तस्य तदनपेक्षत्वे प्रत्यक्षादिलक्षणकार्यविशेषहेताविन्द्रियादेर्व्यापारत्वेऽपि जन्यज्ञानादिसामान्यकार्यप्रसङ्गाच्च ।

अथ घटत्वादिप्रकारकज्ञानासत्त्वेऽपि कम्बुग्रीवादिमान्नास्तीति प्रत्यक्षोत्पत्तेर्गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वमतेऽत्र व्यभिचार एव कम्बुग्रीवादिमानित्याकारकज्ञानस्य तद्विषयीभूतघटत्वावच्छिन्नाभावे निरुक्तसम्बन्धेनासत्त्वादिति चेन्न ।

दर्शितज्ञानप्रकारीभूतकम्बुग्रीवादिमत्त्वावच्छिन्नाभावस्यापि तादृशप्रत्यक्षोपगमात्, तस्य तत्प्रत्यक्षविषयत्वेऽपि गुरुधर्मस्य प्रतियोगि-

तावच्छेदकत्वावगाहितया भ्रमत्वस्यावश्यकतया तथोपगमे बाधकाभावात् । इदन्त्वेन तेजोऽभावप्रत्यक्षेऽभाववानयमित्युपनीतभाने च व्यभिचारस्तु नाशङ्कनीयः, अभावत्वलौकिकप्रकारतानिरूपितविषयतायाः कार्यतावच्छेदकत्वात् । न चैवमभावस्वनिर्विकल्पकेऽभावप्रत्यक्षत्वस्य कार्य्यतावच्छेदकताक्रान्ततया प्रतियोगिज्ञानाघटिततत्सामग्रीबलादपि अभावप्रत्यक्षापत्तिरिति वाच्यम् । अभावस्य निर्विकल्पकानभ्युपगमात्, अत एवानुपस्थितस्यापि कारणतायाः प्राचीनानुमतत्वमिति सम्प्रदायः ।

अत्र नव्याः-एवंक्रमेण प्रतियोगिज्ञानस्य स्वतन्त्रकारणताभ्युपगमे अभावो न घटीय इत्यादिबाधनिश्चयदशायां नेत्याकारकाभावप्रत्यक्षवारणमशक्यम्, तदानीमभावे प्रतियोगिवैशिष्ट्यभानासम्भवात्प्रतियोगिज्ञानघटिताभावप्रत्यक्षसामग्रीसत्त्वाच्च । न चोक्तनिश्चयस्याभावत्वसामानाधिकरण्येन घटाभावप्रकारकत्वं तदवच्छेदेन वा ? आद्ये तत्सामानाधिकरण्येनैव घटादिवैशिष्ट्यावगाहिनि घटो नास्तीति प्रत्यक्षे न तस्य विरोधित्वम्, अन्त्ये च तस्याभावत्वं धर्म्मितावच्छेदकीकृत्य घटतद भावप्रकारकस्याहार्य्यभ्रमत्वात् विशिष्टबुद्धिमात्रं प्रति न विरोधित्वमित्युभयापि नेत्याकारकप्रत्यक्षप्रसङ्गो न इति वाच्यम् । अभावत्वावच्छेदेन घटीयान्यत्वावगाहितादृशनिश्चयस्याभावत्वं धर्म्मितावच्छेदकीकृत्य घटाभावादिप्रकारकत्वाभावेनानाहार्य्यत्वात्,एवमभावत्वावच्छेदेन शुद्धघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रकारकतादृशनिश्चयस्याभावत्वं धर्मितावच्छेदकीकृत्य घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटप्रकारकत्वादाहार्यत्वेऽपि संयोगादिसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावप्रकारस्य संयोगादिसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव घटादिप्रकारकत्वेन संयोगादिसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटप्रकारकत्वाभावेनानाहार्य्यत्वात् । न चैवं शुद्धघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटप्रकारकज्ञानाविरोधित्वात् तेन सम्बन्धेन घटप्रकारकमेव घटो नास्तीतिप्रत्यक्षं भविष्यतीति कथं नेत्याकारकप्रत्यक्षापत्तिरिति वाच्यम् । तादृशप्रत्यक्षस्याप्यनिष्टत्वात्, न हि सम्बन्धावच्छिन्नत्वाविशेषितप्रतियोगितासंसर्गकमप्यभावप्रत्यक्षम्, अन्यथा तत्तत्सम्बन्धावगाहिविशिष्टबुद्धि प्रति तत्तत्सम्बन्धावच्छिन्नप्रतियोगितावगाहित्वेनैवाभावनिश्चयस्य विरो-

धित्वेन विशिष्टबुद्धिं प्रत्येव तादृशाभावप्रत्यक्षनिश्चयस्याप्रतिबन्धकताया अनुभवविरोधापत्तेः, अत एकत्र द्वयमिति न्यायेनापि अभावत्वघटोभयप्रकारकस्याभावप्रत्यक्षस्य घटांशे निर्द्धर्मितावच्छेदकतया तादृशबाधाप्रतिबध्यतया तस्योत्पत्तौ बाधकाभावात् नेत्याकारकप्रत्यक्षापत्तिर्न सम्भवतीति ।

तन्न, अवृत्तित्वज्ञानस्य निर्द्धर्मितावच्छेदकताकबुद्धिं प्रत्यपि विरोधित्वे तयः प्रतियोगितासम्बन्धेन घटादिमदवृत्तित्वज्ञानकाले तादृशप्रत्यक्षापत्तेर्दुर्वारत्वात्, एवं भूतलादौ घटाद्यारोपे सति तेन प्रतिबन्धात् भूतलं घटाभाववदित्यादिप्रत्यक्षासम्भवेऽपि नेत्यादिप्रत्यक्षापत्तिः। न चैवं तादृशनिश्चयाभावानामपि इन्द्रियसम्बद्धविशेषणतादिभिः प्रत्यक्षादिज्ञाने अपेक्षणापत्तिरितिवाच्यम्। घटादिप्रत्यक्षसाधारणधर्मावच्छिन्नं प्रति हेतुभूतैरिन्द्रियसम्बद्धविशेषणतादिभिरभावोपनीतभानसाधारणधर्मावच्छिन्नं प्रति हेतुभूतानामुक्तबाधनिश्चयाभावानां सामग्रीत्वेन विशेषसामग्रीत्वेन वा अपेक्षायाः सम्भवात् कालिकादिसम्बन्धेन घटत्वादिप्रकारकात् प्रमेयत्वादिदिप्रकारकाच्च ज्ञानात् घटो नास्तीत्यादिप्रत्यक्षानुदयेन समवायस्वरूपादिसम्बन्धावच्छिन्नप्रकारतावद्धर्मावच्छिन्नप्रतियोगिताकस्यैव कारणताघटकसम्बन्धास्यावश्यकत्वेन घटो नास्तीत्यादिप्रत्यक्षपूर्वं घटध्वंसादिज्ञानासत्त्वस्थलेऽपि स्वरूपसम्बन्धावच्छिन्नप्रकारताघटितसम्बन्धेन ज्ञानात् व्यभिचारो दुर्वार एव ।

यत्तु—प्रतियोगिज्ञानस्य घटत्वादिप्रकारकज्ञानत्वादिनैव कारणत्वम्, कार्यतावच्छेदकञ्च घटत्वावच्छिन्नप्रकारताभिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वानिरूपिताभावनिष्ठालौकिकविषयताशालिप्रत्यक्षत्वम्, एवञ्च न क्वापि व्यभिचारो न वा नेत्याकारकाभावप्रत्यक्षापत्तिः, तस्य यावत्प्रतियोगितावच्छेदकप्रकारकज्ञानस्य कार्य्यतावच्छेदकाक्रान्तत्वात् प्रतियोगितावच्छेदकप्रकारकज्ञानस्य चासर्वज्ञानामभावात् सर्वज्ञानान्तु दर्शितबाधानवतारणे यत्किञ्चित्प्रतियोगिकाभावप्रत्यक्षस्यैव सम्भवात्, एवञ्च घटाभावत्वादिना पटाभावभ्रमोपगमेऽपि न क्षतिः, तस्य घटत्वादिप्रकारकज्ञानजन्यतावच्छेदकाक्रान्तत्वात् व्यभिचाराभावाच्च—इति, तन्न, यत्र नेत्याकारकमभावप्रत्यक्षं प्रसिद्धं कार्य्यतावच्छेदकाक्रान्तञ्च तत्र व्याघात एव ।

अथ यद्यभावप्रत्यक्षं प्रतियोग्यविषयकं भवेत्तर्हि यावत्प्रतियोगिज्ञानकार्य्यतावच्छेदकाक्रान्तमपि स्यात् इत्यभावप्रत्यक्षस्य प्रतियोग्यविषयकत्वे यावत्प्रतियोगिज्ञानासमवधानमित्येव भ्रम इति कुतो व्याघा

इति चेन्न

सामग्रीसत्त्वे कार्यस्यावश्यकत्वात्, अस्ति च यत्किञ्चित्प्रतियोगिज्ञानेन्द्रियसम्बद्धविशेषणतादिरूपा सामग्री, दर्शितस्थले यावत्प्रतियोगिज्ञानघटिता च सा भवत्येवेति, अपि च संख्या नास्तीत्यादिप्रत्यक्षे परिमाणादीनामप्यभावांशे विशेष्ये विशेषणमित्यादिन्यायेन भानापत्तिरेतावता प्रयासेनापि वारयितुं न शक्यते

अथैतादृशन्यायेन परिमाणादिभाने तादृशप्रत्यक्षस्य संख्यादिप्रकारकज्ञानकार्यतावच्छेदकाक्रान्तत्वान्नानुपपत्तिरिति चेत् ।

किं प्रयोजनक्षतिभिया सामग्री कार्यं नार्ज्जयिष्यतीति स्यादिन्द्रियसम्बद्धविशेषणताया भूतलादिविशिष्टविषयकघटत्वादिविशिष्टप्रकारकाभावत्वविशिष्टचाक्षुषत्वादिकमेव कार्यतावच्छेदकमुक्तबाधाभावादिकार्यतावच्छेदकम्, धर्माणाञ्च तद्व्यापकतया सामान्यसामग्रीत्वेनैव तेषामिन्द्रियसम्बद्धविशेषणतासहकारित्वान्नोपदर्शितबाधकाले नेत्याकारकाभावप्रत्यक्षापत्तिरित्यकामेनापि वाच्यम्, एवञ्च घटत्वादिविशिष्टप्रकारकानुभवत्वादिलक्षणघटत्वादिप्रकारकज्ञानकार्यतावच्छेदकधर्माणामपि तद्व्यापकतया घटत्वादिप्रकारकज्ञानानामपि सहकारित्वनिर्वाहात् तेषामभावप्रत्यक्षं प्रति स्वतन्त्रकारणताकल्पनं व्यर्थमेव, संख्या नास्तीतिप्रत्यक्षे दर्शितपरिमाणादिविषयकत्वापत्तिरप्यापाद्याप्रसिद्ध्यैव निरसनीया, सर्वत्राभावे प्रतियोगितावच्छेदकविशिष्टस्यैव प्रतियोगिनः प्रकारत्वोपगमात् । न चोक्तधर्मस्य इदन्त्वप्रकारकप्रतियोग्यविशेषितप्रत्यक्षसाधारण्याभावात् नेन्द्रियसम्बद्धविशेषणताजन्यतावच्छेदकत्वमिति वाच्यम् । इदन्त्वप्रकारकाभावचाक्षुषत्वस्यापि जन्यतावच्छेदकत्वोपगमात् । न चेन्द्रियसम्बद्धविशेषणताबलात्तादृशचाक्षुषादावभावत्वस्य प्रकारत्वेन भानम् इदन्त्वानुपस्थितौ चाभावत्वस्य निर्विकल्पकं दुर्वारमभावत्वस्य चाक्षुरादिरूपेन्द्रियसम्बद्धविशेषणतावच्छेदकस्य घटत्वादिविशिष्टप्रतियोगिकाभावत्वेन समं व्यापकाभावेन घटत्वादिप्रकारकज्ञानादीनां तस्याः सहकारित्वासम्भवादिति वाच्यम् । इन्द्रियसम्बद्धविशेषणविशेषणताया अपि घटत्वादिप्रकारकत्वादिविशेषिताभावत्वादिचाक्षुषत्वादिकमेव जन्यतावच्छेदकमित्यभ्युपगमात् ।

परमार्थतस्तु अभावचाक्षुषत्वादिकमेव इन्द्रियसम्बद्धविशेषणतादिजन्यतावच्छेदकमिदन्त्वाद्याकारकाभावचाक्षुषस्य घटत्वादिविशिष्टाप्रकारकस्यालीकतया घटत्वादिप्रकारकज्ञानदर्शितज्ञानाभावादिकस्यैव चक्षुःसंयुक्तविशेषणतादेरभावचाक्षुषादिसामग्रीत्वं कल्प्यते ॥ समाप्तोऽयम् ॥

॥ श्री परब्रह्मणेनमः ॥

## अथ महामहोपाध्याय गदाधर भट्टाचार्यकृतः

## ( १४ ) स्वर्गवादवीचिः ॥

दुःखासम्भिन्नत्वादिविशिष्टसुखत्वं स्वर्गपदशक्यतावच्छेदकमिति सिद्धान्तः। आदिपदेनानन्तरदुःखग्रस्तभिन्नत्वाभिलाषोपनीतत्वयोः परिग्रहः।

अत्र दुःखासम्भिन्नत्वं न दुःखानवच्छेदकशरीरावच्छिन्नत्वम्, दुःखानवच्छेदकीभूतखण्डशरीरावच्छिन्नेऽस्मदादिसुखे चक्रवर्तिराजसुखे चातिव्याप्तेः। नापि दुःखानवच्छेदकत्वव्येककालीनशरीरद्वयावृत्तिजातिमच्छरीरावच्छिन्नत्वम्, दुःखावच्छेदकावृत्तिजातिमच्छरीरावच्छिन्नत्वं वा, स्वर्गिणामपि मरणकालीनदुःखपातभीरुत्वजन्यदुःखश्रवणात्।

अत्रोच्यते–तादृशदुःखश्रवणस्य संसारनिन्दामात्रे तात्पर्यम्, वस्तुतः स्वर्गिशरीरावच्छेदेन मरणदुःखादिकमपि नेति तत्त्वम्। नन्वेवं स्वर्गिशरीरावच्छेदेन यदि दुःखं नास्ति तदा स्वर्गिणः सुखभोगानन्तरं मुक्तिः स्यात्, चरमदुःखध्वंसस्य मुक्तित्वात् स्वर्गिणश्चरमदुःखासम्भवात्, इति चेत्, मैवम्, ब्राह्मणशरीरमेव चरमदुःखसाधनम्, अन्यथा शूद्रशरीरावच्छेदेनापि मुक्तिप्रसङ्गात्। स्वर्गिशरीरे च न ब्राह्मणत्वम्, तत्प्रयोजकादृष्टाजन्यत्वादिति स्वर्गिणोऽपि शरीरान्तरं विना न मुक्तिः, किन्तु ब्राह्मणशरीरपरिग्रहादेव। न च श्रवणमननादावेव ब्राह्मणशरीरं हेतुः तु चरमदुःखेऽपि इति शूद्राणामपि मुक्तिरिष्यते, अतो दुःखाभावे स्वर्गिणो भोगानन्तरं मुक्तेरनुपपत्तिरिति वाच्यम्। ब्राह्मणशरीरस्य विनिगमनाविरहेण चरमदुःखं प्रत्यपि हेतुत्वात्, अन्यथा ब्राह्मणशरीरेणैव मुक्तिरिति बहुतरश्रुतिस्मृत्यादिविरोधप्रसङ्गात्। न चैवं स्वकीयनिखिलाशुभकर्मजदुःखभोगानन्तरं स्वर्गे सति मुक्तिर्न स्यादिति वाच्यम्, इष्टत्वात्, स्वर्गानन्तरं ब्राह्मणशरीरपरिग्रहात् स्वीययत्किञ्चिदशुभकर्मजचरमदुःखोत्पत्तावेव मुक्तिस्वीकारात्, अन्यथा मुक्त्यभावे इष्टापत्तिरिति सारम्॥

केचित्तु मरणकालीनदुःखपातभीतिजन्यदुःखातिरिक्तदुःखपरमुक्तलक्षणे दुःखपदम्, तेन स्वर्गिणस्तादृशदुःखसत्त्वेऽपि न क्षतिरिति वदन्ति।

अनन्तरदुःखग्रस्तभिन्नत्वञ्च स्वाव्यवहितोत्तरक्षणावच्छेदेन स्वाधिकरणवृत्ति यद्दुःखं तद्भिन्नत्वम्, स्वाव्यवहितप्राक्क्षणावच्छि

न्नैकात्मवृत्तित्वसम्बन्धेन दुःखविशिष्टसुखावच्छेदकावृत्तिजातिमदवच्छि-न्नत्वमिति तु निष्कर्षः। तादृशजातिः स्वर्गिशरीरवृत्तिचैत्रत्वादिरूपा ॥०॥

अभिलाषोपनीतत्वञ्च स्वाश्रयवृत्तित्वप्रकारकस्वविशेष्यकेच्छात्वव्या-पकयथार्थत्वकत्वम्, अन्यथा इच्छोपनीतत्वस्य दुर्वचत्वात्, स्वर्गिणा-महं तत्सुखी स्यां मयि तत्सुखं स्यादित्यादिनिखिलेच्छानां यथार्थत्वमेव। अस्माकन्तु तादृश्याः कस्याश्चिदयथार्थत्वमपीति नासम्भवातिव्याप्ती॥०॥

अथैवं दुःखासम्भिन्नत्वादेः प्रत्येकस्यापि स्वर्गिसुखमात्रवृत्तितया श-क्यतावच्छेदकत्वसम्भवे तादृशधर्मत्रयविशिष्टसुखत्वस्य शक्यतावच्छे-दकत्वे मानाभाव इति चेन्न

येन रूपेण यत्पदादन्वयबोधस्तत्पदस्य तेनैव रूपेण शक्तिस्वीकारात्। तद्रूपञ्च प्रकृते तादृशधर्मत्रयविशिष्टसुखत्वमित्येकैकमात्रस्यानतिप्रसक्त-त्वेऽपि तद्विशिष्ट एव शक्तिः कल्प्यतां विनिगमकाभावाच्च, अत एव—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्॥

इत्यादिशक्तिग्राहकार्थवादोऽपि सङ्गतः। स्वःपदास्पदमिति। स्वः-पदवाच्यमित्यर्थः॥

इति महामहोपाध्यायश्रीगदाधरभट्टाचार्यविरचितः
स्वर्गवाद(१४)वीचिः समाप्तः॥

## (१५) प्रीतिवादवीचिः।

देवताचैतन्यवादिमतेऽपि यत्र विष्णुप्रीतिरूपफलकामबोधकपदसम-भिव्याहारस्तत्रागतिरेव, तथाहि—विष्णुरीश्वरः, प्रीतिश्च सुखं, नैयायि-कादिभिश्च तदनभ्युपगमात् ईश्वरे सुखाङ्गीकर्तृभिर्भट्टादिभिरपि तत्सुखस्य जन्यत्वानभ्युपगमाच्च तत्प्रीतेः फलत्वानुपपत्तिः। न च विष्णुशब्दस्य व्याप्त्यर्थकविष्लृधातुघटिततयाऽधिकरणव्यापकार्थकत्वोपगमेन प्रीति-पदेन तस्य कर्म्मधारयोपगमादाधारव्यापकसुखधारायाः फलत्वेन तात्प-र्यविषयत्वमिति वाच्यम्। तथापि 'मधुसूदनतुष्टये' इत्यादावगतिरेव। न च विष्णवादिशब्दः सुखविशेषे रूढः, येन सुखसामान्यवाचकप्रीत्या-दिशब्दस्य कर्म्मधारयोपगमेन सामञ्जस्यं भवेत्। तादृशरूढिग्राहककोशा-द्यभावात्, प्रवृत्तिनिमित्तापरिचयेन तत्पदघटितविधिवाक्यस्य प्रवर्त्तक-तानुपपत्तेश्च।

अत्राहुः—प्रीतितुष्ट्यादिपदं सुखपर्य्यायपठितमप्यत्रानुरागार्थकं, तत्रापि तत्प्रयोगदर्शनात्। अत एव 'तुष्टेर्मोचयत' इत्याचार्य्यश्लोके तुष्टिरनुरक्तिरित्युपायकृता वर्द्धमानोपाध्यायेन व्याख्यातम्। तथाच विष्णौ प्रीतिरित्यादिसप्तमीसमासाश्रयणात् विष्णुविषयको विहितकर्म्मकर्तुः प्रीतिरूपभावविशेष एव तत्तत्कर्म्मफलतया विधिना बोध्यते, तस्य स्वतोऽपुरुषार्थत्वेपि मोक्षफलकतयां काम्यत्वोपपत्तिः। न च साऽप्रामाणिकी, 'परात्परतरं यान्ति नारायणपरायणाः' इत्यादिबहुतरमुनिवचनानां विष्णोर्भक्तेर्मोक्षोपायतायां प्रमाणत्वात्, आलङ्कारिकमते शृङ्गारादिस्थायिभावस्य रत्यादेः स्वप्रकाशानन्दमयसम्विदात्मकरसरूपतया परिणतिवत् देवादिविषयकरतिरूपभावस्यापि सुखरूपेणेति स्वतःपुरुषार्थत्वमेव। अत एव चमत्कारातिशयेन रसवद्भावस्यापि 'रसभावतदाभासभावशान्त्यादिरक्रम' इत्यनेनालक्ष्यक्रमव्यङ्ग्यान्तःपरिगणनं सङ्गच्छते। अत एव "न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्ना" इत्यादिवचनैर्मोक्षस्य पुरुषार्थभिन्नत्वाभिधानमपि सङ्गच्छते, विष्णुभक्तावुत्कटरागेण तत्सुखविरोधिमुक्तौ कामनानुदयसम्भवात्।

'प्रीयते भगवान् हरिः' इत्यादावपि हरिः सुखीभवतीति नार्थः, किन्तु कर्म्मतार्थकात्मनेपदेन धात्वर्थानुरागविषयताबोधात् भगवाननुरागविषयीक्रियते इत्येवार्थ इति न विरोधः॥ 'तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासतः' इतिशिवरात्रिव्रतकथायां शिवकर्तृकतोषादिवाक्यान्यपि कथञ्चित् सङ्गमनीयानि इति।

प्रीतितुष्ट्यादिपदं विहितकर्मकर्तृपुरुषीयमोक्षेच्छापरं, विष्णौ तदिच्छाया नित्यत्वेऽपि तदंशे विशेषणीभूतस्य मोक्षस्यासिद्धतया तद्विशिष्टेच्छायाः काम्यत्वनिर्वाह इत्यप्याहुः।

वेदान्तानुयायिनस्तु—विशुद्धचैतन्यरूपे ब्रह्मणि न सुखोत्पत्तिः, किन्तु अन्तःकरणावच्छिन्नचिद्रूपे जीवात्मनीव मायावच्छिन्नचैतन्यरूपे ईश्वरे, मायापरिणामरूपं च तत्र ज्ञानसुखादिकं, जीवात्मनि जायमानन्तत् बुद्धितत्त्वाख्याऽन्तःकरणवृत्ति, ईश्वरे जायमानञ्च तत् ईश्वरोपाधिमायावृत्ति। माया च गुणत्रयात्मिका श्रीकृष्णश्रीरामौ भगवत्यो हरिहरविरिञ्चिप्रभृतयश्च प्रत्येकं मायांशसत्त्वतमोरजोऽवच्छिन्नचैतन्यरूपाः। अत्र च प्रमाणं 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष' इत्यादिभगवद्वाक्यम्। तथाच तेषु गुणपरिणामरूपस्य जन्यसुखस्य सम्भवात् श्रीकृष्णादिप्रीतिकामनया कर्म्माचरणं शास्त्रार्थः। ईश्वरस्य जन्यज्ञानानभ्युपगमे 'तदैक्षत बहु स्यां प्रजायेय' इति ईश्वरेक्षणबोधकश्रुतिविरो-

धः। तत्रावरणोपाधिसत्त्वेन निर्वहति जन्माद्युपाध्यवच्छेदः, एवमपि शिवादयो जीवा न, किन्त्वीश्वरा इति वदन्ति ।

न चैतन्मते सर्वाश्रयत्वेन चेश्वरस्य मनोलक्षणान्तःकरणसत्त्वे तस्य-जीवत्वं दुर्वारमेवेति वाच्यम् । अन्तःकरणावच्छिन्नचैतन्यस्यैव जीवत्वात् । तदुक्तं 'कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति । कार्य्यं मायाकार्य्यान्तःकरणमुपाधिर्विशेषणं यत्रेति व्युत्पत्त्या कार्य्योपाधिपदमन्तःकरणावच्छिन्नार्थकम् । नच ईश्वरस्य मनोऽनभ्युपगमे 'वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः' इत्यादिकं श्रीकृष्णादेर्मनोबोधकवाक्यं विरुद्ध्येत इति वाच्यम् । तत्र मनःपदस्य भावार्थकासुप्रत्ययान्तेन निष्पन्नतया अभिसन्ध्यर्थकत्वात्, अन्तःकरणार्थकत्वे तु तदानीं तत्र करणत्वासङ्गतेः । तत्र च ब्रह्मस्वरूपे भगवति उपाधेरवच्छेदमन्तरेण रात्रिवीक्षणपूर्वकविहाराभिसन्धानस्यासम्भवात् तदुपपादकस्य भगद्विशेषणस्योपादानं 'योगमायामुपाश्रित' इति मायात्मकोपाध्यवच्छिन्न इत्यर्थकम्, एवं रीत्या सर्वत्राविरोध इति ॥

इति प्रीतिवाद(१५)वीचिः

श्रीगणेशायनमः ।

## अथ गदाधरभट्टाचार्य्यकृतो विष्णुप्रीतिवाद(१६)वीचिः ।

अथ देवताचैतन्यवादिमतेऽपि यत्र विष्णुप्रीतिरूपफलकामसमभिव्याहारस्तत्रागतिरेव विष्णावीश्वरे प्रीतिपदार्थस्य सुखस्य नैयायिकैरनभ्युपगमात् । ईश्वरे सुखाङ्गीकर्तृभिरपि तत्सुखस्य जन्यत्वानङ्गीकारेण तत्र फलत्वाप्रसक्तेः । न च विष्णवादिशब्दः सुखविशेषे रूढस्तेन सह सुखसामान्यपरप्रीत्यादिशब्दस्य कर्मधारयोपगमेन सर्वसामञ्जस्यमिति वाच्यम् । ईदृशरूढिग्राहकस्य कोशादेरभावात् ।

अत्राहुः—प्रीतितुष्ट्यादिपदं सुखपर्यायपठितमप्यत्रानुरागार्थकं, तत्रापि तत्पदप्रयोगदर्शनात् । अत एव—

> तुष्टेर्मोचयतः सर्वानतुष्टेर्बध्नतः पुनः ।
> कारागारमिदं विश्वं यस्य नौमि तमीश्वरम् ॥

इत्याचार्यश्लोके तुष्टिरनुरक्तिरित्युपायकृता वर्द्धमानोपाध्यायेन व्याख्यातम्, तथा च विष्णौ प्रीतिः विष्णुप्रीतिरित्यादिसमासाश्रयणाद् विष्णुविषयको विहितकर्मकर्त्तुरनुरागरूपो भावविशेष एव तत्तत्कर्मफलतया बोध्यते, तस्य स्वतोऽपुरुषार्थत्वेऽपि मोक्षफलजनकतया काम्यत्वोपप-

त्तिः। न च साऽप्रामाणिकी, "परात् परतरं यान्ति नारायणपरायणाः" इत्यादिवचनानां विष्णुभक्तेर्मोक्षो ऽयतायां प्रमाणत्वात्। आलङ्कारिकमते श्रृङ्गारादिस्थायिभावस्य रत्यादेः स्वप्रकाशानन्दमयसंविदात्मकतया परिणतिवद्देवविषयकानुरागरूपभावस्यापि सुखात्मना परिणतेः स्वतः पुरुषार्थत्वमेव। अत एव चमत्कारातिशयेन रसवद् भावस्यापि 'रसभावतदाभासभावशान्त्यादिरक्रम' इत्यादिनाऽसंलक्ष्यक्रमेषु परिगणनमपि सङ्गच्छते। अतएव "न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजप्रपन्नाः" इत्यादिभागवतमपि॥ "तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासत" इत्यादिशिवादिकर्तृकतोषबोधकवाक्यानि यथाकथंचित् सङ्गमनीयानि॥

अथवा प्रीतितुष्ट्यादिपदं विष्णौ विहितकर्मकर्तृपुरुषीयमोक्षादिरूपफलेच्छादिपरं, तदिच्छायाः नित्यत्वेऽपि विशेषणीभूतमोक्षादेरसिद्धतया तद्विशिष्टतदिच्छायाः काम्यतानिर्वाह इत्यपि प्राहुः।

वेदान्तानुयायिनस्तु—विशुद्धचैतन्यरूपे ब्रह्मणि न सुखस्योत्पत्तिः किन्त्वन्तःकरणावच्छिन्नचिद्रूपे जीवात्मनीव मायावच्छिन्नचैतन्यरूपे ईश्वरे मायापरिणामरूपस्य ज्ञानसुखादेः जीवात्मनि जायमानं ज्ञानसुखादिकं बुद्धितत्त्वाख्यान्तःकरणवृत्ति, ईश्वरे च जायमानं तदीश्वरोपाधिमायावृत्ति, माया च गुणत्रयात्मिका तथाच श्रीकृष्णश्रीरामौ भगवत्यो हरिहरविरिञ्चयश्च प्रत्येकं मायांशसत्त्वरजस्तमोऽवच्छिन्नचैतन्यरूपाः। अत्र च प्रमाणं—

सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुषः एक इहास्य धत्ते।
स्थित्यादये हरिविरिञ्चिहरेतिसंज्ञाः श्रेयांसि तत्र खलु सत्त्वतया नृणां स्युः॥

इत्यादि भागवतवाक्यम्। तथाच सर्वेषु गुणपरिणामरूपजन्यसुखसंभवात् श्रीकृष्णप्रीतिकामनया कर्माचरणं शास्त्रार्थः सम्पद्यते। ईश्वरे जन्यज्ञानानभ्युपगमे "तदैक्षत बहुस्यां प्रजायेये"ति ईश्वरेक्षणबोधकश्रुतिर्विरुध्येत, बहुत्वमुपाधिबहुत्वेन निवहति। जन्माद्युपाधिमन्तोऽपि शिवादयो जीवा न, किन्तु ईश्वरा एव—इति।

ईश्वरभजनमप्येतन्मते न निश्श्रेयसाय कल्प्यते। न चेश्वरस्य मनोलक्षणान्तःकरणवत्त्वेन तस्य जीवत्वं दुर्वारमेव, अन्तःकरणावच्छिन्नचैतन्यस्यैव जीवत्वात्, तदुक्तं "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इति। कार्यमन्तःकरणमुपाधिविशेषणं यत्रेति व्युत्पत्त्या कार्योपा-

(१) प्रीतिवाद–विष्णुप्रीतिवादयोः क्वचित् क्वचिच्छब्दस्य वैलक्षण्येऽपि अर्थस्य तदभावादैक्यं प्रतिभाति। सम्भवति च लेखकवि[illegible] शब्दभेद इति निष्प्रांता।

पदमन्तःकरणावच्छिन्नचैतन्यार्थकम् । न च ईश्वरे मनोऽनभ्युपगमे वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रित" इति श्रीकृष्णस्य मनोबोधकं कथं विरुध्येतेति वाच्यम् । तत्र मनःपदस्य भावार्थकासुप्रत्ययान्तेन नु ज्ञात इत्यनेन निष्पन्नतयाऽभिसन्धानार्थकत्वान्नान्तःकरणपरं तदानीं न्तःकरणत्वासंगतेः । तत्र ब्रह्मस्वरूपे भगवति श्रीकृष्णे उपाध्यवच्छेद-न्तरेण वीक्षाङ्गपूर्वकविहाराभिसन्धेरसम्भवात् तदुपपादकस्य भग-द्विशेषणस्योपादानं—'योगमायामुपाश्रित' इति, मायात्मकोपाध्यव-च्छिन्न इत्यर्थः । एवंरीत्या सर्वत्राविरोध इति वदन्ति ॥

इति गदाधरभट्टाचार्यविरचितो विष्णुप्रीतिवादवीचिः ।

---

## अथ भक्तिमार्गवाद(१७)वीचिः ।

अथेदं विचार्यते—ननु भक्तिमार्गे माहात्म्यज्ञानजननहेतुतयाऽऽनुकू-ल्येनोक्तः कोऽसौ ब्रह्मवादः ? उच्यते—"एकमेवाद्वयं ब्रह्म, पुरुष एवेदं सर्वं, ऐतदात्म्यमिदं सर्वं, स वै सर्वमिदं जगदि"त्यादिश्रुतिभिः प्रप-ञ्चरूपेणापि पूर्णप्रसन्नस्य स्वस्याद्वयत्वेन तदतिरिक्तस्याभावात् स्वस्य क्रीडार्थमाधारत्वेन प्रपञ्चरूपं सम्पादयितुं तद्रूपेणाविर्भूतो भगवानेवेति श्रुतितात्पर्यरूपः । ननु भगवत एव विलक्षणाभ्यां रूपाभ्यां द्वैतापत्तिरिति चेत्, न, "नेह नानास्ति किंचने"त्यग्रिमश्रुत्या तद्वैलक्षण्यनिषेधात् । त-त्पर्यस्तु इह सर्वरूपतयाऽद्वये ब्रह्मणि प्रपञ्चरूपेऽपि सच्चिदानन्दतयैकरूपं वस्तुजातं नाना न किन्त्वब्रह्मदशायामविद्यया भासत एवातो न वैल-क्षण्यम् । अत एव वाचारम्भणश्रुतिर्विकाराणां स्वदोषेण प्रतीतानां मि-थ्यात्वं च वस्तुत्वेन सत्त्वं चाह । ननु वस्तुनोऽतथात्वे कथं तथा प्रतीति-रिति चेत्, न, मूर्तामूर्त्तादिनानात्वप्रतीतावप्येकरूपत्वेन वस्तुन-स्तथात्वाभावात् । अत एव न ब्रह्मविदां तथाप्रतीतिः, स्वरूपमात्रदृष्टि-त्वात् । ये पुनर्बहिर्दृष्टयस्तेषामेव तथाभानान्न वस्तुनि तथात्वम्, तात्प-र्यन्तं विचाराभावेन तद्दृष्टेरगतत्वात्, अतएव विचारसिद्ध्यर्थकत्वेन शास्त्रसार्थक्यम् । अत एव च "अखण्डं कृष्णवत्सर्वमि"त्याचार्यवर्याः । तस्मात् सर्वरूपमद्वयं ब्रह्मेति सिद्धम् ।

नन्वेवं प्रपञ्चस्य भगवद्रूपत्वे मोक्षसाधनोपदेशेषु तस्य हेयत्वोप-देशः कथं शास्त्रे युज्यत इति चेत्, सत्यम्, स्वक्रीडार्थमेव तत्सृष्टेस्तत्र विचित्ररूपे जीवानां स्वीयत्वेनासक्तिभ्रमनिवारणाय, अन्यथा मुक्ताधि-कारिकानां भजनोपयोगितया तत्परिग्रहो न स्यात् । ब्रह्मविदां वा ब्रह्म-

प्रतीतावहेयत्वबुद्धिर्न स्यात्। अतो भ्रमादासक्तिस्तन्निवारणार्थमेव शास्त्रे तथोक्तिरिति जानीमः।

ननु तदुपास्यत्वेन वेदान्तेषु प्रपञ्चरूपमेवोपदिश्येत मूलरूपत्वात्, न च वस्तु तथैवेति वक्तुं शक्यम्, सर्वत्र प्रसिद्धोपदेशादित्यधिकरणविरोधादिति चेन्न।

वेदान्तेषु ज्ञानार्थमुपासनानिरूपणं चित्तशुद्धिहेतुत्वेन, न तु सिद्धे ज्ञाने तथाचाज्ञान् प्रत्येव प्रपञ्चरूपे सर्वाधिकृत्वज्ञानाभावेनोपासनाऽसिद्धेस्तद्भिन्नस्य तथात्वमुच्यते, सिद्धे तु ज्ञाने सर्वत्र ब्रह्मस्फूर्त्तिर्वरणे भक्तिरिति नोपासनावसर इति भेदेन पूर्वमुपास्यनिरूपणमित्यर्थः, अत एव "वासुदेवः सर्वमि"त्यादिवाक्यानि।

नन्वेवं शुद्धब्रह्मवादे जीवानामपि तद्रूपत्वेन भजनानुपपत्तिरिति चेत् न, अंशशब्देन तद्रूपता तेषामंशांशित्वेन, ब्रह्मवादे ब्रह्मणः सर्वात्मकत्वं परं तत्तद्रूपेण, "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतेः। तथाच स्वांशानां पुनः पूर्वभावसम्पत्त्यर्थमविद्यादोषनिवृत्त्यर्थं च भजनोपपत्तिरिति भावः।

ननु तथापि भजनमात्रपर्यवसायिनि पुष्टिमार्गे निवृत्त्यर्थदोषाभावात्तदनुपपत्तिरिति चेन्न। तथापि पुरुषोत्तमांशानां तेषां लीलार्थं ततो वियुक्तानां पुनः सम्बन्धेन फलानुभवार्थम्भजनस्यावश्यकत्वात्।

नन्वेवं भजनस्य साधनत्वे पुष्टिमार्गानुपपत्तिरिति चेन्न। भजनस्य तत्राभावरूपत्वेन फलरूपत्वात्तस्य साधनत्वेऽपि न क्षतिः। पुष्टिमार्गः स एव यत्र फलं स्वयमेव साधनमित्यसकृदुक्तमाचार्यैः। अतएव पूर्वं प्रादुर्भूय संयोगानुभवङ्कारयित्वा विरहेणान्तरभजनं सम्पादयितुं भगवत एव मथुरागमने रूपत्याग उच्यते।

नन्वंशत्वेऽपि जीवानान्तदात्मकत्वेनान्यूनत्वाद्भजनानुपपत्तिस्तदवस्थैवेति चेन्न। "बहुस्यां प्रजायेये"तिश्रुत्योच्चनीचभावेनैवेच्छया प्रकटने तत्र न्यूनत्वस्यापि सत्वात्।

नन्वेवमवास्तवं न्यूनत्वमायातीति चेन्न। न्यूनत्वविशिष्टस्यैव तस्याविर्भावात्।

ननु तदिच्छायाः कारणत्वानुपपत्तिरिति चेन्न। इच्छाया ह्याविर्भावकारणत्वं न स्वरूपस्यान्यथाकृतौ, तस्मान्मुक्तावपि कौस्तुभरूपेण स्थितिरिति भूषणरूपत्वेन न्यूनतायामन्यदा तथात्वे किमवाच्यमिति कैमुतिकन्यायेन तदात्मकत्वेऽपि तदंशत्वे न्यूनत्वं न स्ववास्तवमेवेति भावः। अत एव फलदशायामपि स्वरूपेण भजनस्य फलता, अन्यथा साधनत्वमेव स्यात्

त्, तथा च स्वतन्त्रभक्तिमार्गोच्छेद एव स्यात् । अत एवांशानामपरिमितानां सृष्टौ वह्निस्फुलिङ्गवन्निर्गमेपि न न्यूनता, हस्ताद्धस्तान्तरस्थिताविव सद्रूपे प्रपञ्चे स्थितत्वान्न न्यूनताशङ्कापीत्यर्थः ॥

नन्वेवं जीवानां सहजह्यंशत्वे देवासुरविभागस्तेषु कथमिति चेत् । अत्र वदामि—भगवान् भेदेन क्रीड़ार्थं प्रपञ्चरूपमात्मानमाविर्भावयति, तत्रायं प्रकारः सच्चिदानन्दं ब्रह्म, तस्य च धर्म्मरूपमेतत्त्रितयात्मकमक्षरं, तस्य च चिदंशा जीवाः क्रीड़ार्थं पृथगिच्छया कृताः, अन्यथा वैचित्र्याभावे क्रीडैव न स्यात् । अत एव जड़जीवान्तर्यामिष्वेकैकांशतिरोभावस्तथेच्छा च । अतः समुदितरूपस्य पृथक्करणं क्रीडार्थं, तत्र मूलरूपेण क्रीड़ा बन्धमोक्षाभ्यामेव, ततो न लीलानित्यत्वसिद्धये बन्धमोक्षावपि नित्यौ वाच्याविति देवासुरविभागः ।

ननु तथापि किं देवत्वमसुरत्वं चेति चेत् । उच्यते-सृष्टौ मायाशक्तेः पृथक्करणे तत्परिगृहीतत्वमसुरत्वम्, अपरिगृहीतत्वं च देवत्वमिति विवेकः, भगवदंशत्वेऽपि मोहार्थं सृष्टौ पृथग्भूतया मायया परिगृहीतत्वादसुराणां सम्पुटनिःसारितस्य चौरहस्तपतितस्योपायसहस्रैरप्राप्यस्य द्रव्यस्य सम्पुटप्रवेशाभाव इव पुनर्भगवति प्रवेशाभावः । देवानान्तु करकलितरत्नस्य समीकृतस्य पुनः सम्पुटप्रवेश इव भवति भगवति प्रवेशः । अत एव सृष्टिमात्रमसुराणां भगवतो माययैव । तत्कृतमोहेन ज्ञानभक्तिरूपशक्तिद्वयभार्याभावेन सायुज्यासम्भवात्, अत एव भगवता "मामप्राप्यैवे"त्युक्तम्, तयोरेव तत्प्राप्तिहेतुत्वेन तेषु तदभावात्, तथाच पुरुषांशजीवस्य स्त्रियां प्रवेशे तद्गृहीतस्य तस्य पुनः पुरुषाप्रवेश इव तेषां न भगवति प्रवेशः । तथापि पुत्र इव तत्रापि व्यवहारो लोके वेदे च भगवदंशत्वमादायैव । एतेन प्रकृतिसम्बन्धांशत्वमपि व्यावहारिकमिवाभूदिति निरूपितम् ।

ननु तथापि प्रकृतेस्तच्छक्तित्वेन तदभिन्नाया आनन्दरूपत्वेनैव तत्र प्रविष्टानामानन्द एवेति न कथं तत्प्राप्तिरिति चेन्न । प्राकट्याभावान्न तेषामानन्दगन्धोऽपीति बुध्यस्व, अन्यथा भक्तानामिवानन्दरूपदर्शने देवेतराणामप्यानन्दानुभवस्स्यात्, अतस्तद्रूपाप्राकट्यमेव तत्रेति मन्तव्यम् । अत एव "मम मायेति, राक्षसीमासुरीं चैवे"ति वाक्यद्वयबोधितसम्बन्धतदभावाभ्यामेव भगवता देवासुरमाययोर्भेद उक्तः । मोहोऽप्युभयत्र कार्यभेदेन भिन्न एव एकत्र मोक्षार्थोऽपरत्र च बन्धार्थ इति बोध्यम् । अत एवासद्रूपत्वबोधनाय क्रूरत्वार्थं राक्षसीत्वमप्युक्तम्, तेषां सहजक्रूरत्वात् उपाख्याने तेषु लक्षणत्वेन दयाभावप्रतिपादनात्, अत एव

"विना पशुध्नादि"ति भागवतेऽपि लक्षणं तेषां तदेवोक्तम् । कार्या-
रम्भावाय मोहिनीत्वमप्युक्तम् ।

ननु प्रकृतः प्रलये, भगवति लये तद्द्वारा तेषामपि लयात्परम्प-
भगवत्सम्बन्धे कथं न तदानन्दानुभव इति चेन्न । प्रलये तत्सम्बन्धे-
व्यवधानेन तदानन्दाननुभवात्, अन्यथा प्रलयमुक्त्योर्न भेदः स्यात्,
यस्यैव मुक्तित्वे मुक्त्यर्थकसाधनानुष्ठानवैयर्थ्यापत्तेः, नहि कोऽ
बालिशः प्रलयाय यतते, अतो मुक्तिर्भिन्नैव स्वरूपानन्दानुभवरूपा,
यस्तु कर्मीणामिवोदरवर्त्तित्वमात्रं स्वविषयानुभवश्च, न तावतानन्द
भवः, तस्य भक्तिसाध्यत्वात् । सा च भक्तिस्नेहरूपेति तदानीं भगव-
दयस्थितिरेव । अत एव लक्ष्म्यादीनां तत्रैव स्थितिः । अत एव "सा
वो हृदयं ममे"त्यादिवाक्यानि । जयदेवोऽपि "राधामाधाय हृ
इत्युक्तवान् । अतः प्रलये निद्रायामिवानेकजन्मक्लेशापाय एवेति
सुस्थम् ।

निजाचार्यानुकम्पातः संशयोऽयं निराकृतः ।
हरिदासेन तुष्यन्तु तेन ते स्वामिनो मम ॥

इति विद्वद्वर श्रीहरिदासविरचितो भक्तिमार्गवाद(१७)वीचिः समाप्तः

## अथ (१)नित्यसुखवाद(१८)वीचिः ।

ईश्वरः सुखवान्न वेति विप्रतिपत्तिः । अत्र प्राञ्चः—ईश्वरो न सुख
सुखसामग्र्यभावात्, तथाहि-धर्मात्सुखमधर्माद्दुःखमिति दर्श-
सुखत्वेनैव धर्मत्वेन लाघवात्कार्यकारणभाव इति धर्माभावात् ईश्वरे
सुखम् । न च वाजपेयादिजन्यविजातीयापूर्वस्य विजातीयस्व-
र्गहेतुत्वकल्पनात् सामान्यतः सुखत्वेन धर्मत्वेन कार्यकारणभावे
मानाभाव इति वाच्यम् । "यद्विशेषयोः कार्यकारणभावो बाधकं वि
तत्सामान्ययोरपी"ति व्याप्तिबलात्तत्सिद्धेः, स्वव्यापारद्वारा वा
यादेरेव विलक्षणसुखादिजनकत्वेनातिप्रसंगभङ्गे वाजपेयजन्यविजा-
धर्मत्वेन विजातीयस्वर्गत्वेन हेतुत्वे मानाभावाच्च । न च वाजपेया-
विहितत्वेनैव रूपेण स्वर्गजनकत्वं, वाजपेयजन्यविजातीयापूर्वाणां
लाघवात् समवायेन विजातीयस्वर्गजनकत्वमित्यतिप्रसङ्गभङ्ग
स्वव्यापारद्वारा वाजपेयादीनां विजातीयस्वर्गहेतुत्वे व्यापारत्वा-
वेशे गौरवम् । न चैवंसति विजातीयापूर्वाणां तत्त्वेन हेतुत्वे विनिग-

(१) यद्यप्येष वादो न्यायशास्त्रप्रतिकूलः तथापि उपादेयतया प्रीतिसङ्कलिते
सन्निवेशित इति । एवमग्रेऽपि बोध्यम् ।

विरहः धर्मत्वेनापि तत्सम्भवादिति वाच्यम् । वाजपेयेन यजेतेत्यत्र तदुपस्थापितवाजपेयत्वादिनैव हेतुत्वम् , तत्र वेदेनेष्टसाधनत्वबोधस्य विनिगमकत्वात् । दण्डो घटकारणमित्यादिपदात् दण्डत्वेनैव-रूपेण घटकारणत्वबोधस्यानुभवसिद्धत्वात् स्वव्यापारद्वारा इत्यस्य सम्बन्धेपर्यवसानेन सम्बन्धगौरवस्य बहुतरकार्यकारणभावेषु कल्पना-पत्तेरिति वाच्यम् । तत्रापि व्यापारत्वप्रवेशात् विजातीयापूर्वत्वेनैव सम्बन्धत्वात् , नहि समवायापूर्वयोरण्णुरपि लाघवगौरवविशेषः ॥ न च 'नित्यं विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मे'त्यादिश्रुतिभिरीश्वरे आन-न्दस्यबोधात् सिद्धिरिति वाच्यम् । तत्रानन्दपदेनानन्दजनकस्यैव बोध-नात् , विज्ञानानन्दयोर्ब्रह्मणश्चभेदबोधस्य श्रुतिस्वरससिद्धस्य चेश्वरे नि-त्यसुखस्वीकारेऽप्युपपादयितुमशक्यत्वाच्च । न च ज्ञानानन्दयोरभेदबा-धादेव नित्यज्ञानानन्दवत्त्वे लक्षणेति वाच्यम् । तथासति पूर्वरीत्याऽऽन-न्दजनके दुःखाभाववति वा लक्षणेत्यस्य वक्तुं शक्यत्वादित्याहुः ।

नवीनास्तु–ईश्वरः सुखवान् सुखवत्त्वेन वेदबोधितत्वात् , तथा-हि–'नित्यं विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्म' इत्यादिश्रुतयोज्ञानानन्द-योरभेदस्य बाधाल्लक्षणया ईश्वरस्य नित्यज्ञानानन्दवत्त्वं बोधयन्तीति । न च पूर्वोक्तयुक्त्या सुखत्वेन धर्मत्वेन कार्यकारणभावोऽत ईश्वरे सुखस्य बाधात् सुखजनके दुःखाभाववति वा लक्षणैव युक्तेति वाच्यम् । ता-दृशकार्यकारणभावे मानाभावात् , यद्विशेषयोरिति व्याप्तेरप्रयोजकत्वा-त् । न च लाघवात्समवायसम्बन्धेना पूर्वस्य तद्द्वारा च वाजपेया-दीनां विजातीयसुखहेतुत्वेनातिप्रसङ्गभङ्गे व्यापारस्यापूर्वस्य धर्मत्वेनैव सामान्यतः सुखत्वावच्छिन्नं प्रति हेतुत्वं वाच्यमिति वाच्यम् । विजाती-यसुखत्वावच्छिन्नं प्रति विनिगमनाविरहादपि वाजपेयजन्यापूर्वाणां हेतु-त्वात । न च वाजपेयेन यजेतेत्यत्रोपस्थितरूपेणैव कारणता बोध्यत इति-नियमे प्रमाणाभावः, तद्बोधस्यौत्सर्गिकत्वात् , अन्यथा वाजपेयेन यजे-तेत्यत्राभेदसम्बन्धेन वाजपेयविशिष्टयागत्वेन उपस्थितेनापि रूपे-णेष्टसाधनत्वबोधनं स्यात् , न चैवं सम्भवति, लाघवेन वाजपेयत्वेनैव हेतुत्वादिति, किञ्च विजातीयापूर्वसम्बन्धेनाऽपि वाजपेयादेः स्वर्गादि-पूर्ववृत्तित्वाभावेन विजातीयस्वर्गनियताव्यवहितपूर्ववृत्तिविजातीयापूर्व-जनकत्वं परिभाषिकमेव विजातीयस्वर्गकारणत्वं वाच्यम् , तथाचैतादृ-शकारणत्वकल्पनामपेक्ष्य तत्र लाघवेन विजातीयापूर्वत्वेनैव विजा-तीयस्वर्गहेतुत्वकल्पनाया उचितत्वमिति, एवञ्च यागादीनां विहितत्वेनैव रूपेण पूर्ववृत्तिभावेन हेतुत्वम् , अतिप्रसङ्गभङ्गस्तु विजातीयापूर्वाणां

विजातीयस्वर्गहेतुत्वेनैव, न च इष्टप्रयोजकत्वमात्रबोधनात् यागादेः स्वर्गादिहेतुत्वसम्भवः, येन तस्य विजातीयापूर्वसम्बन्धेनातिप्रसङ्गः सम्भाव्येतापि ।

अथैवमवच्छेदकतासम्बन्धेन सुखत्वावच्छिन्नं प्रति शरीरत्वेन कारणतायाः कल्पनादीश्वरे नित्यसुखबाधः । न च तादृशकार्यकारणभावे मानाभाव इति वाच्यम् । स्तम्भाद्यवच्छेदेन सुखाद्यापत्तिवारणाय तस्य वाच्यत्वात् । न चैवं तुल्ययुक्त्या ज्ञानत्वेन शरीरत्वेन लाघवात्कार्यकारणभावे क्लृप्ते नित्यज्ञानमपीश्वरे न सिद्ध्येदिति वाच्यम् । कार्यत्वावच्छिन्नस्य समवायसम्बन्धेनोत्पत्तिं प्रति विषयतासम्बन्धेन प्रत्यक्षत्वेन हेतुत्वात् सर्गाद्यकालीनद्व्यणुकोत्पत्तिपूर्वं जन्यज्ञानस्यासम्भवात्, नित्यज्ञानसिद्धौ जन्यज्ञानत्वस्यैवान्यथानुपपत्त्या शरीरकार्यतावच्छेदकत्वात् । न च 'नित्यं विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतिरेवेश्वरे नित्यसुखं बोधयतीति वाच्यम् । तत्र लाघववशात् क्लृप्तोक्तकार्यकारणभावबलेन नित्यसुखबाधे सुखजनकस्य दुःखाभाववतो वा लक्षणया बोधनसम्भवादित्यादेरनुक्तत्वादिति चेत् ।

शरीरत्वेन सुखत्वेनोक्तकार्यकारणभावे मानाभावात् । अवच्छेदकतासम्बन्धेन तदात्मीयविजातीयसुखत्वावच्छिन्नं प्रति विजातीयचन्दनसंयोगे हेतुत्वस्यावश्यकताया प्रागुक्तत्वात्, तादृशविशेषसामग्र्यभावेनैव स्तम्भाद्यवच्छेदेन सुखाद्यनापत्तेः । नचात्र संयोगे वैजात्यं कल्पयित्वा तादृशकार्यकारणभावकल्पने मानाभावः, तथाचावच्छेदकतासम्बन्धेन तदात्मीयविजातीयसुखत्वावच्छिन्नं प्रति संयोगत्वेन रूपेण चन्दनसंयोगस्य हेतुत्वात्, तस्य च स्तम्भादौ सम्भवादवच्छेदकतासम्बन्धेन तदात्मीयसुखाद्यापत्तिवारणाय शरीरत्वेन सुखत्वेन कार्यकारणभाव आवश्यक इति वाच्यम् । यथाकथञ्चित् चन्दनसंयोगाच्चन्दनद्व्यणुकसंयोगाद्वा विजातीयसुखानुत्पत्तेः विजातीयचन्दनसंयोगत्वेन हेतुत्वस्यावश्यकत्वात्, स्वीयशरीरचन्दनसंयोगाच्छरीरावच्छेदेन तदात्मीयसुखानुत्पत्त्या नवापि मते तादृशसुखं प्रति विजातीयचन्दनसंयोगत्वेन हेतुताया आवश्यकत्वाच्च । न चाभिमानिकसुखस्थले अहं विद्यावानित्यभिमानस्य विजातीयसुखहेतुत्वम्, कार्यकारणयोः पक्षे सम्बन्धः समवायः, एवं तत्र सम्बन्धत्वेनावच्छेदकतायाः तदात्मीयत्वस्य च प्रवेशे गौरवात्, तथा च तादृशसुखस्य शरीरावच्छेदेनैव स्तम्भाद्यवच्छेदेनापत्तिवारणायोक्तरीत्या शरीरत्वेन सुखत्वेन कार्यकारणभाव आवश्यक इति वाच्यम् । तदात्मीयतादृशसुखस्य परात्मीयशरीरावच्छेदेनापत्तिवारणाय एतादृशसुखस्यावच्छे

दकतासम्बन्धेनोत्पत्तिं प्रति तदात्मीयतादृशाभिमानविशेषस्यावच्छेदकतासम्बन्धेन हेतुत्वस्यावश्यकत्वात्, विशेषसामग्र्यभावादेव स्तम्भाद्यवच्छेदेन तादृशसुखाद्युत्पत्तेरसम्भवात्। एतेन समवायसम्बन्धेन सुखत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेनात्मत्वेन हेतुत्वान्नित्यसुखस्यासम्भवः, नित्यज्ञानप्रतिबन्दिनिरासः पूर्वमेव कृत इत्यपास्तम्। धर्मादेः सुखादिहेतुत्वेनैवात्मभिन्ने सुखाद्युत्पत्त्यसम्भवे पृथक्कार्यकारणभावे मानाभावात्, समवायिकारणत्वं तु सामान्यतः कार्यत्वेन, द्रव्यत्वेन कार्यकारणभावेनापि निर्वर्त्तते।

केचित्-आत्मविशेषगुणत्वावच्छिन्नं प्रति आत्मत्वेन लाघवाद्धेतुत्वम्। आत्मविशेषगुणत्वञ्च ज्ञानेच्छाकृतिधर्माधर्मसुखदुःखसाधारणो जातिविशेषः, स चात्मनिष्ठसमवायिकारणतानिरूपितकार्यतावच्छेदकतया सिद्धः, तत्र नित्यज्ञानानुरोधाज्जन्यत्वनिवेशश्चावश्यक इति नित्यसुखबाधः। तद्व्यक्तित्वेन हेतुत्वमते तु सुतरामात्मत्वेन सुखत्वेन कार्यकारणभावे मानाभाव-इत्याहुः।

ननु तथापीश्वरे सुखसत्त्वे किं मानम्। नच 'नित्यं विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतिरिति वाच्यम्। समानविभक्तिकपदानामभेदान्वयबोधजनकत्वबलेन ब्रह्मणि नित्यविज्ञानानन्दानामभेदस्यैव तादृशश्रुतिभिर्बोधनादिति चेन्न।

न्यायनये ज्ञानत्वसुखत्वजात्योः सांकर्यभयात् ज्ञानसुखात्मकव्यक्तेरस्वीकारात्। ईश्वरे ब्रह्मणि ज्ञानसुखाभेदस्य तन्मते बाधाद्विज्ञानपदे विज्ञानवति आनन्दपदे च आनन्दवति लक्षणास्वीकारात्, न चानन्दं ब्रह्मेत्यत्रानन्दपदस्य नपुंसकलिङ्गत्वानुपपत्तिः, आनन्दपदस्य पुल्लिङ्गत्वादिति वाच्यम्। श्रुतौ लिङ्गव्यत्ययस्वीकारात्। यद्वानन्दपदोत्तरं युक्तार्थकप्रत्ययस्वीकारात्तदसिद्धेः। न च तथाप्यानन्दपदस्य आनन्दजनके लक्षणाया अभावेऽपि युक्तार्थकप्रत्ययस्वीकारे जनकस्वरूप एव योगो मन्यतामिति वाच्यम्। जनकत्वस्य गुरुतया समवायसम्बन्धेनानन्दवत्त्वस्यैव लाघवेन श्रुत्या बोधनात्। स पुनरीश्वरनिष्ठ आनन्दो लाघवान्नित्य एव कल्प्यते, प्रागभावध्वंसकल्पने तादृशानन्तकारणकल्पने च गौरवाल्लाघवेन सुखत्वादेर्धर्मादिजन्यतावच्छेदकत्वनियमेन च तादृशानन्तप्रागभावध्वंसादिकल्पनागौरवस्य फलमुखत्वाभावात्। एवञ्चेश्वरः संयोगवान् द्रव्यत्वादित्यनुमित्या ईश्वरे संयोगसिद्धौ तत्संयोगप्रागभावध्वंसतत्संयोगकारणत्वकल्पने गौरवात् संयोगो नित्य एव सिध्यत्विति प्रतिबन्धापत्तिपरिहारोऽपि न सावकाशः क्रियाजन्यसंयोगस्थले सामान्यतः क्रियात्वेन

संयोगत्वेन घटात्मसंयोगत्वेन वा कार्यकारणभावकल्पनाच्चेनैवेश्वरसंयोगोपपत्तौ नित्यस्य संयोगान्तरस्येश्वरे कल्पने गौरवात् ।

परे तु नित्यं विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतयो विज्ञानानन्दविशिष्टस्य ब्रह्मणो नित्यत्वं बोधयन्तो विशेषणस्य विज्ञानसुखादेरपि नित्यत्वं बोधयन्ति, विशेषणस्य विशेष्यान्वयिनाऽन्वयस्य श्रुतौ व्युत्पन्नत्वात् । अतएवारुणयैकहायन्या गवा सोमंक्रीणातीत्यत्र श्रुतावारुण्यस्यापि गोविशेषणतया क्रयसाधनत्वबोधः । अधिकं शब्दमणयालोकविस्तारे विवेचयिष्याम इत्याहुः ।

एवञ्च 'आनन्दं ब्रह्मणो रूपमि'त्यत्र आनन्दपदे लिङ्गव्यत्यय एव स्वरूपबाधको हेतुः । आनन्दपदे लक्षणया आनन्दवतो बोधने लिंगव्यत्ययेन शक्त्या बोधने तु युक्तार्थकप्रत्ययस्वीकारेणोपपत्तिरित्याहुः ।

इति ईश्वरे नित्यसुखव्यवस्थापनवाद(१८)वीचिः ॥

## अथ रघुनाथशिरोमणिकृतः कृतिसाध्यतानुमानवाद (१९) वीचिः ।

पाको मत्कृतीति। अथ अत्र स्वेच्छाधीनमत्कृतिसाध्यत्वं साध्यं हेतुश्च स्वचिकीर्षाप्रयोजकेच्छाविषयसाधनत्वं, तेन श्रमनाशरूपेष्टसाधनश्वासप्राणपंचकसंचारे च न व्यभिचार इत्युच्यते, तदा तत्रापि जीवनेच्छायाः स्वचिकीर्षास्वरूपयोग्यत्वादुक्तव्यभिचारतादवस्थ्यम् फलापधानस्य च प्रागज्ञानात् । यदि चेच्छाधीनमत्कृतिसाध्यत्वं साध्यम् इदानीं मत्कृतिं विनाऽसत्त्वे सति ओदनसाधनत्वं हेतुः तेन न प्राणपंचकसंचारे व्यभिचारः स्वरूपसदिच्छाविषयौदनादिसाधनत्वधिय एव प्रवृत्तावुपयोगित्वात् स्वरूपसदिच्छाविषयत्वबोधनाय इष्टत्वेनौदनादिनिर्देश इत्युच्यते, तदा तत्रापि श्रमव्यावृत्तसाध्यलाभे श्रमनाशरूपेष्टसाधने प्रवृत्त्यापत्तेः साध्ये स्वेच्छाधीनत्वस्यावश्यकत्वे हेतावपि नान्तरीयके व्यभिचारितया तत्प्रवेशे व्यर्थविशष्यता चेति, तस्मात् सत्यन्तमेव हेतुः इदानींकृतिसाध्यत्वमेव साध्यम् ।

केचित्तु इष्टसाधनत्वलिङ्गककार्यताज्ञानायोक्तसाध्यं बलवदनिष्टाननुबन्धीष्टसाधनत्वेन फलान्यत्वे सति बलवदनिष्टाननुबन्धित्वेन वा विशेषयन्ति । ननु यद् वस्तुगत्या बलवदनिष्टाननुबन्धीष्टसाधनं तत्र व्यतिरेकभ्रमादसत्त्वेऽपि वा तद्भ्रमे प्रतिबन्धकाद्यत्र प्रवृत्तिस्तत्र व्यभिचारः । मैवम्, तस्यालीकतया तत्र हेत्वसत्त्वात् । अत एव न तदर्थमिष्ट-

साधनत्वविशेषणं तत्र प्रवृत्त्यभावे फलोपधानमेव नास्तीति, प्रतिबंधकाभावे सतीति वा विशेषणं देयं हेतोः, साध्यं च कृतिफलोपधानम् ।

केचित्तु इदानीं स्वेच्छाधीनमत्कृतिसाध्यत्वं साध्यं, हेतुश्चेदानीमिच्छाधीनकृतिं विनाऽसत्त्वे सति इष्टसाधनत्वम्, कालिकवीप्सादरात्त्तच नान्तमध्यस्थितदेववशसिद्धमीनादौ व्यभिचारः । स्वविशेषणवत्ताज्ञानसमानकालीनस्य कार्यताज्ञानस्यैव प्रवर्त्तकत्वात्, एतद्धेतुजन्यत्वनियमस्य च तत्र मानाभावेन यदीयान्यथासिद्धया कृत्या नेष्टान्तरं तस्यैवात्र मत्पदेन विवक्षितत्वात् क्वचित्तस्याप्युक्तानुमानस्येष्टत्वात् । तृप्तभोजने व्यभिचारवारणाय इष्टसाधनत्वम्, तादृशमवच्छेदकं वा सिद्धमधुभोजनजन्यसुखत्वादि उक्तमधुविषसंपृक्तभोजनजन्यसुखेऽपीति तादृशभोजने व्यभिचारवारणाय बलवदित्यादि । साधनत्वं च फलोपधानं वाच्यम्, अन्यथा संजातबाधभोजने प्रवृत्त्या इष्टफलायउपस्थिते व्यभिचाराभावादेतद्वैयर्थ्यापातात् ।

यद्वा स्वेच्छाधीनमत्कृतिं विनाऽसत्त्वं प्रथमदलार्थः, तेन न नान्तरीयके व्यभिचारः । भावियौवराज्येप्येतद्वारणाय इदानीमिष्टसाधनत्वं, इष्टसाधनत्वं च फलोपधानगर्भितं विवक्षितम्, इदानीं कस्यापि फलस्यानुपधानादिति प्राहुः ।

अत्र च प्रथममते संजाततृप्तस्याप्रवृत्त्या तदनुत्पादात्कुत्र व्यभिचारवारणाय विशेषणमिति विभावनीयम् । अत एवेदानीं मत्कृतिसाध्यत्वं साध्यं, साध्यत्वं च तच्छक्यत्वं, तच्च गुरुनये पदार्थान्तरघटितधर्मान्तरम्, अन्यमते च कृतिविशिष्टकारणतानिरूपकत्वं स्वरूपसंबंधविशेषः तच्च सिद्धभाविराज्यव्यावृत्तबाधावतारेपि, तथा च तत्र व्यभिचारवारणाय बलवदित्यादि ।

अत्र ब्रूम इति । प्राभाकरमाशयमिति शेषः । ननु असिद्धे पाके कथमेतत्कालवृत्तित्वघटितज्ञानं संभवति बाधात् । अत्र कश्चित् विशेषरूपेण बाधेऽपि सामान्येन रूपेण तदभावादिदानींतनत्वघटितोक्तहेत्वसंसर्गाग्रहादिदानींकार्यताधीर्भाविपाके । यद्वा विद्यमानपाक एव उक्तहेतुसामानाधिकरण्यविशिष्टपाकत्ववानयमिति ज्ञानं पक्षधर्मताज्ञानात्मकमनुमानं जनयति, तत्र सामानाधिकरण्यं भाविपाकघटितमपि संसर्गमर्यादया भासत इति । तत्र पाकत्वेन प्रकारेण सिद्धपाके पाकः सिद्ध इति ग्रहे विरोधिनि सति कृतेरसंसर्गाग्रहासम्भवात् । असंसर्गाग्रहादनुमितिरित्यप्यपसिद्धांतात् व्याप्यतावच्छेदकप्रकारेण हेतोः पक्षतावच्छेदकसामानाधिकरण्यग्रहं विनानुमित्यनुत्पादाच्च ॥ इदानींकृतिव्यतिरेका

सत्वघटित हेत्वप्रसिद्धेः तत्सामानाधिकरण्यविशिष्टपाकत्वस्य ज्ञानासंभवात् तत्पाकस्यानुपस्थितत्वाच्च तद्घटितसंसर्गज्ञानासंभवात् । अथ पर्वते धूमो नास्तीति ज्ञानेऽपि पर्वतत्वं वह्निव्याप्यसमानाधिकरणमत्रेति ज्ञानादनुमित्यापत्तेश्च ।

अन्यस्तु पाकसाध्यमिष्टमितीच्छाया भाविपाकमादायोत्पत्त्या ततः पाकसाध्यमिच्छामीतिज्ञानाद्वस्तुतो भाविनः पाकस्य पाकत्वेन प्रसिद्धिः, एवं च यथोक्तहेतुज्ञानं भाविपाक एव प्रसिद्धं, पाकमित्यस्य विशेषरूपेण ज्ञातमित्यर्थः पाकत्वेन प्रसिद्धस्य पाकत्वादिविशेषरूपेण ज्ञातस्येत्यर्थ इत्याह । तदपि मन्दम् । भाविपाकस्य इच्छाविषयत्वानुपपत्तेः । इच्छाविषयत्वेऽपि इच्छामीति प्रत्यक्षे तदभावात् । अलौकिकप्रत्यक्षानंगीकारात् ज्ञानान्तरस्य तद्विषयकस्य सामग्र्यभावात् । अपरस्तु कालगर्भव्याप्तिग्रहः कस्यचिन्मत एवोक्तः । वस्तुतस्तदघटितव्याप्तिग्रह एव, तथाच हेतुज्ञानात्सिद्धपाकं सिद्धत्वेन ज्ञातं विहायासिद्धं पाकमादाय कृतिसाध्यत्वं सिद्ध्यति नहि सिद्धत्वं यदा यत्र तदा तत्र तन्मतेऽसिद्धत्वं साध्यत्वं वा, एवं च कृतिसाध्यत्वं कृतौ सत्यामग्रिमक्षणे सत्वं सिद्ध्यदग्रिमक्षणं इदानींरूपं पक्षधर्मताबलाल्लाघवाच्चादाय सिद्ध्यति । न च कथमिदानीन्तनत्वं प्रकारः मन्मते एकविशेषबाधेऽपरविशेषप्रकारकत्वनियमात् । यद्वा सर्वत्र कालो विनाबाधकं भासते यन्मते तन्मते न दोष इत्याह । तत्र कालगर्भव्याप्तेः कृतत्वात् तद्ग्रहं विना इदानींतनत्वप्रकारकज्ञानानुपपत्तेः। यथाहि सिद्धपाके सिद्धतया ग्रहेपि मत्कृतिं विना असत्त्वघटितं लिङ्गं ज्ञायते कालान्तरपुरस्कारात् तथाऽतीतकालमादाय कृतिसाध्यत्वसिद्ध्याऽर्थान्तरं स्यात् तावतापि चरितार्थत्वात् । उपस्थितायाः कालान्तरीयकृतिसाध्यतायाः कल्पने लाघवात् । पाकान्तरस्येदानींकृतिसाध्यतायाश्चानुपस्थितायाः कल्पन एव गौरवात् । नहि यत्र यदा सिद्धत्वं गृह्यते तत्र तदा साध्यत्वमसिद्धत्वं वा गुरुनये न गृह्यते किन्तु सिद्धतावस्थाविशिष्टे नासिद्धत्वं साध्यत्वं वा गृह्यते, कालभेदमादाय ग्रहे स्वरूपमात्रग्रहे चाविरोधात् ॥

अथ कालघटितव्याप्तावपि इदानींकालस्य पक्षतावच्छेदकतया तदवच्छेदेन कृतिसाध्यत्वं सिध्यद्वर्त्तमाने बाधाद्भाविपाकमादाय सिद्ध्यतीति चेत् । एवमपि कृतेः इदानीन्तनत्वालाभात् तदुपरक्तज्ञानं हि प्रवर्त्तकमिति व्यवस्थापितम् । नच व्यापकवद् व्यापकतावच्छेदकघटकस्यापि पक्षतावच्छेदककालोपरागेण सिद्धिः पर्वतोयमिदानीमारण्यवह्निमानित्यनुमित्यनन्तरमपि किमिदानीमरण्यरस्ति भवति संशयात् । इदानीं

साध्यताधीश्च हेतुः । कृत्यनन्तरसत्त्वस्वरूपमिदानीमिति ज्ञानं हि विरोधेव विषयतया संभवति इदानीन्तनकृत्यैव कालान्तरे सेत्स्यतीति ज्ञानात् प्रवृत्तिस्थले व्यभिचारश्च । किन्त्विदानींकृत्या एतदग्रिमसमये साध्यमिति ज्ञानं प्रवर्तकं, तस्मात् प्रवृत्त्युपयोगिनः कृतेरिदानीन्तनत्वस्य लाभाय कालगर्भाव्याप्तिरुक्ता कथमुक्तानैकदेशितेन नेया ।

मैवम् । वस्तुगत्या क्रियमाणपाक एव इदानीन्तनकृतिं विनाऽसत्त्वयामासीदिष्टसाधनं चेति ज्ञानसम्भवात् । साध्यएतदग्रिमकालीनत्वं तु पक्षतावच्छेदकैतदग्रिमकालसंसर्गमर्यादया लभ्यते । क्रियमाणोहि पाकः एतदग्रिमकालस्थायी, अन्यथा क्षणिकत्वापत्तेः । तथाच पक्षतावच्छेदकैतदग्रिमकालावच्छेदेन साध्यं सिध्यद्वर्तमाने बाधाद्भाविपाकमादाय पर्यवस्यतीति । न चाग्रिमकालो न ज्ञातः, उत्पत्स्यमानः पाकः एतत्क्षणविरोधिकालावस्थायी क्रियात्वादित्यनेनाग्रिमकालानुमानात् । नच भाविपाकस्याज्ञानादाश्रयासिद्धिः, हेतोस्तद्वृत्तित्वाज्ञानाच्च स्वरूपासिद्धिरिति वाच्यम् । पक्षतावच्छेदकप्रकारकज्ञानस्य हेतुत्वात् । तच्च ज्ञानं तत्र तज्जातीयेवेत्यन्यदेतत् । एतत्पर्वते धूमाभावं जानतोऽपि वह्न्यनुमितिप्रसंगस्य तवापि तुल्यत्वात् । इष्यत एव एतत्पर्वतत्वरूपेण एतत्पर्वतेप्यनुमितिः । अस्तु वा तादृशज्ञानमेवानुमितिविरोधीति तुल्यं ममापि । यत्तु नानाव्यक्तिज्ञानं सामान्यतः संभवतीति । तत्तुच्छं, सामग्र्यन्तराभावात् । न च सिद्धपाके बाधबोधेप्यनुमितेरुत्पत्तावंशतो बाधोच्छेदः, यदंशे बाधस्तदंशेऽनुमितिविघटकतयैव तस्य दोषत्वात् ।

नन्वेवं भागासिद्धिर्न दोषस्तद्भागेहेतुज्ञानाभावेपि अनुमितिसामग्रीसत्त्वात् । न च वस्तुगत्या तद्भागे हेतुज्ञानं हेतुः । अतीतादावनुमित्यभावापत्तेः । नच वस्तुगत्या सकलपक्षवृत्तेर्हेतोरेव पक्षतावच्छेदकाधिकरणयत्किंचिद्वृत्तितया ज्ञानं कारणम् । एवं भागासिद्धिस्थले यद्भागे हेतोर्ज्ञानं तद्भागेप्यनुमितिर्न स्यात् । नचेष्टापत्तिः अनुभवविरोधात् । न च पक्षतावच्छेदकनानात्व एव भागासिद्धिर्दोष इति वाच्यम् । पर्वतत्वेनैव रूपेणैतत्पर्वते वह्निव्याप्यैतत्पर्वतत्वज्ञानात् पर्वतान्तरे तत्पर्वतत्वाभावं जानतोऽनुमितिप्रसङ्गः ।

उच्यते । भागासिद्धत्वं भागे हेत्वभावः, तज्ज्ञानात्मकं च प्रतिबन्धकं साक्षादेव, यत्र पक्षतावच्छेदकैक्यं तत्र भागे हेतुज्ञानाभावे न दोषः हेतुसत्त्वादिति, तस्मादेतदपि दूषणं द्रष्टव्यमिति प्रलपितमप्यपास्तम् ।

नन्वसिद्धं साध्यं सिद्धं च साधनमिति सिद्धत्वसाध्यत्वयोर्वैयधिकरण्यात् कथं व्याप्तिग्रहः ।

मैवं स्वरूपे अवच्छेदकभेदे वाऽविरोधात्। न च कथंकालघटित-व्याप्तिग्रहः एककालावच्छेदेन विरोधादिति वाच्यम्। साधनतायामि-दानीन्तनत्वासंबंधात्।

केचित्तु कृत्यनन्तरभविष्यत्वमेव वर्त्तमानसाधारणं साध्यं, प्रसिद्धपाक एव पक्षः व्याप्तिस्तु कालाघटिता यत्त्वतत्त्वयोरननुगमात्, किंतु साध्य-त्व साधनत्वयोर्हेतुसाध्ययोरसिद्धत्वसिद्धत्वघटितत्वेनावच्छेदकभेदग्रहं विना एकत्र ग्रहासम्भवेनावच्छेदकभेदस्फोरणार्थं मूलेऽपि भेदोक्तिः न तु हेतुनिविष्टत्वेन, एवं च सिद्धे एव पाके व्याप्तिग्रहः, पक्षधर्मताग्रहोऽपि, भविष्यत्पाकलाभस्तु अतीतानागतविषयकप्रत्ययस्य वर्त्तमानकालविष-यत्वनियमात् इदानींभविष्यत्वस्य सिद्धान्त सिद्धेर्बाधात्।

यद्वा इदानीमित्यस्य पक्षविशेषणत्वात् पक्षतावच्छेदकावच्छेदेन सि-द्धेरित्येवचिन्तामणयर्थः। नच तथापि भविष्यदिदानींकालीना याकृति-स्तत्साध्यत्वज्ञानाभावात् कथं प्रवृत्तिरिति वाच्यम्। भविष्यत्पाकपक्ष-ककालवृत्तितानुमितौ प्रसिद्धबाधादनागतकालसिद्धौ कृतिसाध्यतानुमाने पक्षविशेषणेदानीमितिमहिम्नान्यकालीनकृतिसाध्यत्व बाधाद्भविष्यदिदा-नीमितिकृतिविशेषण(१)विशेषवह्निमानित्यपि परास्तम्। तत्र बाधान-वतारात्। अवतारे इष्टापत्तेः। वस्तुतो गुरुनयेऽनागतसिद्धेरनुमानात् प्रागपि सम्भवः। तथाहि पाकत्वमतीतवर्त्तमानातिरिक्तवृत्ति सकलपाक-वृत्तित्वात् मेयत्ववदित्यत्र पक्षधर्मताबलादनागतसिद्धिः। नच पाकेतर-वृत्तित्वमुपाधिरिति वाच्यम्। वृत्तिमत्त्वस्य व्यापकत्वे सम्भवति अन्य-स्य वैयर्थ्यात्। नच तथासति साधनव्यापकत्वं स्यादिति वाच्यम्। सेय-मुभयतपाशा रज्जुरिति उपाधित्वस्यैवासिद्धेरिति।

यद्वा पाकः पाकपूर्ववर्त्ती पाकत्वादित्यनुमानमेव तत्र मानम्॥

इति रघुनाथशिरोमणिविरचितः कृतिसाध्यत्वानुमानवाद-(१९) वीचिः समाप्तः॥

## अथ अधमर्णत्ववाद (२०) वीचिः।

अधमर्णत्वन्तु शोध्यत्वेनाङ्गीकृतदत्तद्रव्यग्राहकत्वे सति दत्तद्रव्य-सजातीयद्रव्यकर्म्मकस्वानुमतभाविदानप्रागभाववत्त्वम् तदेव स्वदृष्टजन-कं तन्नाशश्च तादृशादृष्टनाशकः। साजात्यञ्च न भेदगर्भम्, अतः गृहीत-दर्शितद्रव्यदातुरपि नाधमर्णत्वहानिः।

(१) अत्र पाठत्रुटिः प्रतिभाति।

केचित्तु दत्तद्रव्यग्राहकत्वे सति तत्सजातीयद्रव्यकर्मको यः पश्चाद्देयत्वेन स्वाङ्गीकारस्तज्जन्यसंस्कारवत्त्वं तत्। तादृशसंस्कारनाशकञ्च कालरोगादिवत् तत्सजातीयद्रव्यदानादीत्याहुः।

तन्न, स्मरणानाश्यभावनाख्ये तादृशसंस्कारे दानादेस्तन्नाशकत्वे च मानाभावात्।

एतेन-विजातीयादृष्टवत्त्वमेवाधमर्णत्वम्, तादृशवैजात्यञ्च ऋणग्रहणजन्यतावच्छेदकतया सिद्धम्। ऋणत्वञ्च पश्चाच्छोध्यत्वेनाङ्गीकृतगृहीतदत्तद्रव्यत्वम्, अतो मृतव्यक्तिष्वपि अधमर्णत्वव्यवहारः। तादृशादृष्टनाशकञ्च ऋणसजातीयद्रव्यदानम्, युज्यते च मृताधमर्णपितुस्तादृशादृष्टनाशाय पित्रर्णपरिशोधनं पुत्रस्य-इति बालप्रलपितमप्यपास्तम्।

जीवन्मुक्तस्य प्राक्तनवशात् ऋणग्रहणे जातेऽधमर्णत्वव्यवहारो न स्यात् तत्र तादृशादृष्टासम्भवात् वासनाविरहात्। एवमृणिमुक्तपितृकपुत्रस्य पित्रर्णपरिशोधने प्रवृत्तिर्न स्यात्, नहि निष्प्रयोजनके धनव्ययसाध्ये कर्म्मणि कश्चित्प्रवर्त्तते इति। मुक्तपितृकपुत्रस्य वृषोत्सर्गादिवत् वाचनिकत्वेन कथंचित्तदुपपादनेऽपि अस्य पिताऽधमर्ण इति व्यवहारस्य सर्वजनीनस्यापलापापत्तेः। एवमपरिशोधनस्यैव उपपातकमध्यगणनात् ऋणादाने दुरदृष्टजनकत्वस्यापसिद्धान्तत्वात् ऋणादानात् पूर्वं तदुत्पादवारणस्य ऋणादानध्वंसस्य सहकारिताकल्पनेन समर्थनीयत्वात्॥ श्रीपतिदत्तधनग्रहीतुः पश्चात् तत्सजातीयधनदातुरपि तथात्ववारणाय शोध्यत्वेनाङ्गीकृतान्तं दत्तविशेषणम्। ग्रहणं विनापि तादृशप्रागभाववतः तथात्ववारणाय सत्यन्तम्। अपहारकस्य तथात्ववारणाय दत्तेति। 'तुभ्यं विद्याविशेषं पश्चात् दास्यामि' इत्यङ्गीकृत्य येन विद्याविशेषो गृहीतः तस्य तथात्ववारणाय उभयत्र द्रव्यपदम्। तादृशप्रागभावविधुरस्य दत्तधनादिग्राहकस्य तथात्ववारणाय विशेष्यदलम्। विजातीयद्रव्यान्तरकर्मकदानानुकूलप्रागभाववतो दत्तधनादिग्राहकस्य तथात्ववारणाय दत्तद्रव्यसजातीयेति। दत्तद्रव्यापहारकस्य पश्चात् तत्सजातीयद्रव्यदातुश्चोत्तरस्य तथात्ववारणाय दाने स्वानुत्तमत्वम्। भावीति स्वरूपकीर्त्तनम्। परिशोधनात् परमपि तदत्यन्ताभावसत्त्वात प्रागभावनिवेशः। यत्र परिशोधनमप्रसिद्धं तत्रापि तत्प्रागभावस्वीकारान्नानुपपत्तिः।

वस्तुतस्तु तदुद्देश्यकत्वाभावविशिष्टस्य ऋणदानध्वंसस्य दुरदृष्टजनकत्वम्, वैशिष्ट्यञ्च स्वाश्रयपरिशोधनवद्वृत्तित्वसम्बन्धेन। अथवा स्वदत्तशोध्यत्वेनाङ्गीकृतधनग्राहकत्वस्वोद्देश्यकपरिशोधनवद्वृत्तित्वस-

स्वन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वोभयसम्बन्धेन किञ्चिद्व्यक्तिविशिष्टर्णदानध्वंसस्य तथात्वमिति तु सारम्। तदुद्देश्यकपरिशोधनस्याप्रसिद्धिस्थलेऽन्योद्देश्यकशोधनमादाय सम्बन्धप्रसिद्धिरिति ॥

इत्यधमर्णवाद (१९) वीचिः समाप्तः ।

## अथ स्नानवाद(२०)वीचिः ।

"यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
स्नातोऽधिकारी भवति दैवे पैत्रे च कर्मणि ।"

इत्यादिवचनप्रतिपादितं किं तावत् स्नानम्? इति चेत्। तत्रैकदा स्वीयबहिःसर्वाङ्गेन जलसंयोगः स्नानम्। तदर्थश्च एकक्षणावच्छिन्नस्वीयसकलबहिरङ्गानुयोगिकजलप्रतियोगिकसंयोगः स्नानमिति यावत्। तत्रैकाङ्गजलसंयोगनाशानन्तरमपराङ्गजलसंयोगः पुनस्तन्नाशानन्तरमपराङ्गजलसंयोग इति रीत्या यत्र सकलाङ्गजलसंयोगस्तत्रायं स्नातीति व्यवहारवारणाय एकक्षणावच्छिन्नेति संयोगविशेषणम्। यद्यपि तादृशसंयोगव्यक्तीनां नानात्वात्प्रत्येकं तेषां स्नाधात्वर्थत्वे गौरवात् तादृशसंयोगकूटस्यैव तथात्वे लाघवमिति तत्र तादृशकूटविरहादेव स्नातीति व्यवहारासम्भवात् कथमेकक्षणावच्छिन्नत्वं संयोगविशेषणम्, तथापि क्रमोत्पन्नविद्यमानजलसंयोगव्यक्तीनां तथात्ववारणाय एकक्षणावच्छिन्नोत्पत्तिकत्वार्थकमेकक्षणावच्छिन्नेति संयोगविशेषणमावश्यकम्। न च तत्रेष्टापत्तिः अन्यथा पादादिमध्यदेशपर्यन्तजलसंयोगानन्तरशीर्षाद्यपराङ्गजलसंयोगेऽपि स्नातीति व्यवहारो न स्यात् तादृशसंयोगव्यक्तीनामेकक्षणानुत्पत्तिकत्वादिति वाच्यम्। तादृशसंयोगानां तत्र धारावाहिकत्वेऽपि एकक्षणोत्पन्नतादृशसंयोगकूटमादायैव तत्र तादृशप्रयोगसम्भवात्, यत्र विनश्यदवस्थकारणेन संयोगो जनितः तत्र तादृशव्यवहारस्येष्टत्वात्। न च क्षणविलम्बस्य शपथनिर्णेयत्वात् परक्षण इव पूर्वक्षणेऽपि तादृशव्यवहार इष्ट एव, एवं स्नानाव्यवहितप्राक्क्षणवृत्तिकृतिमादाय स्नातीति व्यवहारः सर्वसम्मतः, अन्यथा स्थाल्यारोपणकालेऽपि पचतीतिव्यवहारो न स्यादिति वाच्यम्। तथाप्येतत्क्षणे स्नातीति प्रयोगवारणाय तत्र तद्विशेषणस्यावश्यकत्वात्। नचैवं तुल्ययुक्त्या पाकारम्भकाले पचतीति व्यवहारो न स्यात् इत्याशङ्कनीयम्। तत्र विक्लित्यवच्छिन्नव्यापारकृत्यपाकरण तदनुकूलकृतेर्वा तदानीमबाधात्। अत्र

तादृशसंयोगकूटस्य एतत्लक्षणावृत्तित्वाभावात् न तादृशव्यवहार इति वैलक्षण्यात् अगत्या तथैव व्युत्पत्तेः स्वीकारात् इति । पुरुषान्तरीयाङ्गमादाय तादृशव्यवहारवारणाय स्वीयत्वमङ्गविशेषणम् । तथाविधकतिपयाङ्गजलसंयोगकूटस्य तथात्ववारणाय साकल्यमङ्गविशेषणम् ।

ननु सकलपदस्य व्यापकत्वार्थकतया स्वीयवहिरङ्गत्वव्यापकजलसंयोगस्यैव स्नानत्वोक्तौ दोषाभावात् कूटनिवेशनमनर्थकम्, प्रत्युत तादृशाङ्गत्वस्य जलसंयोगकूटत्वावच्छिन्नव्यभिचारितया स्नानमात्रेऽसम्भवापत्तिश्च । न च सकलपदस्य व्यापकत्वार्थकत्वेऽपि कूटत्वानिवेशे तादृशकतिपयसंयोगानां संयोगत्वेन गुणत्वादिना वा व्यापकत्वसंभवात् तत्र स्नातीति व्यवहारापत्तिरिति वाच्यम् । जलप्रतियोगिकसंयोगत्वावच्छिन्नव्यापकताया एव निवेश्यत्वात् इति चेन्न ।

तादृशव्यापकताश्रयसंयोगानां विनिगमनाविरहेण प्रत्येकं स्नानपदार्थत्वे गौरवात् कूटस्यैव तथात्वौचित्यात् इत्युक्तप्रायम् । तादृशसंयोगानामङ्गत्वव्यभिचारित्वाद्बहिरित्यङ्गविशेषणम् ॥

ननु जलसंयोगत्वमत्र जलप्रतियोगिकसंयोगत्वं जलानुयोगिकसंयोगत्वं वा ? आद्येऽङ्गमात्रक्रियाजन्यतादृशसंयोगासंग्रहः । न च तदानीं जलादेरपि क्रियावत्त्वमावश्यकं, प्रवाहरहितजले क्रियाराहित्यस्य प्रायशः संभवात्, द्वितीये ऊर्ध्वदेशाद्गलितविपुलजलधारया यत्र सर्वाङ्गीणसंयोगा एकदैव जनिताः तत्र तादृशसंयोगानां स्नानत्वस्य सर्वसम्मतत्वात् तदसंग्रहः तदानीमङ्गानां क्रियाभावेनाङ्गप्रतियोगिकत्वासम्भवात् इति चेन्न ।

प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन जलविशिष्टसंयोगत्वेनैव तेषां निवेश इति ॥ न चैवं "मान्त्रं भौमं तथा दिव्यमि"त्यादिवचनेन स्नानस्य नानाविधत्वाभिधानात् तत्राव्याप्तिरिति वाच्यम् । तेषां स्नानप्रतिनिधित्वेन वैदिककर्माधिकारिताप्रयोजकत्वव्यवस्थापन एव तात्पर्यात् ॥

ननु जलेजन्तूनामवगाहनसत्त्वेन स्नातीति व्यवहारापत्तिः । न चादृष्टप्रयोजनकत्वमपि तत्र विशेषणं देयमिति वाच्यम् । तदवगाहनस्याप्यदृष्टप्रयोजकत्वात्, परन्तु तेषां स्नानं न विधिविषयः विशेषानुक्तौ विधिवाक्यस्य मानवमात्रपरत्वात् । "त्वत्तीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः" इति स्तवेनापि तादृशसंयोगजनितादृष्टभागिताया अपि अर्थतः प्रतिपादनात् तद्विशेषणेनापि तस्य वारणासम्भवात् । न च वैदिककर्माधिकारिताप्रयोजकत्वेन तादृशसंयोगविशेषणात् नैष दोषः, तेषां वैदिककर्माधिकारित्वस्य शास्त्राप्रतिपादितत्वेन तदीयसंयोगानां तदप्रयोजकत्वात् इति वाच्यम् । यादृशस्नानानन्तरं किमपि वैदिककर्म

नानुष्ठितं तादृशस्नानासंग्रहप्रसङ्गात् इति चेन्न ।

'अवगाहते, मज्जती'तिवत् 'स्नाती'तिव्यवहारस्य इष्टत्वात्, परन्तु तेषां स्नानं न विधिविषयः विशेषानुक्तौ विधिवाक्यस्य मानवमात्रपरत्वात्, अन्यथा तुल्यतुक्त्या पश्वादीनामपि स्नानानभ्युपगमे तत्प्रतिपादकशास्त्रस्य उन्मत्तप्रलपितत्वापत्तेः ।

केचित्तु पापनाशा-दृष्टान्यतरप्रयोजकत्वविशेषणमपि तत्र देयम्, जलजन्तूनामवगाहस्य तदप्रयोजकत्वात् न तत्संग्रहः, नित्यस्नानस्यापि अदृष्टविशेषात्मकवैदिककर्माधिकारित्वप्रयोजकत्वात् नित्यकर्मणोऽपि फलजनकत्वस्य न्यायसम्मतत्वाच्च न तदसंग्रहः । अस्पृश्यस्पर्शनानन्तरस्नानस्यादृष्टाप्रयोजकत्वेऽपि पापविशेषनाशप्रयोजकतया न तदसंग्रहः । न चाशौचादिकालीनवैधस्नानस्यासंग्रहः, इष्टत्वात् । न च तत्र स्नातीतिव्यवहारः कथं लोकानामिति वाच्यम् । तत्र तादृशव्यवहारस्याप्रामाणिकत्वात्, प्रामाणिकत्वे तु स्नाधातोरवगाहनार्थकत्वेनैवोपपत्तेरित्याहुः । तच्चिन्त्यम् ।

अङ्गत्वन्तु चेष्टावत्त्वं, चेष्टात्वन्तु क्रियात्वव्याप्यजातिविशेषः, अत एव तत्तदङ्गानां प्रातिस्विकरूपेण तावदन्यतमत्वेन वा निवेशे एकाङ्गरहितस्य स्नानासंग्रह इति प्रत्युक्तम् । न चैकाङ्गरहितस्य स्नानासंग्रहस्तथापि दुर्वार एव तादृशसंयोगानां स्वीयाङ्गत्वव्यभिचारित्वात् इति वाच्यम् । स्वसमानकालीनत्वस्याप्यङ्गविशेषणत्वात् । बहिष्ट्वन्तु यद्यन्न वहिष्ट्वव्यवहारस्तत्तद्भेदकूटवत्त्वं प्रकारान्तरेण दुर्वचत्वात् । यद्यदङ्गे वहिष्ट्वव्यवहारस्तावदन्यतमत्वेन तस्य निवेशे पुनर्वहिष्ट्वविशेषणं न देयमेव । एतादृशस्नानघटकपदार्थे स्नाधातोः शक्तिर्लक्षणा वा इत्यन्यदेतदिति प्राहुः ।

नव्यास्तु वहिष्ट्वविशेषणं न देयमेव बहिरङ्गसंयोगदशायामन्तरङ्गेऽपि संयोगा जायन्ते लोमविवरद्वारा तत्रापि जलप्रवेशात्, अत एव एकदा सर्वाङ्गीणजलसंयोगः स्नानमिति देवीपुराणोक्तिरपि सङ्गच्छते इति किं वहिष्ट्वनिर्वचनेन क्षणविलम्बस्य शपथनिर्णेयत्वात् बहिरङ्गमात्रसंयोगक्षणे तद्व्यवहाराभावेऽपि क्षतिविरहादित्याहुः ॥

इति स्नानवाद(२०)वीचिः ।

## अथ रघुनाथशिरोमणिविरचितो वाजपेय-वाद (२१) वीचिः ।

ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखंडानन्दबोधाय पूर्णाय परमात्मने ॥ १ ॥

अपूर्वं आहत्येति । स्वर्गकामनियोज्यकं यागविषयकं कार्य्यं स्थायि स्वर्गसाधनत्वेन ज्ञायमानमिति बोधादपूर्वोपस्थितेर्वा प्राक् स्वर्गकामस्य यागः कार्य्यं इति बोधयितुं न शक्यते इत्यर्थः । शक्यत इत्यस्य स्वर्गकामे स्वर्गकामयागकार्य्यत्वयोरन्वयप्रयोजकरूपस्य योग्यतावच्छेदकस्य नियोज्यत्वस्य घटे जलाहरणयोग्यतावच्छेदकछिद्रेतरत्वस्येव भानासंभवादिति शेषः । यथा घटे छिद्रेतरत्वं विनाजलाहरणं न सम्भवतीति छिद्रेतरत्वं योग्यतावच्छेदकं, तथा स्वर्गकामस्य यागविषयककार्य्यताबोधं विना यागः कार्य्यो न भवत्यतः स एव योग्यतावच्छेदक इति भावः ।

ननु यथा घटेन जलमाहरेदित्यत्र पदादनुपस्थितमपि छिद्रेतरत्वं घटे योग्यतावच्छेदकतया भासते तथा नियोज्यत्वस्य योग्यतावच्छेदकतया स्वर्गकामे कुतो भानं न भवतीत्यत आह स्वर्गकामेति । यद्वा आहत्य स्वर्गकामस्य यागः कार्य्यं इति बोधो लिङा न जननीयः तस्य नियोज्यत्वेन तस्मिन् शाब्दबोधे भानं विनेत्यर्थः । ननु तर्हि नियोज्यत्वेन स्वर्गकामस्य यागकार्य्यताबोधे भानं भवत्वित्यत आह स्वर्गकामेति । स्वर्गकामस्य यागे नियोज्यत्वेन योऽन्वयस्तत्र यागनिष्ठेष्टसाधनत्वप्रकारकज्ञानविषयत्वरूपयोग्यताया ज्ञानाभावादित्यर्थः । तन्मते काम्ये कामिन इष्टसाधनत्वप्रकारकज्ञानं विना कार्य्यताबोधानुदयाद्यागनिष्ठेष्टसाधनत्वप्रकारकज्ञानविषयत्वं पुरुषे ममेदं कार्य्यमिति बोधविषयान्वयस्य योग्यतावच्छेदकम्, इष्टसानत्वप्रकारज्ञानविषयत्वं तु यागस्य न सम्भवति इष्टस्वर्गस्य कालान्तरभावित्वात् यागस्य च क्षणिकत्वादिति भावः । ननु "शुचिः संध्यामुपासीते" त्यादौ नित्ये फलविरहाद्यथेष्टसाधनत्वप्रकारकज्ञानं विनापि शुचिनियोज्यकं संध्यावन्दनविषयकं कार्य्यमित्यनुभवो जायते, तथात्रापि स्वर्गकामनियोज्यको यागः कार्यं इत्यनुभवः कुतो न जायते ? अविशेषादिति प्रश्ने विशेषमाह कामनाविशिष्टस्येति । तथाच तत्र नित्ये कार्य्यताबोधे शौचादिमत्त्वमेव योग्यतावच्छेदकमिह तु काम्ये कार्यं कामिनोऽन्वये इष्टसाधनत्वज्ञानविषयत्वमेव योग्यता तस्याश्च ज्ञानं क्षणिके नास्तीति भावः । ननु तर्हि तत्र कीदृशोऽन्वयबोधः ? अत्र परिष्कृतं निर्णयकारमतम्—आदौ स्वर्गकामस्येदं कार्यमिति बोद्धुर्यागविषयकं कार्यं

स्थायि, स्वर्गसाधनत्वस्य प्रागनवगमात् कथं वाच्यसम्बन्धरूपा लक्षणा-पीति वाच्यम्, गो सदृशो गवय इत्यत्रेव सामान्यतस्तद्वाच्यस्यावगमात् प्रवृत्तिनिमित्तविशेषस्यैव प्रागनवगमात् इति संप्रदायनिर्णयः । वाजपेय-पदोपस्थापितस्वार्थेनैव सममभेदान्वयान्न तत्र लक्षणा । ननु प्रवृत्तिनि-मित्तविशेषस्य प्रागपरिचयात् कथं तस्य स्वार्थानुभावकतेति चेत् । उ-त्तरकालमेव कथं तव प्रवृत्तिनिमित्तविशेषपरिचयः । अङ्गोपाङ्गविधि-पर्यालोचनयाविशेषोपस्थितिरिति चेत् । ममापि तावत् पर्यालोचनानन्त-रमेव वाजपेयपदं स्वार्थमनुभावयतु 'इह प्रभिन्नकमलोदरे मधूनि मधु-करः पिवती'त्यत्र मधुकरपदमिव प्रागास्तां युक्तमेवेत्याहुः ।

तृतीया च फलकरणत्वमाह फलसाधनत्वमात्रस्य लिङनभिहितत्वा-न्नाभिहितार्थता, वाजपेयपदं स्वपरं तृतीया तु विशेषणत्वे, तत्त्वं च वाच्य-वाचकभावेन पदवाच्यत्वविशिष्टे लक्षणामपेक्ष्य पदलक्षणैव लघीयसी वाजपेयपदवाच्याभिन्नयागे वाजपेयपदोत्तरतृतीयार्थकरणत्वान्वयानुप-पत्तेः, नीलं घटमित्यादौ विशेषणविभक्तेः कर्मत्वादिवाचकत्वे तदन्वय-स्येव विशेषणविशिष्ट इति तु युक्तम् । नच द्रव्यालाभः,वाजपेयपदादु-पस्थित एव तथात्वकल्पनात् उपस्थितत्यागेऽन्यकल्पनागौरवात् ।

अत्रेदं विभाव्यम्-अस्तु तावत् वाजपेयसाध्यत्वमुपलक्षणमेव,तथापि न क्षतिः, तथाहि एकस्य द्वयमित्यन्वयबोधानन्तरं यागमात्रे तत्फलसा-धनत्वबाधात् प्रतीतसामानाधिकरण्यकं वाजपेयसाध्यत्वमेव व्यावर्त्तक-मवगम्यते, असमानकालीनस्यापि सामानाधिकरण्ये व्यावर्त्तकत्वाव-पायात्, यागमात्रे च तत्साधनत्वबाधानवतारे तवापि कर्मनामधेयताक-ल्पनानवकाशात्, अवच्छेदकनिश्चयेऽपि फलकारणताबोधस्य निष्पति-न्थित्वात्, स्वर्गेऽग्निष्टोमादिसाध्यतावच्छेदकस्येवात्रापि फलसाधनताव-च्छेदकस्योत्तरकालकल्प्यत्वात् । अस्तु वाऽन्वयबोधे तद्विशेषणमेव वाज-पेयसाध्यत्वेनाग्निष्टोमादिव्यावृत्ततया उपस्थिते कर्म्मविशेषे तादृशफल-साधनत्वान्वयः । समानकालीनत्वं तु त्वदुक्तविरहादेव नान्वीयताम् गो सदृशो गवय इत्यादौ गवयपदवाच्यताबोधे गोसादृश्यादिकं विशेषणमेव वाच्यताद्यन्वये तु गौरवेण न तथेति तदीदृशान्वयबोधयोर्भेदानाकलनेनो-पलक्षणविशेषणविकल्पनमन्यत्रापि निरवकाशम्, अत एव 'वह्निसाध्यते-नोपस्थिते पाके इष्टसाधनत्वावगमः । न च तत्र वह्निसाध्यत्वमुपलक्षण-मेव पाकमात्रस्यैव तत्साध्यत्वादिति, एवं तादृशकल्पनायामपि 'वह्नि विशेषेण पचेत, रथेन यायादि'त्यादावगतेः ।

वस्तुतस्तु समानकालीनत्वप्रवेशेऽपि न विरोधः, तथाहि फलस्वरू

योग्यत्वस्य ज्ञानं प्रवर्त्तकं, तच्च तदवच्छेदकधर्म्मवत्त्वम् ओदनादिसाधनतावच्छेदकादिपर्यवसन्नम्, तस्य चैककालेऽपि समावेश इति कुतो विरोधः । संशयनिश्चयसाधारणफलोपधानज्ञानस्य प्रवर्त्तकत्वे तु न विरोध इति कश्चित् ।

इति रघुनाथशिरोमणिविरचितो वाजपेयवाद(२१)वीचिः ।

---

## अथ रघुनाथशिरोमणिविरचितो नियोज्यान्वयवाद (२२) वीचिः ।

ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥

अत एव वाजपेयेनेत्यादि । अत्र तावदेकस्य द्वयमिति वा विशिष्टवैशिष्ट्येन वाऽन्वयः ? आद्ये "यथा यस्योभयं हविरार्त्तिमार्च्छेत् स ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि"त्यत्र हविषि प्रथममुभयत्वान्वयबोधकल्पनायां वाक्यभेदापत्त्या युगपद्वृत्तित्वप्राप्तेरुभयत्वस्य चान्वयात्तादृशनिर्वापप्रयोजकत्वं हविरार्त्तिसम्बन्धमात्रस्यावगम्यते न तूभयत्वावच्छिन्नस्यैव तस्य विशिष्टानुपस्थितेः, इत्थं च प्राकरणिकोभयत्वमुभयमित्यनेनानूद्यते न तु विवक्षितं, तद्वदिहापि एकत्र यागे धर्म्मिणि तथाविधफलसाधनत्वं वाजपेयसाध्यत्वं चान्वियात्, एवं च फलसाधनतायां यागत्वमात्रस्यैव प्रयोजकत्वलाभात् तस्य च यागमात्रवृत्तितया यागमात्र एव तदर्थिप्रवृत्तिप्रसङ्गः । न च वाजपेयसाध्यत्वमुपलक्षकम्, अनतिप्रसक्तस्योपलक्ष्यतावच्छेदकस्यैकस्याभावात् यागत्वस्यैव तथात्वेऽतिप्रसङ्गतादवस्थ्यात् । द्वितीये तु विशिष्टवैशिष्ट्यस्यैककालीनतत्त्वानतिरेकितया विरोधो दुर्वारः । तस्माद् वाजपेययागयोरभेदान्वयः, स च वाजपेयपदस्य तद्वाच्यपरतया समर्थनीयः । न च वाजपेयपदवाच्यत्वेन ज्ञायमानमिति ज्ञानं न तु स्थायिस्वर्गसाधनमित्याकारकं पुरुषस्य नियोज्यत्वान्वयबोधे इष्टसाधनत्वस्य ज्ञायमानस्य योग्यतानवच्छेदकत्वात्, अनिष्टसाधनेऽपि तथाज्ञाने ममेदं कार्य्यमिति बोधोदयात् । वस्तुत इष्टसाधनेऽपि तथाज्ञानविरहेऽपि ममेदं कार्य्यमितिबोधानुदयाच्च । एवं सर्वत्र परत्र चिन्तनीयम् । एतच्चापूर्वविषयकं कार्य्यताज्ञानं न तु यागविषयकम्, तस्य स्थायित्वेन ज्ञानासम्भवात् तत्काले तस्य क्षणिकत्वनिश्चयात्, ततो मम नियोज्यस्येदं कार्य्यं स्थायिस्वर्गसाधनत्वेन ज्ञायमानमित्याकारकं पुनरपूर्वकार्य्यताज्ञानं, न तु ममेदं कार्य्यमित्येतावन्मात्राकारं तुल्ययुक्त्या सर्वत्र

कार्य्यताबोधे नियोज्यत्वस्य स्थायित्वस्य स्वर्गसाधनत्वस्य च योग्यता-वच्छेदकस्यावश्यं भानाङ्गीकारात् । एवं सर्वत्र परत्र बोध्यम् । एवम-पूर्वकार्य्यताज्ञानेऽपि बोद्धा विमृशति, अपूर्वजनिका तावत् कामिकृतिः, सा च यदि यागविषया भवति तदैवापूर्वं जनयितुं शक्नोति न त्वन्यथा अन्यतस्तदनिष्पत्तेः, कामिकृतिश्च यागविषया तदा भवति यदि यागः काम्यसाधनं स्यात् काम्यसाधनतया ज्ञात एव कामिनः कार्यताधीनियमा-त् । एवं यागस्य स्वर्गसाधनत्वमुपादानेनावगम्य काम्यमानस्वर्गसाध-नत्वेनावगम्यमानो यागोऽधिकरणीभूतस्वर्गकामस्य नियोज्यस्य कार्य-मित्याकारकं तृतीयं ज्ञानम्, अयमेवाधिकारित्वेनान्वयः, तत आख्यातसा-मान्ये क्लृप्तश्चैत्रः पचतीत्यादाविव स्वर्गकामो यागानुकूलकृतिमानिति कर्तृत्वेनान्वयबोधश्चतुर्थः, ततः स्वर्गकामस्येदं कार्यमहमपि स्वर्गका-मस्तस्मान्मम स्वर्गकामस्य नियोज्यस्येदं कार्यं स्वर्गसाधनत्वेन ज्ञायमा-नमिति युक्तिपुरःसरं यागे यष्टुः प्रवर्त्तकं प्रतिसन्धानमिति पञ्चमं ज्ञान-मिति पञ्चापि ज्ञानानि शब्दजान्येव, विधेः प्रवृत्तिनिर्वाहकतया तावत्-पर्यन्तमाकाङ्क्षाया अपरिपूर्त्तेरिति ।

तदसङ्गतमं, ममेदं कार्यमितिद्वितीयबोधस्यान्विताभिधानानुपयोगेन वैयर्थ्यात् । एवं विधेः प्रवर्त्तकतायाः परंपरयाप्युपपत्तेर्न यागकार्यताज्ञा-नमपि शाब्दमिति । एवमधिकारित्वादिनाऽन्वयबोधश्चिन्त्यः । तस्मात् प्रथममपूर्वे नियोज्यत्वेनान्वयः, उत्तरकालमाख्यातसामान्ये, क्लृप्तश्चैत्रः पचतीत्यादाविव यागानुकूलव्यापारवानिति कर्तृत्वेनान्वयबोध इत्यन्व-यबोधद्वयमेव समीचीनम् । प्रवर्त्तकं तु ज्ञानं नैयायिकानामिवानुमानिक-मिति दिक् ।

अत्रेदमालोचनीयम्—यथा नियोज्यत्वमन्वयप्रयोजकं भासत इ-त्यभ्युपगमस्तथा चिकीर्षावत्त्वप्रवृत्तिसामग्रीमत्त्वादिकमपि किमिति न भासते ? विनिगमनाविरहात् । न च येन यद्योग्यतावच्छेदकत्वेन गृहीतं तदेव तस्य भासत इति वाच्यम् । एवमपि यथा स्वर्गकामयागकार्य्यतयो-रन्वयप्रयोजकत्वं न भवति स्वर्गकामस्यापि यागकार्यबोधाभावे यागका-र्यतानुदयात्तथा नियोज्यत्वमपि योग्यतावच्छेदकं न स्यात्, क्वचिन्ममे-दं कार्यमिति बोधवतोऽपि चिकीर्षादिविरहेण यागकार्यताऽनिर्वाहात् एवं चिकीर्षावत्त्वादिकमपि न योग्यतावच्छेदकम्, तत्सत्त्वेऽपि कदा-चित् प्रतिबन्धकेन कृतेरनुत्पत्तेः कार्यतानुदयादिति । किञ्च शाब्दबोधे सत्यवश्यं योग्यतावच्छेदकं भासते तदा कथं नियोज्यत्वं भासेत ? तद्यो-ग्यतावच्छेदकस्येष्टसाधनत्वादिकस्य पुंसो भानं विनापि । न च तदि

भासत इति वाच्यम्, एवमिष्टसाधनत्वस्यापि योग्यतावच्छेदकं भासत इत्यनवस्था स्यात्। न ज्ञात एव योग्यतावच्छेदकातिरिक्तेति विशेषणं देयमिति वाच्यम्। शाब्दबोधे योग्यतावच्छेदकस्य भानं विना शाब्दबोधो न जायत इत्येव योग्यतावच्छेदकं भासते, एवं च योग्यतावच्छेदकमपि यच्छाब्दबोधे भासते तद्योग्यतावच्छेदकभानं, विना कथं भासेतेति।

नन्वेतत् सर्वं घटेन जलमाहरेत्यत्रापि सम्भवति, तथाहि यथा घटत्वं न जलाहरणयोग्यतावच्छेदकं तथा छिद्रेतरत्वमपि न भवति कदाचित्सच्छिद्रेणापि घटेन भाविना दूरस्थेन च जलाहरणासम्भवात्, एवं छिद्रेतरत्वं योग्यतावच्छेदकं तद्योग्यतावच्छेदकं च छिद्रवैधर्म्यं तदभाने कथं तद्भानं, तस्यापि भानाङ्गीकारेऽनवस्थेति चेन्न।

तत्रापि तदुपरि दूषणमस्माभिर्दीयत एव, एवं च बाधविरह एव योग्यता, यागस्य च स्वर्गसाधत्वेन बाधप्रमानुदयाद्याग इष्टसाधनम् इति शाब्दबोधे। नैयायिकानामिति नापूर्ववाच्यता लोकेऽपीति दिक्।

तद्बोधोपयोगे सतीति। ममेदं कार्यमिति बोधोपयोगे सतीत्यर्थः। अन्यथा विशिष्टस्य तद्बोधे हेतुत्वं न स्यात्, विशेषणे कामनायां हेतुत्वस्याभावादिति भावः। कामनायास्तद्बोधोपयोगे द्वारमाह—सा चेति। कामनाया उपयोगी इत्यर्थः। एवं च नियोज्यत्वेन स्वर्गकामस्य कार्यान्वयप्रयोजकं स्वर्गसाधनत्वज्ञानं सिद्धमित्याह एवञ्चेति। नियोज्यान्वययोग्यतेति योग्यतापदं तज्ज्ञानपरं, तदनन्तरं च भवतीत्युपेयमिति पूरणीयमतो नानन्वयः, अन्यथा स्वर्गसाधनत्वज्ञानमेवाप्रयोजकत्वेन योग्यतेति स्वर्गसाधनताबोधे सति नियोज्यान्वययोग्यतेत्यन्वितं स्यात्।

ननु यदि स्वर्गसाधनताज्ञानमन्तरेण योग्यताज्ञानविरहात् लिङा क्रियाकार्यत्वं बोधयितुमशक्यं तदा यागे स्वर्गसाधनताबोधः प्राथमिकोऽस्त्वित्यत आह नचेति। ननु स्वर्गकामनारूपविशेषणज्ञानजन्ये कार्यताज्ञाने सर्वमेव दूषणमुपपद्यते, अस्माकं मते तु लिङेवेष्टसाधनतां बोधयतीत्यतो नानुपपत्तिरित्यत आह इष्टसाधनतेति। तथाऽन्वयस्वीकारे योग्यता प्रकृते साधनत्वबाधाद्योग्यत्वान्न साधनताया अन्वयः सम्भवतीत्येके।

ननु कार्यताविधिपक्षेऽपि नियोज्यत्वेनान्वय इति तद्योग्यतासम्पत्तये प्रथमं यागस्येष्टसाधनताबोधोऽङ्गीक्रियताम्, इष्टसाधनताविधिपक्षे तु नियोज्यत्वेनान्वयस्यानभ्युपगमात् प्रथमं यागेष्टसाधनताज्ञानं क्वोपयुज्यत इत्यत आह इष्टसाधनतेति। इष्टसाधनताविधित्वेनैव तदुपयोगो न तु

योग्यतया इति तस्याः पदा तथा प्रथमं यागस्य तद्बोधानुसरणमित्यर्थ इत्यन्ये।

ननु कार्यताविधिपक्षेऽपि यदि इष्टसाधनतया यागादिबोध आवश्यक इति कथं मतभेद इत्यत आह कार्यताविधिपक्षेऽपीति। अन्वयप्रकारतया अन्वयप्रयोजकतयेत्यर्थः। तथाच कार्यताविधिपक्षे योग्यतारूपतयेष्टसाधनत्वस्य ज्ञानम्, इष्टसाधनताविधिपक्षे पदार्थतयेति मतभेद इत्यर्थः। अपदार्थस्यापि परनये योग्यतावललभ्यस्य शाब्दधीविषयत्वाच्छाब्दमित्युक्तं, तच्च शाब्दधीविषयार्थकम्। नन्वेतावतापि कथमपूर्वस्य शाब्दत्वसिद्धिरत आह अत इति। इष्टसाधनत्वेन यावत् कार्यानुपस्थितिस्तावत्तत्र योग्यताविरहान्नियोज्यत्वेन नियोज्यस्यान्वयबोधोऽनुपपन्नः। न च यागस्येष्टसाधनत्वोपस्थितिः सम्भवति क्षणस्थायित्वेन साक्षात्साधनत्वात् घटकस्यानुपस्थित्या परंपराया दुर्ज्ञेयत्वात् तदतिरिक्तस्य साधनत्वस्याभावात्। अतः स्थिरे एव कार्ये इष्टसाधनत्वेनोपस्थिते नियोज्यत्वेन स्वर्गकामस्यान्वयधीः, स्थिरकार्यस्योपस्थितिस्तत्र लिङ्शक्तिमन्तरेणानुपपन्नेति लिङस्तत्रैव शक्तिर्न तु स्वर्गसाधनत्वादिरूपेण, अतः कार्यत्वं तत्रैवान्वितं न तु समभिव्याहृतक्रियायामित्यर्थः। यद्यपि शाब्दबोधात् पूर्वमपूर्वस्वर्गसाधनत्वरूपयोग्यताज्ञानमसम्भवि अपूर्वस्यान्वयबोधात् पूर्वमज्ञानात्, तथापि परनये बोधनीयपदार्थे योग्यताज्ञानं न कारणं बोधनीयपदार्थस्यापूर्वत्वात् किन्तु पदार्थतावच्छेदकावच्छिन्ने क्वचित्तस्य ज्ञानं तथा, एवं च प्रकृते कामिकार्यत्वान्वयप्रयोजकं काम्येष्टसाधनत्वं योग्यता, सा च लिङ्पदार्थतावच्छेदकावच्छिन्ने घटे कामिकार्ये जलाहरणरूपकार्यसाधने ज्ञायते इति तज्ज्ञानं शाब्दधीहेतुर्भविष्यतीति वदन्ति।

मिश्रास्तु स्वर्गकामः स्वनियोज्यकयागविषयकस्थायिस्वर्गसाधनकार्यक इत्येव परनये प्रथममन्वयः, अत एवाख्यातार्थविशेष्यतया स्वर्गकामस्य संख्यान्वयित्वमिति स्वर्गकाम इत्यत्र प्रथमा। तत्र स्वनियोज्यकत्वस्थायित्वं स्वर्गसाधनत्वं च कार्ये अपूर्वे एवान्वेति न तु यागे, तस्य क्षणिकत्वेन स्थायित्वे बाधात्। न च स्थायित्वाद्युपस्थापकपदाभावात् कथं तदन्वय इति वाच्यम्। व्यक्तमिदं मूलग्रन्थ एव। अस्तु वा उपस्थितेष्वगृहीतांशसंसर्गकेषु स्थायित्वस्वर्गसाधनत्वकार्यत्वेषु लिङ्शक्तिरित्यादिनाऽभिधानाल्लिङ एव तदुपस्थापकत्वात्। विषयत्वं च यागापूर्वयोः सम्बन्धविधया भासत इत्यपि मूल एव सुव्यक्तम्। यद्वा नियोज्यत्वस्थैर्यस्थायित्वादीनामपि योग्यतावच्छेदकतयैव भानमपूर्वरूपकार्ये। नचैवं नियोज्यत्वेनव स्वर्गकामस्यान्वये [illegible]ऽलाभे प्रवर्त्तकत्वानुपपत्तिः

रिति वाच्यम् । प्रथमतस्तथाभ्युपगमेऽप्युपादानबलेन कर्तृत्वाधिकारित्वयोरपि लाभात्। तथाहि पूर्वोक्तोपादानेन काम्यस्वर्गसाधनं याग इति प्रथमम् यागोऽधिकारीभूतनियोज्यस्वर्गकामकार्य इति द्वितीयं, ततो यागकृतिस्तद्द्वारं विनानुपपद्यमाना कर्त्तारमाक्षिपति, तथाच स्वर्गकामो यागानुकूलव्यापारवानिति तृतीयं, प्रवर्त्तकत्वं च नयायिकानामिवानुमानिकमित्याहुरिति दिक् । अधिकन्त्वालोकादावूह्यम् ।

इति श्रीशिरोमणिभट्टाचार्यकृतो नियोज्यान्वयवादवीचिः(२२) सम्पूर्णः ।

---

## अथ पाकजवाद (२३) वीचिः ॥

अथ रूपनाशादेः पाकजन्यत्वं विचार्यते । तत्र परमाणौ समवायेन द्रव्याभाववति पाकजरूपोत्पादविनाशौ न तु द्व्यणुकादाविति वैशेषिकवृद्धाः ।

नव्यास्तु द्व्यणुकादावपि पाकजो रूपनाशो भवत्येव । पाकजरूपोत्पादस्तु परमाणावेव द्व्यणुकाद्यवयविनि च रूपजरूपमेवेति वदन्ति ।

नैयायिकास्तु अवयविनि पाकजरूपोत्पादविनाशावामनन्ति । तत्र समवेतद्रव्यं पाकजरूपनाशवन्न वा, समवेतद्रव्यं पाकजरूपवन्न वेत्याकारिका विप्रतिपत्तिः ।

अत्र प्राचीनवैशेषिकाः । हस्तादौ मणिसंयोगदशायां वह्निसंयोगाद्दाहोत्पत्तिवारणाय संयोगसम्बन्धेन मण्यादेः प्रतिबन्धकत्वं वाच्यम्, एवं पाणौ मणिसंयोगदशायां तदवयवे दाहवारणाय स्वसंयुक्तसमवायित्वसम्बन्धेन प्रतिबन्धकत्वं वाच्यम्, हस्तारम्भकावयवादिपरमाणुपर्यन्तेषु दाहवारणाय स्वसंयुक्तसमवायिसमवायित्वादिगुरुतरानन्तसम्बन्धेनानन्तप्रतिबध्यप्रतिबन्धकभावः कल्पनीयः, एवं मण्यादौ दाहवारणाय तादात्म्येन मण्यादेः प्रतिबन्धकत्वम् , मण्यारम्भकावयवादिपरमाणुपर्यन्तेषु दाहवारणाय स्वसमवायिसमवायित्वादिसम्बन्धेन प्रतिबन्धकत्वं वाच्यम् , तथाच लाघवेन रूपनाशत्वावच्छिन्नं प्रति समवायेन द्रव्यस्य प्रतिबन्धकत्वादेव दाहापत्तिविरहात् । दर्शितानन्तप्रतिबध्यप्रतिबन्धकभावो न कल्पनीयः । न च तथापि अन्त्यावयविनि दाहापत्तिरावश्यकीति वाच्यम्। एतावता संयोगसंबन्धेन मण्यादेः प्रतिबन्धकत्वे समागतेऽपि उक्तदिशाऽवयवे तदवयवादौ च दाहवारणाय स्वसंयुक्तसमवायित्वादिसम्बन्धेनानन्तप्रतिबध्यप्रतिबन्धकभावकल्पनानिरासात् । यद्वा विलक्षणविशेषणतासम्बन्धेन रूपनाशत्वावच्छिन्नं प्रति सम-

वेतत्वसम्बन्धेन द्रव्यस्य प्रतिबन्धकत्वं वाच्यम्, तथाच द्व्यणुकाद्यन्त्यावयविपर्यन्तेषु विपर्ययेण न दाहोत्पत्तिः। न च तथापि परमाणौ मणिसंयोगदशायां दाहोत्पत्तिः स्यादिति वाच्यम्। इष्टापत्तेः, तदानीं परमाणौ दाहाभावस्य शपथमात्रेण निवारणीयत्वात्। एतत्तु उच्छृङ्खलानुयायिनः

केचित्तु विशेषणताविशेषेण रूपनाशत्वावच्छिन्नं प्रति तादात्म्येन परमाणोर्हेतुत्वम्, तेन द्व्यणुकाद्यन्त्यावयविपर्यन्तेषु न दाहोत्पत्तिरिति। वस्तुतस्तु विलक्षणविशेषणतया रूपनाशत्वावच्छिन्नं प्रति समवायनिरूतत्वोभयसम्बन्धेन द्रव्यस्य प्रतिबन्धकता तेन द्व्यणुकाद्यन्त्यावयविपर्यन्ते न दाहोत्पत्तिः, समवायनिरूपितत्वरूपेणाधारताधेयतयोः संहारात्। निरूपितत्वं च दिङ्निरूपितविशेषणताव्यावृत्तं ग्राह्यम्, अन्यथाऽणुमात्रस्य दिगुपाधित्वेन दिग्लक्षणपरमाणावपि समवायनिरूपिताधेयताया अपि दिङ्निरूपितविशेषणतया द्रव्यान्तरस्य तत्रापि सत्त्वाद्दाहानुत्पत्तिप्रसङ्गात् दिङ्निरूपितविशेषणताया नानात्वेन न दोषः, अन्यनिरूपितसंबन्धेनान्यस्यासत्त्वात्। समवायनिरूपितकालिकविशेषणता च परमाणौ नास्त्येव समवेतद्रव्ये सत्त्वात् तन्मते न दाहोत्पत्तिरिति न तादात्म्ये काप्यनुपपत्तिरिति।

यद्वा पक्षधरमिश्रानुयायिमते विशेषणतासम्बन्धेन रूपनाशत्वावच्छिन्नं प्रति समवायेन द्रव्यस्यैव प्रतिबन्धकत्वं समवायेनावयवे द्रव्यस्य सत्त्वेऽपि अवयविनि अवयवस्यासत्त्वात्। अपूर्ववादे "वाच्यवद्वाच्यवृत्तित्वेन वाच्योपस्थितिप्रकार" इति प्रवृत्तिनिमित्तलक्षणे मणिकृता वाच्योपस्थितिप्रकार इत्यस्य सास्नादौ व्यावृत्तिर्दत्ता, अन्यथा वाच्यवद्वाच्यवृत्तित्वेन तद्वारणे तत्पदवैयर्थ्यात्, तथाचातिलाघवमिति वैशेषिका विजयेरन्निति वदन्ति।

तदेतन्न्यायमतानुयायिनो न मन्यते। अनुगतरूपेण मणिसंयोगादेः तत्प्रतिबन्धकत्वस्वीकारात्। तथाहि विलक्षणविशेषणतासम्बन्धेन रूपनाशत्वावच्छिन्नं प्रति स्वाश्रयवृत्त्याधारतावच्छेदकत्वसम्बन्धेन मणिसंयोगस्य प्रतिबन्धकत्वम्। तेन साक्षात्परम्परया शरीरारम्भकपरमाणुपर्यन्तावयवे मण्यादेः उक्तसम्बन्धेन सत्त्वान्न दाहोत्पत्तिः। एवं शरीरे मणौ च दाहोत्पत्तिवारणाय मणिसंयोगस्य समवायेन प्रतिबन्धकत्वं कल्पनीयम्। तथाच न्यायनये प्रतिबध्यप्रतिबन्धकभावद्वयकल्पनम्। वैशेषिकनये वह्नितरव्यक्तीनां तावत्कारणसंयोगानां तत्कारणीभूतक्रियाव्यक्तीनां च कारणत्वकल्पने महद्गौरवम्।

अथ न्यायनये विजातीयनीलत्वावच्छिन्नं प्रति नीलत्वेन हेतुत्वमिति

नीलपीताद्यन्तर्भावेन बहुतरकार्यकारणभावो वक्तव्यः, वैशेषिकैस्तु क्रियासंयोगस्थले तत्तद्द्रव्यसमवेतत्वावच्छिन्नं प्रति तादात्म्येन तत्तद्द्रव्यस्य हेतुत्वमवश्यं वाच्यम्, तेनैव नीलपीताद्युत्पत्तिनिर्वाह इति नीलपीताद्यन्तर्भावेण कार्यकारणभावाभावात् लाघवम्। तत्र द्रव्यसमवेतेषु एकवारमेकोत्पादने नीलारम्भकद्रव्ये पीतोत्पत्तिविरहात्। न च तादृशानां क्लृप्तबहुतरद्रव्याणां तत्तद्व्यक्तित्वेन कारणत्वकल्पने महद्गौरवमिति वाच्यम्। तथापि नैयायिकमते क्लृप्तकार्यकारणभावतोऽतिलाघवात्, तथाहि प्रतिवारमेकवारमेकपाकादेकस्मिन्नेव घटादौ रूपरसगन्धस्पर्शाणां विनाशोत्पत्तो इति वाच्यम्। व्यक्तिस्थानीयापत्तिवारणाय तत्तद्व्यक्तित्वावच्छिन्नं प्रति तत्तदव्यहितपूर्वोत्पन्नपाकादेर्हेतुत्वं तत्तद्व्यक्तित्वेन नैयायिकैरङ्गीकर्तव्यम्। तथाच तत्तद्व्यक्तिसमवेतत्वावच्छिन्नं प्रति वैशेषिकैरङ्गीकृतमेव। किञ्च नैयायिकनयेऽपि क्लृप्तद्रव्येष्वपि तत्पाकजरूपरसगन्धस्पर्शव्यक्तिषु ततोव्यक्तित्वेन तद्भेदे च क्वचित् पृथक्कारणत्वे क्लृप्तद्रव्यान्तर्भावेण कार्यकारणभावेऽपि क्षतिविरहात्। नच बहुतरद्रव्यारम्भकव्यक्तीनां तत्तद्द्रव्यत्वावच्छिन्नं प्रतिहेतुत्वकल्पने तथैव गौरवमिति वाच्यम्। द्व्यणुकादिषु समवेतद्रव्यादिषु पृथक्कार्य्यकारणभावात् तत्तद्द्व्यणुकादिसमवेतद्रव्यादिकारणत्वेनैव निर्वाहात्, तत्तद्द्व्यणुकादिकं प्रति तत्तद्द्व्यणुकारम्भकव्यक्तीनां प्रतिबन्धकत्वरूपेण हेतुत्वेऽपि क्षतिविरहात्, नैयायिकानामपि तत्तद्रूपरसगन्धादिकं प्रति तत्प्रतिबन्धकत्वरूपेण हेतुत्वस्यावश्यकत्वात्। अत एव नैयायिकनयेऽपि घटे पाकाद्रूपोत्पत्तिरनन्तरं कपालद्वयसंयोगनाशाद्घटनाशः पुनः कपालद्वयसंयोगः अनन्तरं घटोत्पत्तिः एकस्मिन्नेव कपाले, वैशेषिकनयेऽपि तत्कपालसमवेतत्वावच्छिन्नं प्रति तत्कपालस्य हेतुत्वात् न घटद्वयपौर्वापर्यनियम इति, न तु घटत्वावच्छिन्नं प्रति तत्तद्व्यक्त्यव्यवहितपूर्वव्यक्तेः हेतुत्वेन गौरवमिति तत्कल्पनमपेक्ष्य तत्कल्पनाया एव लघुत्वात् ततः अनारम्भकसंयोगव्यक्तिकल्पनागौरवमिति वदन्ति।

इति पाकजवाद (२३) वीचिः।

---

## अथ जातिबाधकवाद (२४) वीचिः।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥

अयं श्लोको वैशेषिकाचार्योदयनकृतो निजमतमेवाश्रित्य। अथास्य

व्याख्या । आकाशत्वं न जातिर्व्यक्तेरैक्यात्, यथाहि नानाघटव्यक्तिषु
घटत्वं जातिस्तथा आकाशव्यक्तेरैक्यादाकाशत्वं न जातिः । नानाव्य-
क्तिषु वर्त्तमानमनुवृत्ताकारं नित्यं सामान्यमिति जातिलक्षणात्, नाना-
त्वस्य चाकाशेऽभावादाकाशत्वं न जातिरिति व्यक्तेरभेदो जातिबाधकः
प्रथमः ॥ १ ॥

घटत्वकुम्भत्वे न जाती, व्यक्तेस्तुल्यत्वात् । ननु व्यक्तितुल्यत्वेऽपि
यथा घटव्यक्तौ घटत्वद्रव्यत्वे जाती स्तस्तथाऽत्रापि व्यक्तितुल्यत्वेऽपि घट-
त्वकुम्भत्वे जाती कुतो न स्यातामिति चेत् । उच्यते–न्यूनाधिकवृत्तित्वा-
भावो हि तुल्यत्वं घटत्वद्रव्यत्वयोश्च न न्यूनाधिकवृत्तित्वाभावोऽस्ति
द्रव्यत्वस्य पटादावपि सद्भावात् घटत्वस्य च घट एव सद्भावात्,
तस्माद्घटत्वद्रव्यत्वयोरेकदेशेनैव साम्यं न सर्वथा, घटत्वकुम्भत्वयोश्च
न्यूनाधिकवृत्तित्वाभावात् सर्वथैव व्यक्तितुल्यत्वमतस्ते न जाती । यद्वा
घटत्वद्रव्यत्वयोः परापरभावोऽस्ति, द्रव्यत्वं परमधिकवृत्तित्वात्, घटत्वं
चापरं न्यूनवृत्तित्वात्, यत्र चापरं तत्र परेण भाव्यमेव, तथात्रापि यत्र
घटत्वं तत्र द्रव्यत्वमस्त्येवेति परापरभावोऽस्ति, सर्वत्र हि यत्रैकस्यां
व्यक्तौ जातिबाहुल्यं तत्र सर्वत्र परापरभावेन भाव्यमेवेति नियमोऽस्ति
अत्र च न परापरभावोऽस्ति यतो घटत्वं कुम्भत्वान्न परमधिकवृत्तित्वा-
भावात्, नाप्यपरं न्यूनवृत्तित्वाभावादेवं कुम्भत्वमपि घटत्वान्न परं ना-
प्यपरं, पूर्वोक्तयुक्तेः । तस्माद्घटत्वं कुम्भत्वं चैका काचिज्जातिरङ्गीकार्या

अन्यच्च तत्पर्याय एव, न तु जातिः । तस्माद्घटत्वकुंभत्वे द्वे अपि
न सामान्ये, तुल्यत्वात्, तथाहि पर्यायाः सर्वे ह्येकार्थाभिधायिनः, तत्
प्रतिपर्यायं जातित्वे जातीनां तुल्यत्वमर्थस्यैक्यात् । एवं पाणित्वकरत्व-
हस्तत्वादीन्यपि पर्यायाः न सामान्यानीत्याद्यप्यूह्यम् । इति तुल्यत्वं
जातिबाधको द्वितीयः ॥ २ ॥

पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्येषु मूर्त्तत्वभूतत्वे न सामान्ये, सङ्क-
रदोषप्रसङ्गात् ।

नन्वेकस्यामेव घटादिव्यक्तौ घटत्वपृथिवीत्वसत्ताद्रव्यत्वसामान्यानि
सन्ति, न च सङ्करदोषस्तथात्रापि भूतत्वमूर्त्तत्वयोः कथं सङ्करदोषः ।
उच्यते–परस्परव्यभिचारिणोर्ह्येकत्र विनिवेशः सङ्करः, घटत्वादी-
च न परस्परव्यभिचारित्वं तेषां परापरभावात्, तथाहि घटादौ सत्ता प-
पृथिवीत्वाद्यपरम्, नच मूर्त्तत्वभूतत्वयोः परापरभावः, यतो न भूतत्वं प-
सामान्यम् मूर्त्तत्वञ्चापरं भूतत्वस्य मनस्यसद्भावात्, मूर्त्तत्वस्य मनसि
सद्भावात्, नापि परं मूर्त्तत्वं भूतत्वं चापरं, भूतत्वस्याकाशे भावान्मूर्त्तत्व-

स्य च तत्राभावात् । यच्च परं तदपरादधिकवृत्त्येव, यच्चापरं, तत्परान्न्यूनवृत्त्येवेति नियमाच्च, तेन भूतत्वमूर्त्तत्वयोः परापरभावाभावाद्व्यभिचारित्वं व्यभिचारिणोश्चैकत्र स्थितौ संकरः । तस्मात्पृथिव्यादौ भूतत्वमूर्त्तत्वे धर्मावेव भवतो न जातिरूपे, एवं दण्डताखड्गितादयपि ज्ञेयमिति सङ्करो जातिबाधकस्तृतीयः ॥ ३ ॥

जातौ न जातिर्जातित्वमनवस्थारूपबाधकतर्कात्तथाहि जातावपि चेज्जातिस्तदा तस्यामपि जातावितरजात्या भाव्यमित्यनवस्थादोषस्थम्, तस्माज्जातित्वं प्रमेयत्वादिवद्धर्ममात्रं ननु जातिरित्यनवस्थितिर्जातिबाधकश्चतुर्थः ॥ ४ ॥

अन्त्यविशेषेष्वन्त्यविशेषत्वं न जातिस्तेषां स्वरूपहानेः । अयमाशयः-यथास्मदादीनामश्वादिभ्यो गवादिषु गोत्वादिनिमित्ता व्यावृत्तिबुद्धिस्तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु यैर्निमित्तैः प्रत्याधारं विलक्षणोऽयमिति व्यावृत्तिप्रत्ययो भवति तेऽन्त्यविशेषा अत्यन्तव्यावृत्तिबुद्धिहेतवः सामान्यशून्या नित्यद्रव्यवृत्तयश्चेति तेषां स्वरूपं, तेष्वपि यद्यन्त्यविशेषत्वं जातिस्तदा तेषां स्वरूपमेव हीयेत, तेषामत्यन्तव्यावृत्तिबुद्धिहेतुत्वात्सामान्यशून्यत्वाच्च, तस्मादन्त्यविशेषता न जातिः स्वरूपस्यैव हानेरिति रूपहानिर्जातिबाधकः पञ्चमः ॥ ५ ॥

समवायता न जातिस्तत्र सम्बन्धस्याभावात्तथाहि घटादीनां घटत्वादिसामान्यैः सह समवायसम्बन्धोऽस्ति, यदि च समवायेऽपि समवायत्वं जातिः स्यात् तदात्रापि केनचित्सम्बन्धेन भाव्यं, नास्ति च तत्र सम्बन्धः, ततः समवायत्वं न जातिरपि तु धर्ममात्रमेव । ननु धर्मधर्मिणोरपि केनापि सम्बन्धेन भाव्यम् । न, समवायत्वं हि प्रमेयत्वादिवदभावरूपमेव ननु भावरूपम् । यद्वा समवायत्वं समवायस्य स्वरूपमेव न तु तयोर्धर्मधर्मिभाव इति न तत्र कश्चित्सम्बन्धो कल्प्यत इति । एवं समवायत्वसामान्यस्वीकारेऽसम्बन्धो जातिबाधकः षष्ठः ॥ ६ ॥

इति षडेते जातिबाधकाः सामान्यत्वबाधकाः इत्यर्थः ।

इति जातिबाधकवाद ( २४ ) वीचिः ।

---

## अथ लङ्घनवाद (२५) वीचिः ।

सन्निहितदेशसंयोगानन्तरं विप्रकृष्टदेशसंयोगानुकूलव्यापारो लङ्घनम् । तथाचाहिं लङ्घयति इत्यादौ अहेर्निरूपितत्वसम्बन्धेन सन्निधाने विप्रकर्षे चान्वयः, आख्यातार्थकृतौ तादृशव्यापारस्यानुकूलत्वसम्बन्धेनान्वय इति

अहिनिरूपितसन्निधानाश्रयदेशसंयोगानन्तरं यदहिनिरूपितविप्रकर्षाश्र-यदेशगमनं तदनुकूलकृतिमानित्यन्वयबोधः । अहेरेकपार्श्वमात्रगामिनि ताद्दशप्रयोगवारणाय विशेषणविशेष्यदलम् । सन्निधानविप्रकर्षौ च परत्वापरत्वरूपौ, अतो लाङ्गूलदेशतः शीर्षदेशगमनेऽपि न ताद्दशप्रयोगः। सन्निधानाद्यंशेऽहेर्विशेषणविधयैव निवेशः, नातोऽहेरपरत्वदशायां तत्स्थलगामिनि ताद्दशप्रयोगः । आनन्तर्य्यञ्चाव्यवधानगर्भं, नातोऽहेर्मध्यसन्निहितदेशतः शिरःसन्निहितदेशवेष्टनेन पार्श्वान्तरगामिनि तथा प्रयोगः । न वा तद्देशतः पश्चादागत्य पुनस्तद्देशगामिनि तथा प्रयोगः ।

एकादश्यां लङ्घनमित्यादौ भोजनाभावे लक्षणा । आधेयत्वस्य प्रकृत्यर्थतावच्छेदकव्यापकाधेयत्वीयस्वरूपसम्बन्धेनान्वयः, नातस्तत्र कियत्कालभोजनाभावेऽपि तथा प्रयोगः। रविणा लङ्घितो मास इत्यादौ सम्बन्धविशेषाभावे लक्षणा इति प्राचीनाः । तन्न साधु, सन्निधानस्य साक्षाद्धात्वर्थतानवच्छेदकतयाऽहेः कर्म्मत्वानुपपत्तेः विप्रकृष्टदेशस्यापि कर्म्मत्वापत्तेश्च ॥

नव्यास्तु एकपार्श्वतः पार्श्वान्तरपतनं लङ्घनम्। पार्श्वत्वञ्चायमस्य पार्श्वं इति प्रतीतिसाक्षिको दिक्सम्बन्धविशेषः, तदाश्रयत्वेनाह्यादेः कर्म्मत्वं, पतनत्वन्तु गुरुत्वजन्यतावच्छेदकजातिविशेषः, तेन उक्तदोषाणां नावकाश इत्याहुः ॥

अन्येतु विजातीयव्यापारो लङ्घनं, वैजात्यञ्च लङ्घधातुशक्यतावच्छेदकतया सिद्धमतो न कश्चिद्दोष इत्याहुः । तदसत्, शक्यतावच्छेदकतया जातिसिद्धेरपसिद्धान्तत्वात्, धात्वर्थतावच्छेदकफलाभावेन तस्याकर्म्मकत्वापत्तेश्च ।

वस्तुतः सम्बन्धविरोधिव्यापारो लङ्घनं, स्वाधिकरणदेशविशेषैकसीमासम्बन्धाव्यवहितोत्तरत्वताद्दशापरसीमासम्बन्धकालीनत्वोभयसम्बन्धेन व्यापारे, आधेयत्वसम्बन्धेन च तद्घटकसम्बन्धेऽहेरन्वयः ताद्दशव्यापारश्च प्रकृते ऊर्ध्वसम्बन्धानुकूलव्यापारः । यत्र प्रथमसीमासम्बन्धं विनैव परसीमासम्बन्धः तत्र ताद्दशप्रयोगवारणाय प्रथमसम्बन्धनिवेशः। यत्र च प्रथमसीमासम्बन्धमात्रं ताद्दशसम्बन्धानन्तरोर्ध्वसम्बन्धस्तदनन्तरं पुनस्तत्सीमासम्बन्धो वा तत्र ताद्दशप्रयोगवारणाय द्वितीयसम्बन्धनिवेशः । यत्र ताद्दशसम्बन्धानन्तरमहिसम्बन्धोऽनन्तरञ्चापरसीमासम्बन्धः तदनुकूलव्यापारश्च अहिसन्निहिततृणादिसम्बन्धविरोधी तत्र ताद्दशप्रयोगवारणाय तृतीयसम्बन्धनिवेशः । सीमात्वन्तु तात्पर्य्यवशात् यथायोग्यं ग्राह्यम् । यदा पूर्वसीमातः पश्चिमसीमागमनं तत्र तदनु-

त्वतत्पश्चिमत्वरूपम् । एवं क्वचिदुत्तरत्वदक्षिणत्वरूपं क्वचित् दिशमादायापि तत्त्वं निर्वाच्यम् ।

'अहिं विलङ्घ्य गतवान्' इत्यादौ उक्तसम्बन्धेनाहिविशिष्टसम्बन्धविरोधिव्यापारानन्तर्यमेव गमनादौ भासते । न च यत्राहिवृत्तिसंयोगादिकमप्रसिद्धं तत्र तादृशप्रयोगो न स्यादिति वाच्यम् । अन्ततो वायुसंयोगस्यैव तत्र सत्त्वात् ॥ 'विलङ्घ्यैकादशीं भुङ्क्ते' इत्यादौ, "गुरुं विलंघ्य शास्त्रेऽस्मिन्नाधिकारः कदाचन" इत्यादौ च त्याग एव लङ्घधातुरौपचारिकः । "एकादश्यां विलङ्घनं, ज्वरादौ लङ्घनं पथ्य"मित्यादौ भोजनाभाव एव लङ्घधातोर्लक्षणा । 'विलङ्घ्य मेरुं त्रिदिवं प्रयातः, सेतुं विलङ्घ्य गतवान् लङ्कायां रघुनन्दनः' इत्यादौ अवलम्बने लङ्घधातोर्लक्षणा । नच तत्तद्धर्माणां लघुतया शक्यतावच्छेदकत्वमुचितमिति वाच्यम् । भूरिप्रयोगाभावात्, शक्तेर्भूरिप्रयोगनियतत्वात् तेषां लघुत्वस्याकिञ्चित्करत्वादितियुक्तमुत्पश्यामः ॥

इति लङ्घनवाद (२५) वीचिः ।

---

## अथ अनुभवत्वजातिवाद (२६) वीचिः ।

अनुभवत्वस्य प्रत्यक्षादिचतुष्टयसाधारणजातित्वे मानाभावः, ज्ञानं द्विविधं स्मृतिरनुभवश्चेति विभागस्य स्मृत्यन्यज्ञानत्वेनवोपपत्तेः । यचानुभवामीति अनुव्यवसायात्तत्सिद्धिरिति वाच्यम् । स्वर्गादेः शाब्दबोधानुमित्यादेः सत्त्वेऽपि स्वर्गमनुभवामीत्यनुव्यवसायाभावेन साक्षात्कारत्वस्यैव तद्विषयत्वात् । न च विशेषणज्ञानजन्यतावच्छेदकतया तत्सिद्धिरिति वाच्यम् । स्मृतौ व्यभिचारेण विशेषणज्ञानस्य विशिष्टबुद्धिमात्रे हेतुत्वासम्भवात् विशिष्टसाक्षात्कारत्वस्यैव विशेषणज्ञानजन्यतावच्छेदकत्वात्, विशेषणज्ञानाभावे अनुमित्यादेरभावस्य परामर्शाद्यभावेनव सम्भवात् । न चाप्रसिद्धस्य साध्यस्यानुमितौ साध्यप्रकारकत्ववारणायानुमितावपि विशेषणज्ञानस्य हेतुत्वमावश्यकमिति वाच्यम् । साध्यतावच्छेदकरूपेण साध्यप्रकारकानुमितेः साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयताकत्वनियमेन विशेषणतावच्छेदकनिश्चयाभावादेव तत्साध्यकानुमितेरनुत्पादात्, सामान्यसामग्रीसहिताया एव विशेषसामग्र्याः कार्योपधायकत्वात् । अन्यथानुमितिं प्रति विशेषणज्ञानस्य हेतुत्वेऽपि खण्डशो विशेषण[illegible]सत्त्वेन विशेष्ये विशेषणमितिरीत्या साध्यप्रकारकानुमितेस्तत्र दुर्वारत्वात् ।

अथैवं विशेषणतावच्छेदकनिश्चयस्य जन्यतावच्छेदकतयैवानुभवत्वसिद्धिः स्मृत्यन्यज्ञानत्वस्य तत्कार्यतावच्छेदकत्वे गौरवात्। न च विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वमेव तस्यापि जन्यतावच्छेदकम्। अप्रसिद्धसाध्यकानुमितेरपि साध्यप्रकारकत्वापत्तेः। न चाप्रसिद्धसाध्यस्थलीयपरामर्शविशेषस्य साध्यविशेष्यकानुमितित्वमेव कार्यतावच्छेदकमिति वाच्यम्। तत्स्थलीयसाध्यज्ञाने तादृशपरामर्शादेव साध्यप्रकारकानुमितेरुत्पादात्। न च तथापि तज्जातेः प्रत्यक्षानुमितिमात्रसाधारण्यमस्तु, शाब्दबोधोपमितिसाधारण्ये मानाभावः, शाब्दबोधं प्रति पदजन्यविशेषणतावच्छेदकप्रकारकनिश्चयस्य विशिष्य हेतुताया आवश्यकत्वात्, उपमितिं प्रति चातिदेशवाक्यार्थज्ञानेनैव गतार्थत्वादिति वाच्यम्। प्रत्यक्षानुमितिमात्रसाधारण्यस्यानुपगमात् इति चेन्न।

तथापि प्रत्यक्षादिचतुष्टयसाधारण्यस्य तस्यासिद्धेः। बाधबुद्धिप्रतिबध्यतावच्छेदकेन प्रत्यक्षव्यावृत्तेन स्मृतिशाब्दबोधसाधारणेन परोक्षत्वेन साङ्कर्यापत्त्या प्रत्यक्षानुमितिसाधारण्यस्य तस्य सिद्धेरसम्भवाच्च, तुल्ययुक्त्या विपरीतादिज्ञानप्रतिबन्धकताविचारोक्तयुक्त्या च तज्जातेर्दुर्वारत्वादिति केचित्।

तत्र स्वतन्त्राः—विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकतया शाब्दबोधव्यावृत्तमनुभवत्वम्, बाधादिबुद्धिप्रतिबध्यतावच्छेदकतया शाब्दबोधप्रत्यक्षव्यावृत्तमपरोक्षत्वं च द्वयमेव जातिर्लाघवात्। न चैवं विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकस्यानुभवत्वस्य प्रत्यक्षानुमितिसाधारणस्योक्तयुक्त्या शाब्दबोधवृत्तित्व उपमितिवृत्तित्वेऽपि मानाभावेन परस्परमनुमितौ साङ्कर्यापत्तिः, परोक्षत्वस्य प्रत्यक्षावृत्तित्वादिति वाच्यम्। साङ्कर्यवारणायैव विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकस्यानुभवत्वस्योपमितावभ्युपगमात्, तथा चानुभवत्वव्याप्यमेवापरोक्षत्वमिति न साङ्कर्यम्। न च बाधबुद्धिप्रतिबध्यतावच्छेदकेन परोक्षत्वेन साङ्कर्यापत्त्याऽनुभवत्वस्य जातित्वासम्भवः विशेषणतावच्छेदकप्रकारकनिश्चयस्य कार्यतावच्छेदके गौरवापत्तेः, परोक्षत्वस्य चाजातित्वे बाधादिबुद्धेः प्रतिबध्यतावच्छेदके प्रत्यक्षान्यत्वशाब्दान्यत्वयोः प्रवेशे गौरवापत्तेः। न च बाधतद्व्याप्यादिबुद्धिसत्त्वे प्रत्यक्षानुमित्यादिवत्स्मृतेरपि उत्पादस्यानुभवविरुद्धत्वात् स्मृतेरपि बाधादिबुद्धिप्रतिबध्यत्वमावश्यकम्, यथोक्तगौरवस्य प्रामाणिकत्वात्, अन्यथाऽतिरिक्तप्रतिबध्यप्रतिबन्धकभावकल्पनागौरवभयेन प्रत्यक्षादावपि तद्विरोधत्वविलोपप्रसङ्ग इति वाच्यम्। बाधबुद्धिसत्त्वे स्मृतेरनुत्पादानुभ-

वस्य विवादग्रस्तत्वात्, कदाचिदनुभवं प्रत्येव वा विशेषदर्शनं विरोधीति सत्प्रतिपक्षग्रन्थे भट्टाचार्यैरेवाभिधानाच्च। न च तथाप्यनुमितिभिन्नज्ञानत्वस्यापि विनिगमनाविरहेण जातित्वं दुर्वारमिति वाच्यम्। अनुमितिभिन्नज्ञानत्वस्य जातित्वेऽनुभवत्वपरोक्षत्वयोरुभयोरेव जातित्वासम्भवेन विशेषणतावच्छेदकप्रकारकनिश्चयबाधबुद्ध्योरुभयोरेव कार्यतावच्छेदके गौरवापत्त्या गौरवस्यैव विनिगमकत्वादिति प्राहुः।

इत्यनुभवत्वजातिवाद (२६) वीचिः।

## अथ लौकिकविषयतावाद (२७) वीचिः।

अथ लौकिकविषयतां ये लौकिकसन्निकर्षजन्यज्ञानविषयतां स्वीकुर्वन्ति, तेषामयमभिसन्धिः-घटं साक्षात्करोमीत्यनुव्यवसायश्च घटाद्यंशे लौकिकत्वावगाही, घटाद्युपनीतभानानन्तरं तादृशप्रतीत्यनुदयात्। घटाद्यंशे लौकिकत्वञ्च घटादिनिष्ठविलक्षणविषयतानिरूपकत्वादन्यद्दुर्वचम्। न च तदंशे प्रत्यक्षत्वमेव लौकिकत्वं, प्रत्यक्षत्वस्य जातिस्वरूपतया आंशिकत्वासम्भवात् जातेरांशिकताया अपसिद्धान्तत्वात्। न च तद्व्यक्तिनिष्ठलौकिकसन्निकर्षजन्यत्वमेव तदंशे लौकिकत्वम्, द्रव्यगुणाद्यंशे लौकिकत्वशरीरे च संयोगसंयुक्तसमवायादिरूपो विशिष्यैव निवेश्यः अतो लौकिकसन्निकर्षत्वस्याननुगतस्य दुर्वचत्वेऽपि न क्षतिरिति वाच्यम्। यतो लौकिकसन्निकर्षजन्यज्ञानवृत्ति लौकिकसन्निकर्षजन्यतावच्छेदकं लौकिकविषयत्वमवश्यमुपगन्तव्यम्, अन्यथा स्वाश्रयविषयकत्वस्वानन्तरोत्पन्नत्वोभयसम्बन्धेन लौकिकसन्निकर्षविशिष्टप्रत्यक्षत्वादन्यस्य लौकिकसन्निकर्षजन्यत्वस्य दुर्वचतया तस्यालोकसंयोगादिरूपसहकारिविशेषासमवहितघटादिवृत्तीन्द्रियसन्निकर्षानन्तरोत्पन्नघटाद्युपनीतभानसाधारणतया तादृशघटाद्युपनीतभानानन्तरं घटं साक्षात्करोमीत्यनुव्यवसायापत्तेर्दुर्वारत्वात्।

वस्तुतो लौकिकसन्निकर्षजन्यप्रत्यक्षनिष्ठं तज्जन्यत्वमप्रतिसन्दधानस्यापि पुंसो वस्तुगत्या लौकिकसन्निकर्षजन्यं यत् घटादिप्रत्यक्षं तदुत्तरं घटं साक्षात्करोमि इत्यनुव्यवसायेन लौकिकसन्निकर्षजन्यत्वस्य नियमतस्तादृशानुव्यवसायविषयता न सम्भवति। अत एव लौकिकसन्निकर्षघटितसामग्रीजन्यत्वस्य पूर्वोक्तातिप्रसङ्गवारणाय उक्तानुव्यवसायविषयताभ्युपगमोऽपि नितरां निरस्तः, लौकिकसन्निकर्षघटितसामग्र्या अतिदुर्ज्ञेयतया तामविदुषः तथाविधानुव्यवसायस्यानुभविकत्वात्। यदेतत् तद्विषयकप्रत्यक्षत्वं विषयतासम्बन्धेन तद्विशिष्टत्वे सति प्रत्यक्ष-

त्वं वा घटं साक्षात्करोमीत्यनुव्यवसायविषयः, विशेष्यतासम्बन्धेन तादृशधर्मप्रकारकानुव्यवसायं प्रति तद्वृत्तिलौकिकसन्निकर्षघटितसामग्रीजन्यज्ञानस्य तादात्म्यसम्बन्धेन तादृशसामग्रीजन्यत्वस्यैव वा स्वरूपसम्बन्धेन हेतुत्वोपगमात् न घटाद्युपनीतभानानन्तरं घटं साक्षात्करोमीत्यनुव्यवसायापत्तिः, सामग्रीनिवेशान्नोपदर्शितसहकारिविशेषासमवहितघटादिवृत्तीन्द्रियसन्निकर्षानन्तरोत्पन्नतदुपनीतभानेन साक्षात्कारित्वग्रहः ।

अथैवमपि आकाशादिविषयकोपनीतभानानन्तरमाकाशं साक्षात्करोमीत्यनुव्यवसायापत्तिः, विषयभेदेन कार्यकारणभावभेदस्यावश्यकतया आकाशादिवृत्तिलौकिकसन्निकर्षघटितसामग्र्यास्तत्प्रकारकानुव्यवसायरूपफलस्य चाप्रसिद्धया तत्रोक्तकार्यकारणभावकल्पनासम्भवेन उक्तकारणविरहेण तादृशापत्तिवारणस्याशक्यत्वात् । न च विषयविशेषमनन्तर्भाव्य प्रत्यक्षत्वावच्छिन्नविशेष्यतानिरूपिता या विषयितानिष्ठा प्रकारता तन्निरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतासम्बन्धेनानुव्यवसायं प्रति लौकिकसामग्र्या एव सामान्यतो हेतुता कल्प्यते, आकाशादौ लौकिकसामग्रीविरहात्तादृशप्रकारतासम्बन्धेन उक्तानुव्यवसायापत्त्यसम्भवात् नाकाशं साक्षात्करोमीत्यनुव्यवसायापत्तिरिति वाच्यम् । घटादिवृत्तिलौकिकसन्निकर्षविगमेऽपि घटज्ञानसत्त्वे घटं साक्षात्करोमीत्यनुव्यवसायोत्पत्त्या व्यभिचारेणोक्तकार्यकारणभावकल्पनाया असम्भवात् । न चाकाशं साक्षात्करोमीत्याद्यनुव्यवसायस्याप्रसिद्धया नापत्तिः सम्भवति, घटं साक्षात्करोमीत्याद्यनुव्यवसायस्थले घटादौ प्रसिद्धेन उक्तप्रकारतासम्बन्धेन प्रसिद्धस्य लौकिकमानसत्वावच्छिन्नस्यापि नाकाशादावापत्तिसम्भवः, तादृशसम्बन्धेन तादृशधर्मस्य कस्यचिज्जन्यतावच्छेदकतया आपादकविरहात्, अन्यथा भवन्मतेऽपि लौकिकविषयत्वांशे आकाशीयत्वाद्यवगाहिदर्शितानुव्यवसायस्यापत्तिसम्भवादिति वाच्यम् । घटं साक्षात्करोमीत्यनुव्यवसाये साक्षात्कारो घटीय इत्यादिबाधबुद्धेः प्रतिबन्धकतायां घटत्वपटत्वाद्यन्तर्भावे तादृशानन्तधर्मभेदेन प्रतिबन्धकतानन्त्यप्रसङ्गात् , तादृशधर्ममनन्तर्भाव्य साक्षात्कारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतासम्बन्धेन ज्ञानं प्रति तादृशविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन बाधज्ञानस्य प्रतिबन्धकताकल्पनात् तादृशसम्बन्धावच्छिन्नप्रतियोगिताकतथाविधप्रतिबन्धकाभावरूपकारणवशेन आकाशादौ उक्तप्रकारतावच्छेदकतासम्बन्धेन मानसापत्तेरेव उपदर्शित

नुव्यवसायापत्तौ पर्यवसानादिति चेन्न ।

विषयनिष्ठप्रत्यासत्त्या बाधबुद्धेः प्रतिबन्धकतायाः अग्रे निरसनीयतया बाधबुद्ध्यभाववलेन उपदर्शितापत्त्यसम्भवात् ।

यत्तु लौकिकसामग्रीजन्यत्वस्य साक्षात्त्वव्यञ्जकत्वापेक्षया लाघवेन विषयतासिद्धिरिति । तदसत्, उपदर्शितकार्य्यकारणभावलाघवेनातिरिक्तविषयतासिद्धेः सिद्धान्तविरुद्धत्वात्, अन्यथा धूमपरामर्शादिजन्यतावच्छेदकतया धूमलिङ्गकानुमितिवृत्तिविषयताविशेषाणां वह्न्याद्यनुमितिसामान्यजनकतावच्छेदकतया धूमालोकादिलिङ्गकनिखिलपरामर्शेषु विषयताविशेषाणां वा सिद्धिप्रसङ्गात्, तथाचसति व्याप्त्यादिघटितनिखिलपदार्थानां विषयतानिवेशस्याकिञ्चित्करतया सकलव्याप्तिज्ञानानामेवानुगमसम्भवात् । एतेन लौकिकसन्निकर्षस्य जन्यतावच्छेदकम् दुर्वचं, न तावत् प्रत्यक्षत्वमुपनीतभाने व्यभिचारात् । नापि ज्ञानाजन्यप्रत्यक्षत्वं, विशिष्टबुद्ध्यादेर्विशेषणज्ञानजन्यतया लौकिकप्रत्यक्षात्मकतदसंग्रहप्रसङ्गात् । न च विशिष्टबुद्धेर्लौकिकसन्निकर्षजन्यतावच्छेदकानाक्रान्तत्वेऽपि क्षतिविरहः, ज्ञानसन्निकर्षादेव तदुपपत्तिरिति वाच्यम् । विशेषणज्ञानादुत्तरविशिष्टबुद्धौ ज्ञानसन्निकर्षाद्विशेष्यत्वानिर्वाहेण लौकिकसन्निकर्षजन्यतावच्छेदकस्य तत्साधारण्यावश्यकत्वात् । तत्तद्विषयकज्ञानाजन्यप्रत्यक्षत्वस्य जन्यतावच्छेदकत्वमुपगम्य विशिष्टबुद्धिसंग्रहे विषयभेदेनानन्तकार्य्यकारणभावप्रसङ्गात् ज्ञानसन्निकर्षादिहेतुतायां लौकिकप्रत्यक्षे व्यभिचारवारणाय लौकिकसन्निकर्षाजन्यत्वस्य उक्तजन्यतावच्छेदकगर्भेऽवश्यं निवेशनीयतया अन्योन्याश्रयप्रसङ्गात् ।

यत्तु मुख्यविशेष्यतायाश्चक्षुःसंयोगादिजन्यतावच्छेदकत्वोपगमात् उपनीतभाने न व्यभिचारः, उपनीतस्य चाक्षुषादिज्ञाने विशेषणतयैव भानादिति । तदपि न, तथा सति सामान्यज्ञाने जन्ये च योगजधर्मजन्ये प्रत्यक्षे व्यभिचारस्य दुर्वारत्वादिति, उक्तयुक्त्या कार्य्यकारणभावावच्छेदककोटौ गौरवादिसहिष्णुतायां चक्षुःसंयोगादिविशिष्टचाक्षुषत्वादीनामेव चक्षुःसंयोगादिजन्यतावच्छेदकत्वसम्भवेनातिरिक्तविषयताया अप्रसिद्धेः । वैशिष्ट्यञ्च स्वाश्रयविषयकत्वस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन बोध्यम् । यदि च घटाद्यंशेऽलौकिकस्य घटवद्भूतलमित्यादिप्रत्यक्षस्य उक्तोभयसम्बन्धेन भूतलचक्षुःसंयोगादिविशिष्टत्वेन चक्षुःसंयोगादिकार्य्यतावच्छेदकाक्रान्ततया तस्य च विषयतारूपकार्य्यतावच्छेदकप्रत्यासत्त्या घटादावुत्पत्तिस्तत्र कारणाभावात् व्यभिचारस्तदवस्थः, अतिरिक्तविषयत्वोपगमे च तस्या एव प्रत्यासत्तित्वोपगमान्न

व्यभिचारसम्भावनेति मन्यते, तदाऽस्माभिरपि स्वाव्यवहितप्राक्क्षणवृत्ति-चक्षुःसंयोगादिसमानाधिकरणविषयतया जन्यताघटकप्रत्यासत्तित्वमुपगन्तव्यम्, जन्यतावच्छेदकधर्मः शुद्धचाक्षुषत्वादिकमेव, तत्र नोक्तव्यभिचारसम्भावना उक्तज्ञानीयघटादिविषयतया अतथात्वात् इति।

अत्र वदन्ति—घटाद्युपनीतभानानन्तरं न साक्षात्करोमीत्यनुव्यवसायः सर्वानुभवसिद्धः तादृशसामग्रीजन्यत्वस्याभावमात्मनि वा घटादिनिष्ठलौकिकसन्निकर्षजन्यप्रत्यक्षत्वावच्छिन्नाभावं नावगाहितुमीष्टे, लौकिकसन्निकर्षाजन्यतदानीन्तनसाक्षात्कारे घटादिनिष्ठलौकिकसन्निकर्षादिजन्यत्वाद्युपस्थितिविरहेऽप्युत्पत्तेः, नापि तदानीन्तनसाक्षात्कारे घटादिविषयकत्वस्यात्मनि वा घटादिविषयकप्रत्यक्षत्वावच्छिन्नस्याभावमवगाहतां, तत्र तादृशाभावयोर्बाधात्, बाधितविषयकत्वे तादृशप्रतीतीनां भ्रमत्वापत्तिः। पदार्थान्तरकल्पनया प्रतीतौ प्रामाण्योपपादनसम्भवे भ्रमत्वस्वीकारश्च प्रतीतिबलसिद्धपदार्थमात्रव्यत्ययप्रसङ्गपराहतः, तस्मात्तदानीन्तनसाक्षात्कारे घटादिनिष्ठविलक्षणविषयतानिरूपकत्वाभाव आत्मनि तादृशविषयतानिरूपकप्रत्यक्षत्वावच्छिन्नभावो वा विषय इति तादृशविषयताविशेषः सर्वथैवोपगन्तव्यः।

अथ लौकिकसामग्रीजन्यघटादिप्रत्यक्षे प्रत्यक्षत्वरूपेण घटादिविषयतानिरूपकत्वं, न तु घटाद्युपनीतभाने, तस्य ज्ञानत्वेनैव तादृशविषयतानिरूपकत्वात्, एवञ्च तदानीन्तनसाक्षात्कारे घटादिविषयत्वीयप्रत्यक्षत्वावच्छिन्ननिरूपकत्वाभाव आत्मनि घटादिविषयतानिरूपकतावच्छेदकप्रत्यक्षत्वावच्छिन्नाभावो वा उपदर्शितप्रतीतिविषय इति न तद्बलाद्विलक्षणविषयतासिद्धिः। न च विलक्षणं विषयतानिरूपकत्वं विलक्षणविषयत्वं वा कल्प्यते इत्यत्र विनिगमनाविरहात् विलक्षणविषयतासिद्धेरावश्यकतेति वाच्यम्। यतोऽतिरिक्तविषयताकल्पने तन्निरूपकत्वमपि विलक्षणमवश्यं स्वीकार्यम्, उपनीतभानसाधारणविषयतानिरूपकत्वस्य तन्निरूपकतात्मकत्वे उपनीतभानस्यापि तन्निरूपकत्वप्रसङ्गात् तदनन्तरमुक्तप्रतीत्यनुपपत्तिरिति न विनिगमनाविरह इति चेन्न।

उपनीतभानव्यावृत्तप्रत्यक्षत्वावच्छिन्ननिरूपकताविशेषसिद्धौ तथाविधनिरूपकताकविषयतान्तरसिद्धिरप्यर्थायातैव, सामान्यविषयतानिरूपकत्व एव प्रत्यक्षत्वावच्छिन्नत्वे घटाद्युपनीतभानानन्तरं घटादिनिष्ठप्रत्यक्षत्वावच्छिन्ननिरूपकताकविषयत्वाभावावगाहिन्या घटो न साक्षात्क्रियते इत्याकारकप्रतीतेर्भ्रमत्वापत्तेः सामान्यविषयत्वाभावस्य तत्र बाधितत्वात्। न चात्मनि विलक्षणनिरूपकताशालिप्रत्यक्षाभाव एव तादृश

तीतेर्विषयः, स चाबाधित एवेति वाच्यम् । तथा सत्येतादृशप्रतीतेर्घटा-
द्यविशेष्यकतया घटादिविशेष्यकबोधजनकतादृशशब्दोल्लेखित्वानुपपत्तेः।

अथ निर्विकल्पकीयविषयताविशेषनिरूपकत्वादेव लौकिकत्वमस्तु कि-
मतिरिक्तविषयतया । न च निर्विकल्पकीयविषयताया लौकिकविशिष्टबु-
द्धिसाधारणत्वोपगमे जातित्वादिना घटत्वज्ञानात् स्वरूपतो घटत्वप्रका-
रकप्रत्यक्षापत्तिः, तादृशविशिष्टबुद्धिजनकतावच्छेदकतावच्छेदकीभूतय-
त्किञ्चित्प्रकारत्वानिरूपकघटत्ववृत्तिविषयताया भवन्मते निखिलघटत्वा-
दिविषयकलौकिकप्रत्यक्षसाधारण्यादिति वाच्यम् । स्वरूपतस्तद्विशिष्ट-
बुद्धौ तद्विशेष्यकत्वाभाववत्तद्विषयकज्ञानत्वेनैव हेतुत्वोपगमात्, जाति-
त्वादिविषयकज्ञानस्य स्वरूपतो विशिष्टबुद्धावहेतुत्वात् । नचैवं जाति-
मान् घटश्चेत्याकारकज्ञानात् स्वरूपतो घटत्वादिविशिष्टबुद्ध्यनुदयप्रसङ्ग
इति वाच्यम् । विशेष्यताभिन्नतन्निष्ठप्रकारताकान्यत्वविशिष्टतद्विशेष्य-
कत्वाभावस्यैव कारणतावच्छेदककोटौ निवेशनीयतया तादृशद्विविधवि-
षयताशालिज्ञाने उक्तस्थले तादृशविशिष्टबुद्ध्यनुदयापत्त्यसम्भवात् । न
चैतादृशगुरुशरीरविशिष्टाभावस्य कारणतावच्छेदककोटिप्रवेशापेक्षया
प्रकारत्वानिरूपकविषयतायास्तथात्वे लाघवमिति निर्विकल्पकीय-
विषयताया विशिष्टधीव्यावृत्तत्वसिद्धिरिति वाच्यम् । कार्यकारणभा-
वलाघवेनातिरिक्तविषयतासिद्धेः प्रागेव निरस्तत्वादिति चेत् ।

नैवम्, अयं घट इत्यादिलौकिकप्रत्यक्षानन्तरोत्पन्ना घटत्वेनेमं सा-
क्षात्करोमीतिप्रमा घटत्वप्रकारतानिरूपितलौकिकविषयतां तादृशो-
पनीतभानानन्तरोत्पन्नं घटत्वेनेमं न साक्षात्करोमीत्यादिप्रत्यक्षं च घटत्व-
प्रकारतानिरूपितलौकिकविषयत्वाभावं ज्ञानांशे तादृशविषयताशालिज्ञा-
नाभावं वा आत्मन्यवगाहते, न च निर्विकल्पकीयविषयता प्रकारतानि-
रूपितेति निर्विकल्पकविषयताभिन्नविषयतासिद्धिः । न च तादृशप्रत्ययो
घटत्वप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताकत्वविशिष्टेदंवृत्तिलौकि-
कविषयताकत्वमेवावगाहते, तथाच निर्विकल्पकविषयताया एवोपपत्ति-
रिति वाच्यम् । तथा सति घटत्वेन तद्व्यक्तिलौकिकप्रत्यक्षहेतुभूततद्व्यञ्जक-
संस्थानविशेषावच्छिन्नचक्षुःसंयोगविरहदशायामिदन्त्वादिना लौकिक-
प्रत्यक्षजनकात् यथाकथञ्चित्सन्निकर्षात् जायमाने इदन्त्वेन तद्व्यक्तिलौ-
किकप्रत्यक्षे यत्र घटत्वस्य तद्व्यक्तावुपनयमर्यादया भानं तत्र घटत्वेनेमं
साक्षात्करोमीत्यनुव्यवसायानुपपत्तिः, तादृशज्ञानस्य घटत्वप्रकारतानि-
रूपितेदन्त्वावच्छिन्नविशेष्यताकत्वात् इदन्त्वसमानाधिकरणलौकिकविष-
यतावत्त्वाच्च । न च घटत्वादिलौकिकविषयताकत्वविशिष्टतथाविधेदंवृ-

त्तिलौकिकविषयत्वादिकं तादृशप्रतीतिविषयः, तादृशज्ञानस्य घटत्वव्यञ्जकसंस्थानविशेषावच्छिन्नसन्निकर्षाजन्यतया घटत्ववृत्तिलौकिकविषयताकत्वाभावान्नोक्तापत्तिरिति वाच्यम्। एवमपि यत्र यादृशज्ञानेनैव व्यक्त्यन्तरनिष्ठघटत्वव्यञ्जकसन्निकर्षवशात् व्यक्त्यन्तरे घटत्वं विषयीकृतं तत्रैव तादृशापत्तेर्दुर्वारत्वात् ॥

लौकिकविषयतापि प्रकारताद्यात्मिका न तु तदतिरिक्तेति केचित्। तदसत्, तथासति भूतलं घटवत् भूतले घट इति ज्ञानभेदेन घटादिनिष्ठलौकिकविषयताभेदप्रसङ्गात्, प्रकारताद्यतिरिक्तत्वे तत्रैकविषयतयैवोपपत्तेः। उपनीतभानसाधारणप्रकारतादिभिरेव तथाविधज्ञानानां मिथो वैलक्षण्यस्य निर्वाहात्, लौकिकविषयभेदेन भिन्नानां तेषामनुगमकं लौकिकविषयतात्वाद्यतिरिक्तमेव। न च लौकिकविषयतानामननुगमेऽपि क्षतिविरहात् तदनुगमकधर्मान्तरकल्पनमफलमेवेति वाच्यम्। तदननुगमे साक्षात्करोमीत्याकारकानुगतमित्यनुपपत्तेः, तन्निरूपकत्वाभावतन्निरूपकप्रत्यक्षाभावयोरप्यनुगमासम्भवेन न साक्षात्करोमीत्यनुगतप्रतीत्यनुपपत्तेश्च। अत्रेष्टापत्तौ विषयतात्वप्रकारतात्वादीनामपि अतिरिक्तानुगतत्वविलयप्रसङ्ग इति बहवः।

वस्तुतः लौकिकप्रत्यक्षत्वावच्छिन्ननिरूपितविषयत्वमेव लौकिकविषयत्वं, न त्वतिरिक्तं, क्लृप्तपदार्थैनैवोपपत्तौ ह्यतिरिक्तकल्पनाया अन्याय्यत्वात्, लौकिकविषयत्वस्यातिरिक्तत्वे क्वचित्कार्य्यकारणभावावच्छेदकलाघवं सम्भवदप्यकिञ्चित्करं, तादृशलाघवस्यातिरिक्तपदार्थसिद्धावनुपयुक्तत्वात्, प्रकारतात्वादिश्च प्रकारान्तरेण निर्वक्तुमशक्यतया अतिरिच्यत इति। प्रत्यक्षत्वावच्छिन्ननिरूपितविषयतावत् चाक्षुषत्वावच्छिन्ननिरूपितविषयताप्यतिरिक्ता, पश्यामि न पश्यामीत्यादिप्रत्ययानां तत्साधकत्वात्, तेषां प्रत्यक्षत्वावच्छिन्ननिरूपितविषयतालम्बनत्वे स्पर्शानन्तरं पश्यामीतिप्रत्ययानुपपत्तेरिति केचित्। तादृशप्रत्ययानां चाक्षुषत्वादिविशिष्टप्रत्यक्षत्वावच्छिन्ननिरूपितविषयतावलम्बनत्वोपगमेनैव सर्वसामञ्जस्यात् तादृशविषयतानामप्रामाणिकत्वात्, तदुपगमे क्वचित्कार्य्यकारणभावे लाघवं सम्भवदप्यनुपादेयमेवोक्तयुक्तेरिति संक्षेपः ॥ ० ॥

इति लौकिकविषयतावाद (२७) वीचिः।

## अथ लौकिकसन्निकर्षकारणतावाद (२८) वीचिः।

प्रत्यक्षानुमित्युपमितिशाब्दभेदेन प्रमाश्चतुर्विधाः। तत्रेन्द्रियसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। जन्यता च विषयताप्रत्यासत्त्यवच्छिन्ना ग्राह्या, तेन जन्यज्ञानमात्रस्यात्ममनोयोगजन्यत्वेऽपि न क्षतिः, जन्यज्ञानत्वावच्छिन्नाया आत्ममनोयोगजन्यतायाः समवायप्रत्यासत्त्यवच्छिन्नत्वात्। स च सन्निकर्षो द्विविधः लौकिकालौकिकभेदात्। तत्र लौकिकसन्निकर्षः षड्विधः—संयोगः १ संयुक्तसमवायः २ संयुक्तसमवेतसमवायः ३ समवायः ४ समवेतसमवायः ५ विशेषणता च ६। अलौकिकसन्निकर्षस्त्रिविधः—सामान्यलक्षणाज्ञानलक्षणायोगजधर्म्मभेदात्। एतेषाञ्चानुगतरूपेण प्रत्यक्षसामान्यं प्रति हेतुता न सम्भवति अनुगताननतिप्रसक्तरूपस्य ब्रह्मणोऽपि दुर्वचत्वात्। नापि द्रव्यादिविषयकलौकिकप्रत्यक्षं प्रति चक्षुःसंयोगादिसाधारणेन्द्रियसंयोगत्वादिना, चक्षुरादिसाधारणेन्द्रियत्वस्यानुगतस्य निर्वक्तुमशक्यत्वात्। न चेन्द्रियत्वं जातिविशेषः, तेजस्त्वादिना सङ्करप्रसङ्गात्।

अथेन्द्रियनिष्ठेष्वेकत्वेषु जातिविशेषं स्वीकृत्य विजातीयैकत्ववत्संयोगत्वादिना, अथवा चक्षुरादिसंयोगेष्वेव जातिविशेषः कारणतावच्छेदकतया स्वीक्रियते। तदभ्युपगमश्चावश्यकः, अन्यथाणुदेशावच्छिन्नेन्द्रियसंयोगादितो द्रव्यप्रत्यक्षप्रसङ्गादिति चेत्।

सम्भवत्येतादृशरीत्याऽनुगतरूपेण कार्य्यकारणभावः किन्त्वप्रामाणिकः। कदाचिच्चाक्षुषं कदाचित् स्पार्शनमित्यादिनियमनिर्वाहाय चाक्षुषादौ चक्षुःसंयोगादीनां विशिष्य कारणताया वक्तव्यतयोक्तानुगतकार्य्यकारणभावस्यानावश्यकत्वात्।

अथ विषयेन्द्रियसन्निकर्षस्योक्तानुगतरूपेणैव हेतुता स्वीक्रियते, इन्द्रियमनोयोगस्य च चक्षुर्मनोयोगत्वादिना चाक्षुषत्वाद्यवच्छिन्नं प्रति विशिष्यैव हेतुतेति न चाक्षुषस्पार्शनाद्युत्पत्तावनियमः। चक्षुर्मनोयोगादिश्च फलबलाच्चाक्षुषाव्यवहितप्राक्क्षण एव कल्प्यते, अतो विषयस्य त्वगिन्द्रियमात्रसंयोगदशायां चक्षुषा समं मनःसंयोगसत्त्वे चाक्षुषापत्तिरित्येतादृशफक्किकाया नावतार इति चेन्न।

विषयेन्द्रियसन्निकर्षस्य विशिष्य हेतुत्वानभ्युपगमे यत्र घटे त्वगिन्द्रियमात्रसन्निकर्षः पटे चक्षुःसन्निकर्षः तदुत्तरं घटे चाक्षुषापत्तिर्वारयितुमशक्या, तदुत्तरं पटचाक्षुषोपपत्त्या चक्षुर्मनोयोगस्यावश्यं कल्पनो-

यत्वात्(१)।

यत्तु इन्द्रियमनोयोगस्य विषयविशेषोऽप्यवच्छेदक उपेयते, एवञ्च विषयताप्रत्यासत्त्या चाक्षुषत्वाद्यवच्छिन्नं प्रति अवच्छेदकत्वप्रत्यासत्त्या चक्षुर्मनोयोगादीनां हेतुताकल्पने उपदर्शितस्थले पटचाक्षुषानुरोधेन पटरूपविषयावच्छेदेनैव चक्षुर्मनोयोगः कल्प्यते न तु घटावच्छेदेनापि इति नातिप्रसङ्ग इति।

तदसत्। तथासति विषयेन्द्रियसन्निकर्षहेतुताविलयप्रसङ्गात् विषयेन्द्रियसन्निकर्षशून्यकाले तत्तद्विषयावच्छेदेन इन्द्रियमनोयोगस्याकल्पनादेवातिप्रसङ्गवारणसम्भवात्, तस्मात् द्रव्यलौकिकचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयोगत्वादिना विशिष्यैव कार्यकारणभावः। लौकिकत्वस्य कार्य्यतावच्छेदककोटौ निवेशात् उपनीतभानादौ न व्यभिचारः। लौकिकत्वन्तु साक्षात्करोमीति प्रतीतिसाक्षिको विषयताविशेषः। गुणादिचाक्षुषे व्यभिचारवारणाय द्रव्यनिवेशः।

अथ गुणादिचाक्षुषाद्यव्यवहितप्राक्क्षणे स्वाश्रये चक्षुःसंयोगादेराव श्यकत्वात् कथं व्यभिचारः। यदि चैकविषयसन्निकर्षात् विषयान्तरप्रत्यक्षवारणाय विषयतासम्बन्धेन चाक्षुषादिकं प्रति समवायेन चक्षुःसंयोगादीनां हेतुतावश्यं वाच्या, तथा च विषयतासम्बन्धेन चाक्षुषाद्यधिकरणे गुणादौ समवायेन चक्षुःसंयोगाद्यभावाद्व्यभिचारः सम्भवतीति मन्यसे, तदा कार्य्यतावच्छेदककोटौ द्रव्यनिष्ठविषयतानिवेशेऽप्यसौ दुर्वारः द्रव्यविषयकचाक्षुषे गुणादेरपि विषयतया तत्रापि विषयतालक्षणकार्य्यतावच्छेदकप्रत्यासत्त्या द्रव्यविषयकचाक्षुषस्योत्पत्तेरिति चेन्न।

कार्य्यतावच्छेदकोपलक्षितकार्य्याधिकरण एव तदभावः प्रकृते च द्रव्य लौकिकचाक्षुषादौ गुणादेर्विषयत्वेऽपि द्रव्यलौकिकचाक्षुषत्वविशिष्टो विषयतया गुणादौ नाभ्युपेयते अतो व्यभिचारानवकाशः। आस्तां वा द्रव्यवृत्तिविषयतैव कार्य्यतावच्छेदकप्रत्यासत्तिः, कार्य्यतावच्छेदकधर्मस्तु शुद्धचाक्षुषत्वादिकमेव, न चैतादृशप्रत्यासत्त्या चाक्षुषत्वावच्छिन्नस्याश्रयत्वं गुणादावस्तीति न व्यभिचारः। एकपुरुषीयेन्द्रियसन्निकर्षात् पुरुषान्तरीयप्रत्यक्षवारणाय तत्पुरुषीयत्वं निवेश्यैव कार्य्यकारणभावः स्वीकार्य्यः, प्रत्यक्षनिष्ठं तत्पुरुषीयत्वञ्च तदात्मसमवेतत्वं, चक्षुरादिनिष्ठं तन्मनःसंयोगित्वं, एवञ्च इन्द्रियमनोयोगस्य स्वातन्त्र्येण हेतुत्वं न कल्प्यते

---

(१) चक्षुर्मनोयोगस्य त्वाचप्रत्यक्षानुत्पत्तिकाल एव स्वीकारे नैष दोष इति ध्येयम्।

तत्पुरुषीयत्वञ्च सन्निकर्षकारणतावच्छेदककोटौ तन्निवेशादेव नियमतस्तदुपेक्षोपपत्तेः, अव्यवहितप्राक्त्त्वे कारणतावच्छेदकविशिष्टकारणसत्ताया एव प्रकृते फलोपधाने तन्त्रत्वोपगमात् ।

वस्तुतस्तत्पुरुषीयचाक्षुषत्वावच्छिन्नजनकतावच्छेदकतया तत्पुरुषीयचक्षुरादिषु जातिभेदा एव स्वीक्रियन्ते । तन्मनःसंयुक्तचक्षुःसंयोगत्वादिना हेतुत्वे तन्मनःसंयुक्तत्वचक्षुष्ट्वादेर्मिथो विशेष्यविशेषणभावे तन्मनःसंयुक्तत्वविशिष्टचक्षुष्ट्वविशिष्टचक्षुःसंयोगत्वेन चक्षुष्ट्वविशिष्टतन्मनःसंयुक्तत्वविशिष्टचक्षुःसंयोगत्वेन वा हेतुत्वमित्येतादृशविनिगमनाविरहेण कारणताबाहुल्यादवच्छेदकगौरवाच्च ।

केचित्तु तत्पुरुषीयचाक्षुषादौ समवायादिसंसर्गेण तदीयचक्षुःसंयोगत्वादिना हेतुत्वापेक्षया लाघवात्संयोगादिसंसर्गेण तदीयचक्षुष्ट्वादिनैव हेतुता कल्प्यते ।

अथैवं संयोगादेरिन्द्रियव्यापारतानुपपत्तिस्तज्जन्यत्वे सति तज्जन्यजनकस्यैव तद्व्यापारत्वात्, तथाच इन्द्रियस्य प्रत्यक्षप्रमितिकरणतैव न निर्वहतीति चेत्, वरमेतदर्थं तत्पुरुषीयत्वादिकमनिवेश्य द्रव्यलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति संयोगत्वेन सामान्यत एव हेतुत्वं कल्प्यतां, तत्पुरुषीयचक्षुःसंयोगत्वादिना हेतुत्वेऽपि इन्द्रिये करणतानिर्वाहाय तस्य सामान्यत एव हेतुताया अवश्यकल्पनीयतया साम्यादिति वदन्ति ।

वस्तुतश्चक्षुःसंयोगत्वादिना न सन्निकर्षहेतुत्वं किन्तु जातिविशेषपुरस्कारेणैव । अणुदेशावच्छिन्नसन्निकर्षादितः प्रत्यक्षवारणाय कारणतावच्छेदकतया जातिविशेषस्वीकारस्यावश्यकतया चक्षुरादिनिवेशे प्रयोजनविरहात्, एवञ्च समवायेन विजातीयसंयोगस्य तादृशसंयोगेन चक्षुरादेर्वा विशिष्य हेतुता कल्प्यते इत्यत्र विनिगमनाविरहादेव संयोगस्य हेतुता सेत्स्यतीति ।

यत्तु संयोगे तत्पुरुषीयत्वस्यागुरोर्दुर्निर्वचतया तत्पुरुषीयचक्षुःसंयोगत्वादिना हेतुत्वमावश्यकमिति कथं चक्षुरादिनिवेशं विना उपपत्तिरिति ।

तदपि न, तत्पुरुषीयचाक्षुषजनकतावच्छेदकतया संयोगगतजातिभेदाभ्युपगमेनैवातिप्रसङ्गवारणसम्भवात् तत्पुरुषीयचक्षुःसंयोगत्वादिना हेतुताया अनावश्यकत्वात् ।

ननु सा जातिः संयोगजन्यतावच्छेदकजातिव्याप्या क्रियाजन्यतावच्छेदकजातिव्याप्या वा इत्यत्र विनिगमकाभावात् संयोगस्य हेतुत्वे कारणताद्वयमिति चेन्न ।

क्रियाया अवयवायविवृत्तितया यत्किञ्चिदवयवे प्रतिक्षणं क्रियायाः सत्त्वेन क्रियाजन्यचक्षुःसंयोगस्य संयोगजसंयोगकालेऽपि सत्त्वेन क्रियाजन्यसंयोगकाले च संयोगजसंयोगस्यासत्त्वेन क्रियाजन्यतावच्छेदकजातिव्याप्यैव सा जातिरुपेयते इति ॥

एवं द्रव्यसमवेतद्रव्यसमवेतसमवेतचाक्षुषादौ चक्षुःसंयुक्तसमवायतत्संयुक्तसमवेतसमवायत्वादिना हेतुतापि बोध्या । कारणतावच्छेदकप्रत्यासत्तिश्चात्र प्रतियोगिता ।

यत्तु द्रव्यसमवेतचाक्षुषादावपि स्वाश्रयसमवायादिसम्बन्धेन चक्षुःसंयोगत्वादिनैव हेतुता, चक्षुःसंयुक्तसमवायत्वादिना प्रतियोगितासंसर्गेण हेतुत्वेऽधिकरणे चक्षुरादिसंयोगनिरूपितसम्बन्धस्य सम्बन्धविधया समवायप्रतियोगितायाश्च प्रवेशाधिक्येन गौरवात् इति, तत् हेयं, तथाहि कालिकादिसम्बन्धेन यः स्वाश्रयस्तत्समवायमादायातिप्रसङ्गवारणाय समवायसमवायिसमवायादिकमेव प्रत्यासत्तिरिति वक्तव्यम्, एवञ्चाधिकरणांशे चक्षुःसंयोगादेः समवायो मतद्वये प्रविष्टः, किन्त्वस्मन्मते समवायीयप्रतियोगितानिवेशस्याधिक्यं भवन्मते तु स्वसमवायिसमवायरूपसम्बन्धशरीरेऽधिकरणांशे समवायस्य विशेषणतया तत्र तत्सम्बन्धस्याधिकस्य निवेशनीयतया लाघवानवकाशः ।

वस्तुत उक्तसम्बन्धनिवेशे लाघवविरहेऽपि चक्षुःसंयुक्तसमवायत्वेन हेतुत्वे तादृशसमवायत्वरूपोपाधेर्हेतुतावच्छेदकत्वमपेक्ष्य विजातीयसंयोगत्वेन हेतुत्वे वैजात्यस्य कारणतावच्छेदकत्वे लाघवम् , अतो द्रव्यसमवेतप्रत्यक्षादौ चक्षुःसंयुक्तसमवायादिहेतुताकल्पनमफलम् ।

अथ तदकल्पने गुणादौ प्रत्यक्षविषयता कीदृशसामग्रीनियम्येति चेत् प्रतिबन्धकाभावादिघटितसामग्रीनियम्यैव ।

अथैवमसन्निकृष्टगुणादावपि कथं न प्रत्यक्षविषयता उक्तसामग्र्यास्तत्राप्यक्षततत्वात् इति चेन्न ।

तादृशसामग्र्याः गुणादिप्रत्यक्षजनने आश्रयभासकसामग्र्याः सहकारित्वमुपेयते, स्वाश्रयभासकसन्निकर्षादिशून्यकाले कदापि गुणादिचाक्षुषाद्यनुदयात् । एवञ्च गुणादेः सन्निकर्षशून्यतादशायां स्वाश्रयसन्निकर्षादिरूपसहकारिविरहादेव न प्रत्यक्षापत्तिः ।

अथ स्वाश्रयाविषयकासन्निकृष्टवायुस्पर्शादिगोचरप्रत्यक्षं स्यात् तत्राश्रयभासकसामग्र्याः सहकारिता न सम्भवति इति चेत्, तर्हि द्रव्यसमवेतस्पार्शने त्वक्संयुक्तसमवायस्य हेतुताऽस्तु चक्षुःसंयुक्तसमवायचक्षुःसंयुक्तसमवेतसमवायहेतुताकल्पनं तु निष्फलमेव, गुणादिचाक्षुषादे

गुणादिसमवेतचाक्षुषादेश्च आश्रयाविषयकस्य क्वचिदप्यनुदयेन तत्राश्रयभासकसामग्र्याः सहकारितासम्भवात् । न च प्रत्यक्षविषयताया इन्द्रियसन्निकर्षाश्रयत्वव्याप्यतया चक्षुःसंयुक्तसमवायादेर्हेतुत्वमावश्यकमिति वाच्यम् । तादृशव्याप्तेरप्रामाणिकत्वादिति । तदपि हेयमेव, तथाहि गुणादौ विषयतासम्बन्धेन प्रत्यक्षोत्पादनिर्वाहकसामग्रीव्याप्तौ स्वाश्रयभासकसामग्र्या निवेशमन्तरेण तादृशसामग्रीशून्यकाले गुणादिप्रत्यक्षस्य वारणासम्भवात्, व्याप्यत्वेनोपगतस्य सत्त्वोपगमे व्यापकापत्तेरावश्यकत्वात्, अतस्तथाविधसामग्रीव्याप्तौ तन्निवेशनमावश्यकमिति ।

अत्र च यत्क्षणावच्छेदेन यद्देशे विषयादिघटितसामग्री तदव्यवहितोत्तरक्षणावच्छेदेन तद्देशे विषयतया प्रत्यक्षमुत्पद्यते इत्येतादृशसामग्रीव्याप्तौ चक्षुःसंयोगादिघटिताश्रयभासकसामग्री कुत्र निवेश्या देशे काले वा? आद्ये गुणादीनां प्रत्यक्षविषयता न निर्वहति तत्र चक्षुःसंयोगादिघटितसामग्र्या अभावात् । अन्त्ये घटादिचक्षुःसन्निकर्षदशायां असन्निकृष्टपटादिसमवेतगुणादिचाक्षुषापत्तिः चक्षुःसंयोगादिघटितसामग्रीविशिष्टतत्क्षणावच्छेदेन पटादिसमवेतगुणादावपि विषयादिघटितसामग्रीसत्त्वात् ।

अथ विषयसामान्यघटितसामग्र्याः प्रत्यक्षरूपफलव्याप्यत्वं न स्वीक्रियते यद्बलादापत्तिः स्यात् अपि तु तत्तद्विषये विषयतया प्रत्यक्षोत्पत्तिनिर्वाहाय तत्तद्विषयघटितसामग्र्या एव प्रत्यक्षरूपफलव्याप्यत्वं स्वीक्रियते । एवञ्च पटसमवेतगुणादिव्यक्तिषु तद्व्यक्तिघटितसामग्रीबलादेव प्रत्यक्षमापादयिष्यसि । तच्च न सम्भवति, तत्तद्गुणादिव्यक्तिघटितसामग्रीव्याप्तौ कारणतावच्छेदकप्रत्यासत्त्या ऐकाधिकरण्यापन्नतत्तदाश्रयव्यक्तिविषयचक्षुःसंयोगाद्यात्मकसामग्र्या एव काले निवेशात्, तदानीञ्च घटचक्षुःसंयोगसत्त्वेऽपि ऐकाधिकरण्यापन्नतत्तत्पटचक्षुःसंयोगादिघटितसामग्र्याः क्वचिदप्यभावात् इति चेत् ।

सत्यम्, यदि विषयस्य तत्तद्व्यक्तित्वेन हेतुता प्रामाणिकी स्यात् तदैवोपदर्शितरीत्या तत्तद्व्यक्तित्वेन विषयं सामग्रीव्याप्तौ निवेश्यातिप्रसङ्गवारणसम्भवः, सैव न प्रामाणिकी, एतदनुरोधेन तत्कल्पने महागौरवप्रसङ्गः । तत्तद्व्यक्तित्वेन विषयस्याहेतुत्वे तु न तेन रूपेण सामग्रीव्याप्तौ निवेशः सम्भवति कारणतावच्छेदकरूपावच्छिन्नस्यैव सामग्रीघटकत्वात् । तस्मादुपदर्शितापत्तिवारणाय संयुक्तसमवायादेर्हेतुत्वकल्पनमावश्यकमेवेति ॥

अथ रूपत्वादिप्रत्यक्षानुरोधेन संयुक्तसमवेतसमवायादिहेतुताया

आवश्यकत्वात् किं संयोगसंयुक्तसमवाययोर्हेतुत्वेन। द्रव्यगुणादिचाक्षुषसाधारणसमवेतप्रत्यक्षत्वादेरेव संयुक्तसमवेतसमवायजन्यतावच्छेदकत्वोपगमात् तत एव द्रव्यगुणादिचाक्षुषादेरप्युपपत्तिः। अथात्मतत्समवेतप्रत्यक्षानुरोधेन संयोगसंयुक्तसमवाययोर्हेतुत्वमावश्यकं निरवयवतया आत्मनि तत्समवेते च इन्द्रियसंयुक्तसमवेतसमवायाभावात् इति चेत्। आस्तामीदृशयुक्तया मनःसंयोगमनःसंयुक्तसमवाययोर्मानसप्रत्यक्षहेतुत्वमापाततः, किन्तु चक्षुःसंयोगचक्षुःसंयुक्तसमवायादिहेतुता द्रव्यतत्समवेतचाक्षुषादौ कुतः? नच द्रव्यादिचाक्षुषसाधारणरूपावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायादिहेतुत्वे कपालादिनाशोत्पत्तिकाले घटादिचाक्षुषानुदयप्रसङ्गः, तदव्यवहितप्राक्क्षणे संयुक्तसमवेतसमवायघटकीभूतकपालिकादिविरहेण घटादौ संयुक्तसमवेतसमवायविरहात् इति वाच्यम्। तदानीं घटादेः प्रत्यक्षानभ्युपगमे क्षतिविरहात्। संयोगादिहेतुतामतेऽपि यत्र कपालिकादिचक्षुःसंयोगदशायां घटोत्पत्तिः तदुत्तरक्षणे घटादिप्रत्यक्षस्यापनीयतया साम्यात्। नच त्रुटिविश्रान्तिमते त्रुटितत्समवेतप्रत्यक्षस्य संयुक्तसमवेतसमवायहेतुतयाऽनिर्वाहात् संयोगसंयुक्तसमवाययोर्हेतुत्वमावश्यकमिति वाच्यम्। एवमपि परमाणुद्व्यणुकाङ्गीकर्तृनैयायिकमते तद्धेतुतायां युक्तिविरहात् इति चेत्।

अत्राहुः-परमाणुघटितसन्निकर्षात् द्व्यणुकादौ पृथिवीत्वादिप्रत्यक्षवारणाय संयुक्तसमवेतसमवायहेतुतायां संयुक्तांशे महत्त्वमवश्यं निवेशनीयम्, एवञ्च त्रुटितत्समवेतरूपादौ महत्संयुक्तसमवेतसमवायस्यासत्त्वात् व्यभिचार इति द्रव्यान्यसमवेतविषयकचाक्षुषत्वमेव कार्यतावच्छेदकं वाच्यं, तथा च न तद्धेतुतया द्रव्यतत्समवेतचाक्षुषनिर्वाह इति संयोगसंयुक्तसमवाययोर्हेतुत्वमावश्यकम्।

अथैवमपि संयोगहेतुताकल्पनमनर्थकं द्रव्यतत्समवेतचाक्षुषसाधारणद्रव्यसमवेतविषयकचाक्षुषत्वस्यैव चक्षुःसंयुक्तसमवायजन्यतावच्छेदकत्वोपगमात् तत एव द्रव्यचाक्षुषस्याप्युपपत्तेरिति चेन्न।

स्थूलपृथिव्याद्यसन्निकर्षदशायां परमाणुघटितसन्निकर्षात् पृथिवीत्वादिप्रत्यक्षवारणाय संयुक्तसमवायहेतुतायां संयुक्तांशे महत्त्वनिवेशस्यावश्यकतया त्रुटिप्रत्यक्षव्यभिचारवारणाय तज्जन्यतावच्छेदककोटौ द्रव्यान्यत्वनिवेशस्यावश्यकतया द्रव्यप्रत्यक्षे संयोगस्य हेतुताया आवश्यकत्वात्। नच महत्संयुक्तसमवेतसमवायजन्यतावच्छेदकं सन्निकर्षसमवेतचाक्षुषत्वमेववाच्यं न तु द्रव्यभिन्ने यत्समवेतं तच्चाक्षुषत्वम्, एवञ्च पृथिवीत्वादिचाक्षुषस्य तादृशसंयुक्तसमवेतसमवायजन्यतावच्छेद-

कान्ततया स्थूलपृथिव्याद्यसन्निकर्षदशायां तादृशकारणविरहेणाप-त्यभाव इति वाच्यम् । सद्भिन्नसमवेतचाक्षुषत्वस्य महत्संयुक्तसमवे-तसमवायजन्यतावच्छेदकत्वे चतुरणुकादिरूपस्थूलपृथिव्याद्यसन्निक-र्षदशायां त्रुटौ पृथिवीत्वादिप्रत्यक्षानुपपत्तेः ।

अथ परमाण्वादिघटितसन्निकर्षात् रूपत्वादिप्रत्यक्षवारणाय संयुक्त-समवेतसमवायहेतुतायां संयुक्तदले महत्त्वं न निवेश्यते अपितु सम-वेतांशे लौकिकविषयतासंसर्गेण चाक्षुषवत्त्वं, तावतापि चक्षुःसंयुक्तपर-माणुसमवेतरूपादीनां लौकिकचाक्षुषविषयत्वाभावेनातिप्रसक्तिवार-णसम्भवात् । एवञ्च नीरूपानुद्भूतरूपवद्द्रव्यघटितसन्निकर्षात् संयो-गत्वरूपत्वादिप्रत्यक्षवारणाय रूपानुद्भूतरूपाभावानां कारणताव-च्छेदककोटिनिवेशनमप्यनुपादेयं समवेतांशे चाक्षुषविषयत्वनिवेशेनैवो-पपत्तेः । तथा च सद्भिन्नसमवेतचाक्षुषत्वस्य संयुक्तसमवेतसमवायज-न्यतावच्छेदकत्वेऽपि नोपदर्शितस्थले पृथिवीत्वादिप्रत्यक्षानुपपत्तिः, तत्रा-पि पृथिवीत्वे चक्षुःसंयुक्तसमवेतचाक्षुषवत्समवायस्याक्षतत्वात् इति संयुक्तसमवेतसमवायहेतुतायां महत्त्वादिनिवेशनमफलम् । इत्थञ्च द्रव्य-गुणकर्म्मचाक्षुषसाधारणस्य चाक्षुषत्वस्यैव चक्षुःसंयुक्तसमवायजन्यता-वच्छेदकत्वमुपगन्तव्यमिति । न च संयुक्तसमवायस्य हेतुतायां संयुक्तांशे महत्त्वाद्यनिवेशे परमाणुघटितसन्निकर्षात् रूपप्रत्यक्षापत्तिरिति वाच्यम्। तत्र विजातीयसंयोगाभावात् । न च तथापि त्र्यणुकप्रत्यक्षानुरोधेन द्व्यणुके विजातीयसंयोगस्यावश्यकत्वे तद्घटितसन्निकर्षात् द्व्यणुके रूपप्रत्यक्षापत्तिरिति वाच्यम् । सामानाधिकरण्यसम्बन्धेन महत्त्वस्य द्रव्यान्यत्वस्य च चाक्षुषत्वावच्छिन्नं प्रति हेतुत्वात् संयोगहेतुतायां मा-नाभाव इति चेन्न ।

संयुक्तसमवेतसमवायस्य चक्षुःसंयुक्तसमवेतचाक्षुषवत्समवायत्वेन हेतुत्वे सद्भिन्नसमवेतचाक्षुषत्वस्य द्रव्यभिन्नं यत् समवेतं तच्चाक्षुषत्वस्य कालिकसंसर्गेण घटत्व(१)चद्भिन्नं यत् तच्चाक्षुषत्वादेर्वा जन्यतावच्छेद-कत्वमित्यत्र विनिगमनाविरहेणानन्तकारणताकल्पनप्रसङ्गात् । न च म-हत्संयुक्तसमवेतसमवायत्वेन हेतुत्वमतेऽपि तस्य द्रव्यभिन्नं यत्समवेतं तच्चाक्षुषत्वस्यजन्यतावच्छेदकत्वमुपेयं किम्वा उक्तधर्माणामित्यत्र वि-निगमनाविरहो दुर्व्वार इति वाच्यम्। द्रव्यभिन्नं यत्समवेतं तच्चाक्षुष-त्वादीनां महत्संयुक्तसमवेतसमवायजन्यतावच्छेदकत्वोपगमे चतुरणुका-द्यसन्निकर्षकालीनत्रुटौ पृथिवीत्वादिप्रत्यक्षे व्यभिचारप्रसङ्गात् । तस्मात्

(१) कालिकेनापि जातेः स्वरूपतोऽवच्छेदकत्वमिति मतेनेदम् ।

द्रव्यान्योऽयत् समवेतं तद्विषयकचाक्षुषत्वावच्छिन्नं प्रति महत्संयुक्तस-मवेतसमवायत्वेन हेतुत्वमेवोचितमिति ॥

स्यादेतत् द्रव्यभिन्नं यत्समवेतं तच्चाक्षुषत्वावच्छिन्नं प्रति चक्षुसंयुक्त-समवेतचाक्षुषवत्समवायत्वेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति तु चक्षुःसंयो-गत्वेन हेतुता, तथाच चक्षुःसंयुक्तसमवायहेतुत्वे मानाभावः। न चैतत्कल्पे चक्षुःसंयुक्तसमवेतचाक्षुषवत्समवायस्य जन्यतावच्छेदकमुपदर्शितरूपं सच्छिन्नं यत्समवेतं तच्चाक्षुषत्वं कालिकेन घटत्ववच्छिन्नं यत्समवेतं तच्चा-क्षुषत्वं वेत्यत्र विनिगमनाविरहोऽवतरतीति वाच्यम्। सच्छिन्नचाक्षुषत्वा-दीनां तथात्वे गुणकर्मचाक्षुषासंग्रहप्रसङ्गात्। मन्मते च संयुक्तसमवाय-हेतुत्वानभ्युपगमात्संयुक्तसमवेतसमवायजन्यतावच्छेदकाक्रान्तत्वेन गु-णादिचाक्षुषसंग्रहस्यावश्यकत्वात्।

अथैतन्मते द्रव्यभिन्नं यत् समवेतं तच्चाक्षुषत्वस्य मूर्त्तभिन्नं यत्समवेतं तच्चाक्षुषत्वस्य वा चक्षुःसंयुक्तसमवेतसमवायजन्यतावच्छे-दकत्वमुपेयमित्यत्र विनिगमनाविरहात् द्रव्यभिन्नत्वसमवेतत्वयोर्मि-थो विशेष्यविशेषणभावे विनिगमनाविरहाच्च कार्य्यकारणभावबाहुल्य-प्रसङ्ग इत्येतदपेक्षया विजातीयसमवेतचाक्षुषत्वस्यैव जन्यतावच्छेद-कत्वमुपेयम्, तादृशवैजात्यञ्च द्रव्यव्यावृत्तं, तत्सिद्धिश्च चाक्षुषा-भावादिप्रतिबध्यतावच्छेदककोटौ प्रविष्टतया इत्यग्रे वक्ष्यामः। एवञ्च द्रव्यमात्रसमवेतानां गुणकर्मद्रव्यत्वपृथिवीत्वादीनां चाक्षुषत्वं न ततो निर्वहतीति संयुक्तसमवायहेतुताकल्पनमावश्यकम्। न च चक्षुःसंयुक्त-समवायहेतुतायामपि संयुक्तांशे चाक्षुषवत्त्वनिवेशनमावश्यकम्, अन्यथा परमाण्वादिघटितसन्निकर्षात् पृथिवीत्वादिप्रत्यक्षापत्तितादव-स्थ्यात, एवञ्च, घटप्रत्यक्षे व्यभिचारवारणाय द्रव्यान्यद्रव्यसमवेत-चाक्षुषत्वमेव तज्जन्यतावच्छेदकं वाच्यं, तत्र च द्रव्यान्यद्रव्यसमवेत-चाक्षुषत्वमूर्तान्यमूर्तसमवेतचाक्षुषत्वादीनां तथात्वमादाय एवं द्रव्यान्यत्वद्रव्यसमवेतत्वयोर्मूर्त्तान्यत्वमूर्तसमवेतत्वयोर्मिथो विशेष्यविशे-षणभावे विनिगमनाविरहो दुर्वार इति उपदर्शितविनिगमनाविरहेण चक्षुःसंयुक्तसमवायहेतुताबाहुल्यसहिष्णुता एव न्याय्या इति वाच्यम्। महत्समवेतचाक्षुषत्वस्यैव चाक्षुषवत् चक्षुःसंयुक्तसमवायजन्यताव-च्छेदकत्वोपगमेन उपदर्शितविनिगमनाविरहप्रयुक्तगौरवानवकाशात् इति चेत्।

तर्हि मयापि द्रव्यभिन्नसमवेतचाक्षुषत्वस्य चक्षुःसंयुक्तसमवेतचा-क्षुषवत् समवायजन्यतावच्छेदकत्वं न वाच्यम्, अपि तु चाक्षुषवत्स

मवेतचाक्षुषत्वमेव इति नोपदर्शितविनिगमनाविरहेण चक्षुःसंयुक्तसमवेतसमवायहेतुताबाहुल्यमिति।

अत्र केचित्-सास्नादिसन्निकर्षं विना गोत्वादिप्रत्यक्षानुदयात् गोत्वादिवृत्तिविषयतया चाक्षुषत्वाद्यवच्छिन्नं प्रति सास्नाद्यवच्छिन्नचक्षुःसंयोगवत्समवायस्य साधनतासिद्धिः। न च एकस्यां गवि सास्नाद्यवच्छिन्नचक्षुःसन्निकर्षकाले तदवच्छिन्नसन्निकर्षवदेकगोव्यक्तिविशेष्यकचाक्षुषवद् गवान्तरविशेष्यकचाक्षुषापत्तिवारणाय गोत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन चाक्षुषं प्रति सास्नाद्यवच्छिन्नचक्षुःसंयोगस्य समवायेन हेतुत्वमावश्यकमिति कृतं तादृशचक्षुःसंयोगवत्समवायहेतुतयेति वाच्यम्। तादृशकारणत्वाकल्पने विशेष्यतासम्बन्धेन गोत्वचाक्षुषे तथाविधसंयोगस्य हेतुत्वेऽपि यथाकथञ्चित्सन्निकर्षात् गोत्वे निर्विकल्पकवारणासम्भवात्। न च तदानीं गोत्वनिर्विकल्पोपगमे क्षतिविरहः निर्विकल्पकस्यातीन्द्रियतयाऽनुभवविरोधाभावादिति वाच्यम्। तदा निर्विकल्पकोपगमे तदनन्तरं गौरित्याकारकोपनीतभानादिप्रसङ्गात्। न च गोत्वचाक्षुषत्वावच्छिन्नं प्रति सास्नादिचाक्षुषत्वादिना हेतुत्वमस्तु, तत एव च सास्नाद्यनवच्छिन्नसन्निकर्षात् गोत्वप्रत्यक्षवारणसम्भवादिति किं तादृशगुरुधर्मावच्छिन्नहेतुतयेति वाच्यम्। सास्नाचाक्षुषस्य गोत्वचाक्षुषहेतुत्वे विनश्यदवस्थसास्नासन्निकर्षात् सास्नाचाक्षुषानन्तरं यथाकथञ्चित्सन्निकर्षात् गोत्वचाक्षुषापत्तिभिया तादृशसन्निकर्षहेतुताया वारयितुमशक्यत्वादित्याहुः।

तदसत्, गोत्वचाक्षुषं प्रति सास्नाद्यवच्छिन्नचक्षुःसंयोगवत्समवायत्वेन हेतुत्वे एकपुरुषीयतथाविधसन्निकर्षादन्यस्य गोत्वचाक्षुषवारणाय तत्पुरुषीयत्वनिवेशस्यावश्यकतया पुरुषभेदेन कारणताबाहुल्यप्रसङ्ग इत्येतदपेक्षया समवायेन गोत्वचाक्षुषं प्रति स्वाश्रयचक्षुःसंयुक्तमनःप्रतियोगिकविजातीयसंयोगवत्त्वसम्बन्धेन सास्नाद्यवच्छिन्नचक्षुःसंयोगहेतुताया एवोचितत्वात्, ईदृशरीत्या संयुक्तसमवाये हेतुत्वसिद्धिः।

अथैवं द्रव्यचाक्षुषादौ चक्षुःसंयोगादेरपि उपदर्शितात्मनिष्ठप्रत्यासत्त्या हेतुत्वं किं नोपेयते विषयनिष्ठप्रत्यासत्त्यादरे पुरुषभेदेन कारणताबाहुल्यप्रसङ्गात् इति चेन्न।

आत्मनिष्ठप्रत्यासत्त्यादरे एकव्यक्तिसन्निकर्षाद्व्यक्त्यन्तरप्रत्यक्षोत्पत्तेर्वारणाय विषयाणां विशिष्य निवेशे विषयाणां पुरुषापेक्षया बाहुल्येन बहुतरकारणताप्रसङ्गात्। अत्र च गोत्वादेरेकव्यक्तितया नातिप्रसङ्ग

इत्यात्मनिष्ठप्रत्यासत्त्यैव सास्नाद्यवच्छिन्नचक्षुःसंयोगादिहेतुतायाः कल्पनमुचितमिति ।

अन्ये तु गवाक्षानवच्छिन्नसन्निकर्षात् त्रसरेणूनामणुदेशमात्रावच्छिन्नचक्षुःसन्निकर्षात् स्थूलद्रव्याणां च चाक्षुषवारणाय यथा त्रसरेणुचाक्षुषे गवाक्षावच्छिन्नचक्षुःसंयोगस्य त्रुटिभिन्नद्रव्यचाक्षुषे च स्थूलावयवावच्छिन्नचक्षुःसन्निकर्षस्य हेतुताकल्पनमावश्यकं, तथा तादृशसन्निकर्षकाले त्रसरेण्वादिसमवेतरूपादिचाक्षुषवारणाय त्रुटिसमवेतचाक्षुषत्वावच्छिन्नं प्रति गवाक्षावच्छिन्नचक्षुःसंयोगवत्समवायत्वेन त्रुटिभिन्नद्रव्यसमवेतचाक्षुषत्वावच्छिन्नं प्रति स्थूलावयवावच्छिन्नचक्षुःसंयोगवत्समवायत्वेन हेतुत्वमावश्यकमिति संयुक्तसमवायहेतुतासिद्धिः। गवाक्षावच्छिन्नत्वञ्च जालान्तर्वर्त्तिसौरतेजःसंयोगावच्छेदकावच्छिन्नत्वम्, तत्संयोगस्य च विजातीयसंयोगत्वेनैव निवेशः, अतो जालान्तर्वर्त्तित्वादेर्दुर्निरूप्यत्वेऽपि न क्षतिः । स्थूलत्वञ्च महत्त्वम् ।

अथ त्रसरेणुसमवेतचाक्षुषत्वावच्छिन्नं प्रति गवाक्षावच्छिन्नचक्षुःसंयोगवत्समवायत्वेन त्रुटिभिन्नद्रव्यसमवेतचाक्षुषत्वावच्छिन्नं प्रति स्थूलावयवावच्छिन्नचक्षुःसंयोगवत्समवायत्वेन च हेतुता न सम्भवति, त्रुटौ गवाक्षानवच्छिन्नसन्निकर्षदशायां त्रुटिसमवेतपृथिवीत्वादेर्घटादिसन्निकर्षादपि प्रत्यक्षोदयात् तदानीं गवाक्षावच्छिन्नचक्षुःसंयोगवत्समवायस्य तत्र विरहेण त्रुटिभिन्नसमवेतपृथिवीत्वादेश्च चतुरणुकाद्यनवच्छिन्नसन्निकर्षकालेपि गवाक्षावच्छिन्नसन्निकर्षात् त्रुटौ प्रत्यक्षोदयात्, तदानीञ्च तत्र स्थूलावयवावच्छिन्नसंयोगस्य विरहेण व्यभिचारात् । न च गवाक्षावच्छिन्नचक्षुः संयोगवत्समवायस्य जन्यतावच्छेदककोटौ त्रसरेणुनिरूपितायाः स्थूलावयवावच्छिन्नचक्षुःसंयोगवत्समवायजन्यतावच्छेदककोटौ च त्रुटिभिन्नद्रव्यनिरूपिताया लौकिकविषयितायाः निवेशे न व्यभिचार इति वाच्यम् । तन्निवेशेऽपि यत्र जलीयत्रुटौ गवाक्षावच्छिन्नसन्निकर्षः घटे च स्थूलावयवावच्छिन्नसन्निकर्षः तत्र जलीयत्रुटिविषयकप्रत्यक्षस्य पृथिवीत्वेप्युत्पत्तेस्तत्र गवाक्षावच्छिन्नचक्षुःसंयोगवत्समवायस्य तदानीमसत्त्वेन, यत्र च जलादौ स्थूलावयवावच्छिन्नसन्निकर्षः गवाक्षावच्छेदेन पार्थिवत्रुटौ सन्निकर्षात् त्रुटिभिन्नपृथिव्याञ्च न सन्निकर्षः तदानीं त्रुटिभिन्नजलाद्यात्मकद्रव्यविषयकप्रत्यक्षस्य विषयतया पृथिवीत्वेप्युत्पत्तेस्तत्र च तदानीं स्थूलावयवावच्छिन्नचक्षुःसंयोगवत्समवायस्यासत्त्वेन व्यभिचारस्य दुर्वारत्वादिति चेन्न ।

स्वनिरूपितलौकिकविषयताश्रयत्रुटिसमवेतत्वलौकिकविषयत्वाभि-

त्वसम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति गवाक्षावच्छिन्नचक्षुःसंयोगवत्सम-वायत्वेन स्वनिरूपितलौकिकविषयताश्रयत्रुटिभिन्नद्रव्यसमवेतत्वलौ-किकविषयत्वोभयसम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति स्थूलावयवावच्छि-न्नचक्षुःसंयोगवत्समवायत्वेन हेतुता स्वीक्रियते, उपदर्शितस्थले पृथि-वीत्वे चाक्षुषव्यक्तिनिरूपितलौकिकविषयताश्रयत्रुट्यादिसमवेतत्ववि-रहेण तादृशोभयसम्बन्धेन न तत्र चाक्षुषमुत्पद्यते इति न व्यभिचार इत्याहुः।

तदपि न सम्यक्, तथाहि त्रुटितत्समवेतचाक्षुषादौ गवाक्षावच्छि-न्नचक्षुःसंयोगत्वतादृशसंयोगवत्समवायत्वादिना हेतुता न कल्प्यते, अपि तु द्रव्यचाक्षुषं प्रति विजातीयचक्षुःसंयोगत्वेन, चाक्षुषवत्समवेत-चाक्षुषं प्रति च विजातीयसंयोगवत्समवायत्वेन, गवाक्षानवच्छिन्नत्रु-टिचक्षुःसंयोगेऽणुमात्रदेशावच्छिन्नस्थूलावयविचक्षुःसंयोगे च तादृ-शजातिविशेषो न कल्प्यते तत्र फलानुत्पत्त्या तत्कल्पकाभावात्, अतो न तादृशसन्निकर्षात् त्रसरेण्वादिचाक्षुषप्रसङ्गः। एवं तादृशसन्निकर्ष-दशायां त्रसरेण्वादिसमवेतचाक्षुषप्रसङ्गोऽपि नास्ति तदानीन्तनतदवय-वचक्षुःसंयोगे वैजात्यानभ्युपगमेन विजातीयचक्षुःसंयोगवत्समवाय-विरहात्। न च यत्र प्रथमक्षणे त्रसरेणुसंयोगोत्पत्तिस्तदवयवसंयोगोत्प-त्तिश्च द्वितीयक्षणे तस्य तत्समवेतरूपादेश्च चाक्षुषं जालान्तर्वर्त्तिसौर-तेजःसंयोगनाशश्च तदुत्तरमपि त्रसरेणुतत्समवेतचाक्षुषप्रसङ्गः, पूर्वचा-क्षुषानुरोधेन तथाविधत्रुटिचक्षुःसंयोगे वैजात्यस्यावश्यं स्वीकरणीयत्वात् इति त्रुटिचाक्षुषतत्समवेतचाक्षुषयोर्गवाक्षावच्छिन्नचक्षुःसंयोगतद्वत्सम-वाययोर्हेतुत्वान्तरकल्पनमावश्यकमेवेति वाच्यम्। विजातीयालो-कसंयोगावच्छिन्नविजातीयचक्षुःसंयोगत्वतादृशचक्षुःसंयोगवत्समवाय-त्वाभ्यामेव द्रव्यचाक्षुषत्वचाक्षुषवत्समवेतचाक्षुषत्वावच्छिन्नं प्रति हेतुत्वोपगमात्, उपदर्शितस्थले विजातीयालोकसंयोगविरहेणैवापत्ति-विरहात्। न च तत्रालोकान्तरसंयोगसत्त्वे चाक्षुषापत्तिर्दुर्वारैव इत्या-शङ्कनीयम्। तादृशालोकसंयोगे वैजात्यानभ्युपगमात्।

अथ संयोगनिष्ठतादृशवैजात्ये नियामकाभावः, संयोगसामान्यसाम-ग्र्यास्तन्नियामकत्वे च निखिलसंयोगानामेव तदाश्रयत्वप्रसङ्गः। न च विजातीया क्रियैव तन्नियामिकेति वाच्यम्। तथासति यत्र एकयैव क्रियया एकस्मिन् त्रसरेणौ गवाक्षावच्छिन्नः संयोगो जनितः, एवं यत्रैक-यैव क्रियया एकस्मिन् स्थूलावयवावच्छिन्नोऽपरस्मिंश्च सूक्ष्मावयवाव-च्छिन्नः संयोगो जनितः, तत्र गवाक्षानवच्छिन्नत्रसरेणुसंयोगसूक्ष्मा-

वयवावच्छिन्नस्थूलावयविसंयोगयोस्तादृशवैजात्यविरहे प्रयोजकविरहा-दिति चेत् ।

नैवम्, तत्तत्क्रियातत्तदुत्तरदेशानुयोगिकतत्तत्संयोगव्यक्त्युत्पादकसामग्र्येव तादृशवैजात्यप्रयोजिका, उपदर्शितस्थले गवाद्यानवच्छिन्नत्रसरेणुसंयोगजनकीभूतत्तत्क्रियात्रसरेण्वादिरूपोत्तरदेशघटितसामग्र्यान्तादृशवैजात्यावच्छिन्नोत्पादप्रयोजकत्वानभ्युपगमात् तादृशसंयोगे वैजात्यविरहोपपत्तिरिति ।

अथ क्रियाजन्यतावच्छेदकवैजात्येन सङ्करप्रसङ्गात् चक्षुःसंयोगे वैजात्यकल्पनं न सम्भवति इति चेन्न ।

क्रियाजन्यतावच्छेदकजातेस्तादृशवैजात्यव्याप्यविरुद्धभेदेन द्वित्वोपगमात् । तादृशवैजात्यस्यैव क्रियादिजन्यतावच्छेदकजातिव्याप्यविरुद्धभेदेन द्वित्वं कथं नोपगम्यते इति नाशङ्कनीयम् । यतो जनकतावच्छेदकजातेर्नानात्वे व्यभिचारेण कारणत्वानुपपत्तिः जन्यतावच्छेदकजातेर्नानात्वे च कार्य्यकारणभावबाहुल्यमात्रमिति क्रियाजन्यतावच्छेदकजातेर्नानात्वमेवोचितमिति ।

अथ लौकिकसन्निकर्षजन्यतावच्छेदककोटौ कारणीभूतलौकिकसन्निकर्षवैशिष्ट्यनिवेशनमावश्यकम् , अन्यथा लौकिकसन्निकर्षं विनापि दोषविशेषादिसहकृतोपनायकज्ञानाद्वंशादौ उरगादिभ्रमस्य तदंशे लौकिकस्योत्पत्त्या व्यभिचारस्य दुर्वारत्वात् , तत्र लौकिकत्वानुपगमे तदुत्तरमुरगं साक्षात्करोमीत्याकारकसाक्षात्कारित्वग्रहस्यानुपपत्तेः । न च साक्षात्कारित्वव्यञ्जकलौकिकविषयताविशेष एव सन्निकर्षजन्यतावच्छेदकतयोपगन्तव्यः, स च तादृशभ्रमव्यावृत्त एवेति न व्यभिचार इति वाच्यम् । जन्यत्वाद्यवच्छेदकतया विषयताविशेषस्वीकारस्य सिद्धान्तविरुद्धत्वात् । एवञ्च तादृशव्यभिचारवारणाय कारणवैशिष्ट्यनिवेशस्यावश्यकत्वे जनकतावच्छेदकजातेर्नानात्वेऽप्यदोषः कार्य्यकारणभावबाहुल्यस्य कार्य्यतावच्छेदकजातेर्नानात्वेऽपि सत्त्वात् इति चेत् ।

माभूत्तत्र व्यभिचारभिया कारणतावच्छेदकजातेरैक्यसिद्धिः, किन्तु कार्य्यकारणभावकल्पने लाघवेन स्यादेव, यतश्चक्षुःसंयोगादिनिष्ठप्रत्यक्षजनकतावच्छेदकजातेः क्रियाजन्यतावच्छेदकजातिव्याप्यविरुद्धभेदेन द्वित्वे संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायसंयुक्तविशेषणताभेदेन इन्द्रियपुरुषभेदेन च भिन्नानां संयोगघटितसन्निकर्षाणां कारणताद्वैगुण्येनान्तकारणताबाहुल्यम् । क्रियासंयोगजन्यतावच्छेदकजात्योः प्रत्येकं चक्षुःसंयोगनिष्ठवैजात्यभेदेन द्वित्वे तु क्रियायाः कारणताबाहुल्यं संयो-

गस्य चैककारणताबाहुल्यमिति।

केचितु प्रत्यक्षजनकतावच्छेदकजातिः संयोगजसंयोगव्यावृत्तैव, अतो न क्रियाजन्यतावच्छेदकजात्या नवा संयोगजन्यतावच्छेदकजात्या सङ्करप्रसङ्गः, क्रियाजन्यचक्षुःसंयोगं विना न भवत्येव चाक्षुषं, सर्वत्र चाक्षुषस्थले फलबलेन क्रियाजन्यचक्षुःसंयोगस्यैव कल्पनात्। न च क्रियाजन्यसंयोगव्यावृत्तैव सा जातिः, क्रियाजन्यसंयोगस्थलेपि अवयवसंयोगाधीनसंयोगान्तरोत्पत्त्यैव चाक्षुषमुत्पद्यते इत्येव किं नोपेयत इत्यत्र विनिगमनाविरह इति वाच्यम्। एवंसति इन्द्रियसंयोगनिष्ठतादृशजातेरक्लृप्ततयाऽक्लृप्तकल्पनापातात् मन्मते तु आत्ममनःसंयोगनिष्ठक्रियाजन्यतावच्छेदकजातेरेव चक्षुःसंयोगादावभ्युपगमादित्याहुः।

इति लौकिसंनिकर्षवाद(२८)वीचिः।

## अथ सामग्रीप्रतिबन्धकतावाद(२९)वीचिः।

ॐ नमो गणेशाय।

समानविषये लौकिकप्रत्यक्षसामग्रीसत्त्वेऽनुमितिसामग्रीसत्त्वे च लौकिकप्रत्यक्षमेवोत्पद्यते न त्वनुमितिः, तदनन्तरं साक्षात्करोमीत्यनुव्यवसायस्यैवोदयात्, एवं समानविषयकशाब्दानुमितिसामग्रीसमवधाने शाब्दबोध एवोत्पद्यते, न त्वनुमितिस्तदनन्तरं शाब्दयामीत्यनुव्यवसायस्यैवोदयादित्यतः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नप्रकारताशालिप्रत्यक्षशाब्दादिसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम्। तत्र पर्वतो वन्हिमानित्याकारकप्रत्यक्षसामग्रीदशायां वन्हिमान् पर्वतो घटवानित्याकारकानुमित्यनुदयात् तत्र व्यभिचारवारणाय विधेयतायाः प्रतिबध्यतावच्छेदककोटौ निवेशः। प्रतिबन्धकता च न तथाविधप्रत्यक्षहेतुसमुदायत्वेन तादृशचाक्षुषादिहेतुसमुदायत्वेन वा, अतीतानागतचक्षुःसंयोगादिघटितकारणसमुदायस्य एकदाऽसत्त्वात्, किन्तु पर्वतचक्षुःसंयोगादिविशिष्टवन्हिचक्षुःसंयोगत्वादिना। वैशिष्ट्यञ्च पर्वतचक्षुःसंयोगस्य स्वावच्छेदकावच्छिन्नपर्वतवन्हिसंयोगावच्छेदकावच्छिन्नत्वसम्बन्धेन, नातः पर्वतवन्हिसंयोगावच्छेदकावच्छिन्नपर्वतसन्निकर्षकाले तथाविधानुमित्यनुपपत्तिः, तदानीञ्च संयोगप्रत्यक्षसामग्र्यभावेन पर्वतो वन्हिमानित्याकारानुमितिसमानविषयकप्रत्यक्ष-

सामग्र्यभावेन च तथाविधानुमित्युत्पादः प्रामाणिक एवेति बोध्यम् । प्रतिबन्धकतावच्छेदकसम्बन्धश्च स्वाश्रयचक्षुःसंयोगवन्मनःप्रतियोगिकविजातीयसंयोगवत्त्वरूपपरम्परासम्बन्धः, प्रतिबध्यतावच्छेदकसम्बन्धः समवायः अत एकपुरुषीयचक्षुःसंयोगादिघटितसामग्रीकालेऽन्यपुरुषीयानुमित्युपपत्तिः । न चैकपुरुषीयपर्वतचक्षुःसंयोगविशिष्टान्यपुरुषीयवन्हिचक्षुःसन्निकर्षस्य प्रतिबन्धकत्ववारणाय तदीयानुमितिं प्रति तदीयपर्वतचक्षुःसंयोगविशिष्टतदीयवन्हिचक्षुःसंयोगत्वादिना प्रतिबन्धकत्वस्यावश्यकत्वे कालिकप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावकल्पनमेवोचितमिति वाच्यम् । तत्पुरुषीयत्वनिवेशे पुरुषभेदेनानन्तप्रतिबध्यप्रतिबन्धकभावकल्पनप्रसङ्गात् । उक्तानुपपत्तेस्तादृशपरम्पराघटितसामानाधिकरण्यस्वावच्छेदकावच्छिन्नपर्वतवन्हिसंयोगावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन पर्वतचक्षुःसंयोगवैशिष्ट्यं निवेश्यैव वारणसम्भवात् । एवं शाब्दसामग्र्यामपि आकाङ्क्षाज्ञानादिविशिष्टयोग्यताज्ञानत्वादिना प्रतिबन्धकता बोध्या ।

एवमन्यत्रापि सामग्रीप्रतिबन्धकतायाः कारणतावच्छेदकप्रत्यासत्तिघटितसामानाधिकरण्यसम्बन्धेन इतरकारणानां वैशिष्ट्यं निवेश्य यत्किञ्चित्कारणस्यैव विरोधिता बोध्या । विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावबाहुल्यप्रयुक्तगौरवन्तु गत्यन्तराभावेनाकिञ्चित्करमिति बोध्यम् । साधारणहेतवश्च सामग्रीप्रतिबन्धकतायां कुत्रापि न निवेश्याः प्रयोजनविरहादिति ध्येयम् ॥

अथ वन्ह्याद्यनुमितिं प्रति तत्प्रत्यक्षसामग्रीप्रतिबन्धकतायां भिन्नविषयकानुमितिसामग्र्यभावा अपि निवेशनीयाः तेषामपि प्रत्यक्षसामग्रीघटकत्वात्, तादृशसामग्री च तत्तदनुमितिसमानविषयकप्रत्यक्षसामग्र्यभावघटिता, तादृशप्रत्यक्षसामग्री च तत्तत्प्रत्यक्षभिन्नविषयकानुमितिसामग्र्यभावघटितेत्यनवस्थाप्रसङ्ग इति चेन्न ।

घटाद्यनुमितिसामग्रीदशायां वन्हिविषयकप्रत्यक्षानुमितिसामग्रीसमवधाने च यदि घटादेरिव वन्हेरप्यनुमितिः प्रामाणिकी, तदा घटादिविषयकप्रत्यक्षसामग्र्यभावघटितघटानुमितिसामग्र्यभाव एव वन्हिप्रत्यक्षसामग्रीप्रतिबन्धकतायां निवेश्यते घटादिप्रत्यक्षसामग्र्यभावघटितप्रत्यक्षसामग्र्यभावनिवेशे प्रयोजनाभावात् ।

अथैवं घटप्रत्यक्षसामग्रीतदनुमितिसामग्रीवन्हिप्रत्यक्षसामग्रीतदनुमितिसामग्रीकाले घटानुमितिसामग्र्यभावविशिष्टप्रत्यक्षसामग्र्यभावेन वन्ह्यनुमितिः स्यात्, एवं घटप्रत्यक्षसामग्रीरूपप्रतिबन्धकाभावघटित

घटानुमितिसामग्र्यभावेन वन्हिप्रत्यक्षमपि स्यात् इति ज्ञानयौगपद्य-प्रसङ्गः । न च तदानीं घटप्रत्यक्षसामग्र्या वन्ह्यनुमितिसामग्र्यभावघटितायास्तादृशसामग्रीसत्त्वेनाभावात् तद्घटितघटानुमितिसामग्री वर्त्तत एवेति कथं प्रत्यक्षमिति वाच्यम् । तुल्ययुक्त्या वन्ह्यनुमितिसामग्र्यभावाघटितप्रत्यक्षसामग्र्यभावस्यैव घटानुमितिसामग्रीप्रतिबन्धकतायां निवेशात्तादृशसामग्र्याश्च तत्रासत्त्वेन प्रत्यक्षोत्पत्तौ बाधकाभावादिति चेत् ।

तर्हि घटप्रत्यक्षसामग्र्यभावघटिततदनुमितिसामग्र्यभाव एव वन्हि-प्रत्यक्षसामग्रीप्रतिबन्धकतायां निवेश्यते, तादृशघटप्रत्यक्षसामग्र्याश्च न तदन्यविषयकानुमितिसामग्र्यभावनिवेशः प्रयोजनाभावादिति नानवस्थेति । न चोक्तस्थले घटानुमितिसामग्रीसत्त्वे वन्ह्यादेः प्रत्यक्षसामग्र्यसत्त्वेन वन्ह्याद्यनुमितेरुत्पत्त्या तादृशघटप्रत्यक्षसामग्र्यां घटानुमितिसामग्र्यभावादिनिवेशस्यावश्यकतया तत्रैवानवस्थेति वाच्यम् । घटप्रत्यक्षसामग्र्यभावघटिततदनुमितिसामग्र्यभावस्यैव वन्हिप्रत्यक्षसामग्रीप्रतिबन्धकतायां पटप्रत्यक्षसामग्र्यभावघटितपटानुमितिसामग्र्यभावस्यापि निवेशादेव उक्तस्थले वन्ह्याद्यनुमितेरुपपत्तेः तदनुरोधेन पटाद्यनुमितिसामग्र्यभावस्य तादृशघटप्रत्यक्षसामग्र्यामनिवेशात् । उपदर्शितसामग्रीचतुष्टयसम्वलनदशायामपि अनुमितेरिव प्रत्यक्षस्याप्यनुत्पादो यद्यानुभविकः, तदा वन्ह्यनुमितिसामग्र्यभावस्यैव तदनुमितिसामग्र्या वन्ह्यादिप्रत्यक्षप्रतिबन्धकतायां निवेशः, तादृशवन्ह्याद्यनुमितिसामग्रीमध्ये च प्रयोजनविरहेण सामग्र्यन्तराभावानिवेशेन न तत्रानवस्थितिः ।

वस्तुतः वन्हिप्रत्यक्षस्य तदनु घटानुमितेश्च सामग्रीसत्त्वे वन्ह्याद्यविषयकघटानुमितेरेवोपगमात् वन्ह्याद्यनुमितित्वावच्छिन्नं प्रति सामग्र्यन्तराभावाघटिताया वन्ह्यादिप्रत्यक्षसामग्र्या एकैकमेव प्रतिबन्धकत्वं कल्प्यते इति । एवं सामग्र्यन्तरप्रतिबन्धकतायामपि बोध्यम् ॥ वन्ह्यादिविषयकप्रत्यक्षादिसामग्रीकालेऽप्यनुमित्सासत्त्वे वन्ह्याद्यनुमित्युपपत्तेस्तादृशेच्छाया उत्तेजकत्वं वाच्यं, घटादिप्रत्यक्षसामग्रीसत्त्वे वन्ह्याद्यनुमित्यनुदयात् वन्ह्याद्यनुमितित्वावच्छिन्नं प्रति वन्ह्याद्यनुमित्साविरहविशिष्टप्रत्यक्षसामग्रीत्वादिना प्रतिबन्धकत्वं कल्प्यम् । न च तत्र घटविषयकवन्ह्याद्यनुमितिविषयकतया तादृशेच्छासत्त्वे वन्ह्याद्यनुमित्यापत्तिरिति वाच्यम् । पर्वतविशेष्यकवन्हिविधेयकानुमितिस्थलीयप्रतिबन्धकतायां पर्वतनिष्ठविशेष्यतानिरूपितवन्हिनिष्ठविधेयताभिन्नविधेयताशून्यानुमितिगोचरेच्छात्वेनैव उत्तेजकत्वात् तादृशेच्छायाः केवलवन्हिविधेयकानुमित्यविषयकत्वात् । न चानुमितिर्जायतामितीच्छासत्त्वे घटाद्यनुमि-

तिसामग्रीसत्त्वे वन्ह्याद्यनुमित्यापत्तिरिति वाच्यम् । तदानीं वन्हिप्रत्यक्षस्यानुदयेन वन्ह्यनुमितेरिष्टत्वात् । यत्र घटानुमितित्वेन वह्निमात्रानुमितिरपि विसम्वादीच्छया विषयीकृता तत्र यदि न वन्ह्यनुमितिस्तदा पर्वतविशेष्यकत्वावच्छिन्नवह्निविधेयकत्वप्रकारताभिन्नकिञ्चिद्विषयकत्वप्रकारतानवच्छिन्नानुमितिविशेष्यताकेच्छात्वेनैवोत्तेजकता स्वीकार्य्या विशिष्टाभावकरणात् वन्हिविधेयकत्वे सति घटविधेयकानुमितिर्जायतामित्येतादृशेच्छावारणमनुमितिर्जायतामित्येतादृशेच्छासंग्रहश्च । अनुमितित्वप्रकारकत्वमपीच्छायां निवेश्यं नातो वह्निज्ञानं जायतामित्येतादृशेच्छासङ्ग्रहः, वन्हिप्रत्यक्षोत्पत्यापि तादृशेच्छाविषयसिद्ध्या तादृशेच्छाकाले नानुमितिरिति ध्येयम् । एवं प्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानां पृथगेवोत्तेजकता स्वीकार्य्या । न च पर्वतविशेष्यकवन्हिप्रकारकप्रत्यक्षाविषयत्वेन च सर्वासामनुगमः, तथासति पर्वते वह्निज्ञानं जायतां पर्वते वन्ह्यनुमितिश्च जायतामित्येतादृशेच्छाया असंग्रहापत्तेः, तदानीश्चानुमित्युत्पत्तावेव तादृशेच्छाविषयसिद्ध्याऽनुमितिरेवोत्पद्यते न तु प्रत्यक्षमित्यवधेयम् ।

एवं प्रत्यक्षेच्छानुमितीच्छासत्त्वे च प्रत्यक्षमेवोत्पद्यते न त्वनुमितिः स्वभावतो बलवत्याः सामग्र्या उभयेच्छाकालेपि बलवत्त्वात् इति प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्या अनुमित्साभावमनिवेश्य समानाकारानुमितित्वावच्छिन्नं प्रति तादृशप्रत्यक्षान्यज्ञानत्वावच्छिन्नं प्रत्येव वा प्रतिबन्धकत्वान्तरं कल्प्यम् । अत्र घटप्रत्यक्षं जायतामित्येतादृशेच्छावारणं पूर्ववद्बोध्यम् । पर्वते वह्निज्ञानं जायतामित्येतादृशेच्छाकालेऽनुमित्युपपत्तये च प्रत्यक्षत्वप्रकारकत्वमिच्छायां विशेषणं देयम् । एवं चाक्षुषत्वादिप्रकारकेच्छावैशिष्ट्यं निवेश्य चाक्षुषादि सामग्र्याः पृथगेव प्रतिबन्धकता कल्पनीया । समानविषयकानुमितिं प्रति प्रत्यक्षसामग्र्या न प्रतिबन्धत्वं कल्प्यते, किन्तु तादृशप्रत्यक्षाभावस्यैव कार्य्यकालवृत्तितया हेतुत्वमुपेयते विनानुमित्सां समानविषयकप्रत्यक्षानन्तरमनुमित्यनुत्पादादित्येषा फक्किका पक्षताविचारे निराकृता इति नात्र विचारिता । एवमनुमित्साविशिष्टानुमितिसामग्रीकालेऽसत्यां प्रत्यक्षेच्छायां समानविषयकस्य प्रत्यक्षस्यानुदयात् तत्रानुमित्साविशिष्टसमानविषयकानुमितिसामग्र्याः प्रत्यक्षेच्छामुत्तेजकीकृत्य प्रतिबन्धकता कल्पनीया, एवंसति तथाविधशाब्दं प्रति समानविषयकशाब्दसामग्र्यपेक्षया प्रत्यक्षसामग्र्या बलवत्वात् तत्र शाब्देच्छाविरहविशिष्टायाः प्रत्यक्षसामग्र्याः प्रत्यक्षेच्छाविरहविशिष्टशाब्देच्छाविशिष्टशाब्द

सामग्र्या वा प्रतिबन्धकत्वमुपदर्शितदिशाऽवसेयम् । भिन्नविषयकानुमितिसामग्री सर्वतो बलवती, अन्यथा प्रत्यक्षात्मकपरामर्शानन्तरं तादृशपरामर्शप्रत्यक्षमेव स्यात् नानुमितिः । तादृशसामग्र्याश्च वह्न्याद्यनुमितिसामग्रीत्वादिना प्रतिबन्धकत्वं बोध्यम् ।

अथ वह्निविषयकप्रत्यक्षादेरपि वह्निभिन्नवह्नित्वपर्वतत्वपर्वतादिविषयकतयाऽनुमित्सविशिष्टवह्न्यनुमितिसामग्रीकाले स्वविषकेच्छाधीनतथाविधप्रत्यक्षादेरप्यनुदयप्रसङ्गः । न च पर्वतविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताभिन्नविधेयताया एव निवेशात् वह्निमान् पर्वत इत्यत्र वह्नित्वादेर्विधेयतयाऽभानेनानुपपत्त्यभावः । विधेयत्वञ्च उद्देश्यतावच्छेदकादिविषयताविलक्षणविषयत्वं प्रत्यक्षादिसाधारणमेव इति न तदसंग्रह इति वाच्यम्। निर्धर्मितावच्छेदककघटादिज्ञानीयप्रकारतायाः विधेयतात्वे मानाभावेन तादृशप्रत्यक्षासंग्रहप्रसङ्गात् इति चेन्न ।

वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताभिन्नमुख्यविशेष्यताशाल्यनुमितिभिन्नज्ञानत्वस्यैव प्रतिबध्यतावच्छेदकत्वोपगमेनानुपपत्त्यभावात् । अनुमित्साविशिष्टानुमितिसामग्रीकाले तत्समानविषयकप्रत्यक्षादिगोचरेच्छाविशिष्टप्रत्यक्षादिसामग्रीसत्त्वे समूहालम्बनात्मकं भिन्नविषयकप्रत्यक्षं यदि प्रामाणिकं तदा पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशून्यत्वादिकं ज्ञाने निवेशनीयम् । भिन्नविषयकानुमितिं प्रति अनुमित्साविरहविशिष्टप्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्याः प्रतिबन्धकता बोध्या, एवं भिन्नविषयकशाब्दसामग्र्या अपि इच्छाविशिष्टायाः प्रतिबन्धकता बोध्या ॥

केचित्तु समानविषयकस्थलेऽपि प्रत्यक्षसामग्र्यपेक्षयाऽनुमितिसामग्र्या बलवत्त्वं स्वीक्रियते अनुमितावुत्पन्नायां सिद्धिसत्त्वेनानुमितिसामग्र्यभावेन तद्द्वितीयक्षणे प्रत्यक्षोत्पत्त्या साक्षात्कारित्वग्रहस्य तृतीयक्षण एवोपपत्तेः । द्वितीयक्षण एव साक्षात्कारित्वग्रहो जायते इति तु शपथमन्तरेण न श्रद्दधीमहि ।

अथैतन्मते लाघवाभावेन क्षणोत्पत्त्यपलापोऽनुचितः, मन्मते समानविषयकानुमितिं प्रति प्रत्यक्षसामग्र्या इव तन्मतेऽपि समानविषयकप्रत्यक्षं प्रति तथाविधानुमितिसामग्र्याः प्रतिबन्धकत्वस्य कल्पनीयतया साम्यात् । न च भिन्नविषयकानुमितिसामग्र्या भिन्नविषयकानुमित्यन्यज्ञानत्वावच्छिन्नं प्रति नैकं प्रतिबन्धकत्वं, तथासति घटादिचाक्षुषेच्छादिसत्त्वे घटादिचाक्षुषाद्युत्पत्तये घटचाक्षुषं जायतां घटशाब्दं जायतामित्याकारकनिश्चयेच्छानामेकत्रोत्तेजकतापत्त्या एकविधज्ञानेच्छाकाले

ऽन्यविधज्ञानापत्तेः, किन्तु घटत्वप्रकारकघटविशेष्यकचाक्षुषत्वाद्यव-च्छिन्नं प्रति तादृशचाक्षुषेच्छाविरहविशिष्टवन्ह्यनुमितिसामग्रीत्वादिना प्रतिबन्धकता। अत्र च घटज्ञानं जायतामित्येतादृशेच्छायाः प्रत्यक्षजन-कतया चाक्षुषत्वादिप्रकारकत्वं न निवेशनीयं, अतो घटप्रत्यक्षं जायतां घटचाक्षुषं जायतामित्येतादृशेच्छानां चाक्षुषविषयकत्वेन एक एवाभा-वो निवेशनीय इति ध्येयम्। नचवं वन्ह्यनुमितिसामग्रीकाले यत्किञ्चि-ज्ज्ञानं जायतामित्येतादृशेच्छासत्त्वे घटादिचाक्षुषापत्तिः, वन्हिज्ञानावि-षयकत्वमिच्छायां निवेश्य तद्वारणे च यत्किञ्चिज्ज्ञानं घटचाक्षुषञ्च जाय-तामित्येतादृशेच्छानामसंग्रहप्रसङ्ग इति वाच्यम्। घटत्वप्रकारकत्वावच्छि-न्नघटविशेष्यकत्वप्रकारताभिन्नकिञ्चिद्विषयकत्वप्रकारकत्वानवच्छिन्नचा-क्षुषादिनिष्ठविशेष्यत्वादिना तादृशेच्छानामुत्तेजकत्वाभ्युपगमात्। चाक्षु-षं जायतामित्येतादृशेच्छासंग्रहाय घटविषयकज्ञानं जायतामित्येतादृशेच्छा-वारणाय उक्तप्रकारानुसरणम्। उक्तदिशैव च वारणीयानामिच्छान्तरा-णां वारणं संग्राह्यानाञ्च संग्रहः ईप्सितृभिर्विज्ञेयः। एवमनुमित्साविशिष्टानुमितिसामग्रीकाले चाक्षुषादिगोचरेच्छासत्त्वेऽपि भिन्नविषयकचा-क्षुषादीनामनुदयात् भिन्नविषयकानुमित्यन्यज्ञानत्वावच्छिन्नं प्रति वन्ह्य-नुमित्साविशिष्टवन्ह्यनुमितिसामग्रीत्वादिना प्रतिबन्धकत्वान्तरमेकैकं क-ल्पनीयम्। अत्रापि वन्हिमत्ताज्ञानं जायतां घटज्ञानञ्च जायतामित्येतादृ-शेच्छाद्वयसत्त्वे घटादिचाक्षुषस्यानुदयात् अनुमितित्वप्रकारकत्वं न निवेशनीयम्। यत्किञ्चिज्ज्ञानं जायतामित्याकारकानुमितिविषयकेच्छा-वारणञ्च पूर्व्वसामग्रयाः प्रतिबन्धकताया उभयमतसिद्धत्वेन तत्रैव विष-यमनिवेश्य अनुमित्यन्यज्ञानत्वावच्छिन्नं प्रत्येव तत्प्रतिबन्धकत्वकल्प-नात्। न च समानविषयकस्थले तन्मते प्रतिबन्धकत्वान्तरमनुमितिसाम-ग्रथा इति वाच्यम्। घटचाक्षुषं जायतामित्येतादृशेच्छानां पृथक्पृथगुत्तेजक-त्वानुरोधेन घटचाक्षुषत्वादीनामेव भिन्नविषयकस्थले प्रतिबध्यत्वाव-च्छेदकत्वात् तादृशप्रतिबध्यप्रतिबन्धकभावेन समानविषयकचाक्षुषा-दिवारणासम्भवात् तत्र प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनाया आव-श्यकत्वादिति चेत्।

मैवम्, सिद्धान्तिमते समानविषयकानुमितौ अनुमित्साविरहविशि-ष्टप्रत्यक्षसामग्रयाः प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्रयाश्च प्रतिबन्धकत्वं कल्पनीयं, मन्मते तु तथाविधप्रत्यक्षे अनुमितिसामग्रयाः प्रत्यक्षेच्छावि-रहविशिष्टाया एकमेव प्रतिबन्धकत्वम्, अनुमित्साविशिष्टानुमितिसा-मग्रया भिन्नविषयकप्रत्यक्षप्रतिबन्धकत्वेनैव निर्व्वाहः, तत्र विष-

यनिवेशे प्रयोजनाभावात् सर्वसाधारणानुमित्यन्यज्ञानत्वस्यैव तत्प्रतिबध्यतावच्छेदकत्वोपगम इति लाघवम्। न च मन्मतेऽपि प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्याः समानविषयकशाब्दादिस्थलीयप्रतिबन्धकतयैव निर्वाहः। तत्र शाब्दबोधानुमित्यादिसाधारणसमानविषयकपरोक्षत्वस्यैव प्रतिबध्यतावच्छेदकत्वोपगमादिति वाच्यम्। परोक्षत्वजातेरन्यत्र दूषितत्वात्, प्रत्यक्षान्यत्वविशिष्टज्ञानत्वस्यैव प्रतिबध्यतावच्छेदकत्वे विशेष्यविशेषणभावे विनिगमनाविरहेण कार्य्यकारणभावबाहुल्यात् शाब्दादिस्थले शाब्दत्वादेरपि प्रतिबध्यतावच्छेदकताया उपगन्तव्यतयाऽनुमितिस्थले प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्याः पृथक्प्रतिबन्धकताकल्पनाया आवश्यकत्वात्, एतन्मते समानविषयकानुमितिसामग्र्या इव तथाविधशाब्दसामग्र्या अपि प्रत्यक्षसामग्र्या बलवत्त्वाभ्युपगमे शाब्दस्थलेऽपि तादृशसामग्र्याः प्रतिबन्धकताया असिद्धत्वाच्च। न च तव मतेऽपि समानविषयकप्रत्यक्षस्थलेऽनुमित्सा विशिष्टानुमितिसामग्र्याः पृथक् प्रतिबन्धकत्वमावश्यकं, शाब्देच्छाविशिष्टशाब्दसामग्रीजन्यसमानविषयकशाब्दबोधे व्यभिचारवारणाय भिन्नविषयकत्वस्य भिन्नविषयकस्थलीयतादृशसामग्रीप्रतिबध्यतावच्छेदककोटाववश्यं निवेशनीयत्वादिति वाच्यम्। प्रत्यक्षसामग्र्यपेक्षया इव शाब्दसामग्र्यपेक्षया अपि समानविषयकानुमितिसामग्र्या बलवत्त्वोपगमात् समानविषयकशाब्देच्छाविशिष्टशाब्दसामग्रीतथाविधानुमित्साविशिष्टानुमितिसामग्रीकालेऽनुमितेरेवोपगमात् भिन्नविषयकत्वस्य तादृशसामग्रीप्रतिबध्यतावच्छेदककोटावनिवेशात्।

वस्तुतोऽनुमित्यन्यज्ञानत्वस्य तत्समनियतजातिविशेषस्य च नित्यसाधारणत्वेन जन्यतानवच्छेदकतया जन्यत्वनिवेशे गौरवात्, जन्यप्रत्यक्षवृत्तिविशेषस्य शाब्दत्वादेश्च तादृशसामग्रीप्रतिबध्यतावच्छेदकताया आवश्यकत्वात् प्रत्यक्षशाब्दादिषु भिन्नभिन्नप्रतिबध्यप्रतिबन्धकभाव आवश्यकः, इत्थञ्च प्रत्यक्षस्थलीयप्रतिबध्यप्रतिबन्धकभावे भिन्नविषयकत्वादेरनिवेशेपि मन्मते व्यभिचाराभावात् एकप्रतिबध्यप्रतिबन्धकभावेनैव निर्व्वाह इति वदन्ति।

तदप्यसत्, पर्वते प्रत्यक्षादिभिन्नं वन्हिज्ञानं जायतामित्याकारकानुमितिविषयकेच्छाविशिष्टवन्ह्यनुमितिसामग्रीकालेऽपि घटादिप्रत्यक्षानुदयात् भिन्नविषयकप्रत्यक्षस्थलीयप्रतिबन्धकतायामनुमितित्वप्रकारकतद्प्रकारकेच्छासाधारणानुमितिविषयकेच्छात्वेनैव तादृशेच्छा निवेश्यते, तथाच पर्वते वन्हिज्ञानं जायतामित्येतादृशेच्छा-

काले वन्ह्यनुमितिसामग्रीसत्त्वेऽपि वन्हिप्रत्यक्षस्यैवोत्पत्त्या व्यभिचारवारणाय अनायत्या तत्र भिन्नविषयकत्वं प्रतिवध्यतावच्छेदककोटौ निवेशनीयं, तथाच तादृशंप्रतिवध्यप्रतिबन्धकभावेनानिर्वाहात् अनुमितित्वप्रकारकेच्छाविशिष्टानुमितिसामग्र्याः समानविषयकप्रत्यक्षं प्रति प्रतिबन्धकत्वान्तरकल्पनमावश्यकमेवेति न लाघवावकाशः, प्रत्युत तन्मते प्रत्यक्षसामग्र्यपेक्षयाऽनन्तबाधतदभावव्याप्यवत्ताज्ञानाद्यभावघटिताया गुरुशरीराया लिङ्गादिभेदेन बहुविधाया अनुमितिसामग्र्याः समानविषयकप्रत्यक्षं प्रति प्रतिबन्धकतया विपरीतगौरवमिति लघुशरीराया अल्पीयस्याः प्रत्यक्षसामग्र्या एव समानविषयकानुमितिं प्रति प्रतिबन्धकत्वमुचितं, लघुशरीरत्वञ्च तस्या बाधाभावाद्यघटिततया। न च लौकिकप्रत्यक्षेऽपि तदिन्द्रियजन्यबाधाभावस्य हेतुतया तत्सामग्र्यपि बाधाभावघटितेति वाच्यम्। ईदृशबाधाभावस्य लौकिकप्रत्यक्षे हेतुत्वेऽपि तादृशबाधकालेऽनुमितेरनुदयात् अनुमितिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकतायां तादृशबाधविरहस्य प्रयोजनविरहेणानिवेशात्, समानविषयकप्रत्यक्षं प्रति अनुमितिसामग्र्याः प्रतिबन्धकतायान्तु बाधाभावादिनिवेशनमावश्यकम्, अन्यथा भिन्नेन्द्रियादिजन्यबाधादिकाले परामर्शादिसत्त्वेऽपि प्रत्यक्षानुत्पादप्रसङ्गादिति।

अथ प्रत्यक्षसामग्र्यपेक्षयाऽनुमितिसामग्र्याः गुरुत्वे बहुत्वे च तस्या एव प्रत्यक्षसामग्र्यपेक्षया बलवत्त्वमुचितं प्रत्यक्षसामग्र्या बलवत्त्वेऽनुमित्सा विशिष्टानुमितिसामग्रीकाले प्रत्यक्षवारणायानुमित्साविशिष्टानुमितिसाग्र्याः समानविषयकप्रत्यक्षं प्रति प्रतिबन्धकतायाः कल्पनीयतया गुरुशरीरानन्तसामग्र्यामिच्छानिवेशेन गौरवप्रसङ्गात्, मन्मते लघुशरीरान्यतरप्रत्यक्षसामग्रीप्रतिबन्धकतायां तन्निवेशेन लाघवात। न चानुमितिसामग्र्याः बलवत्त्वे प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्रीकालेऽनुमित्साविशिष्टानुमितिसामग्रीसत्त्वे प्रत्यक्षवारणायानुमित्साविशिष्टानुमितिसाग्र्याः प्रत्यक्षं प्रति प्रतिबन्धकत्वं कल्पनीयमिति गुरुसामग्रीप्रतिबन्धकतायामिच्छानिवेशनं भवन्मतेऽपीति न लाघवावकाशः किन्त्वस्मन्मतेऽपि अनुमितिसामग्र्या एकं प्रतिबन्धकत्वं भवन्मतेऽप्यनुमित्सावैशिष्ट्यं निवेश्य प्रत्यक्षेच्छाभाववैशिष्ट्यं निवेश्य चैकं प्रतिबन्धकत्वान्तरं तस्याः कल्पनीयमिति गुरुसामग्र्याः प्रतिबन्धकताबाहुल्यात् गौरवमेवेति वाच्यम्। प्रत्यक्षसामग्र्या बलवत्त्वमते अनुमित्साविशिष्टानुमितिसामग्रीदशायां प्रत्यक्षेच्छाधीनप्रत्यक्षोपपत्तये प्रत्यक्षेच्छा-

विरहविशिष्टानुमित्सावशिष्टाऽनुमितिसामग्रीत्वेनैव प्रतिबन्धकताया वाच्यतया प्रत्यक्षेच्छानुमित्सादीनां मिथो विशेष्यविशेषणभावे विनिगमनाविरहेणानुमित्साविशिष्टानुमितिसामग्रीप्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्र्योः पृथक् प्रतिबन्धकत्वकल्पनापेक्षया गुरुसामग्रीप्रतिबन्धकताबाहुल्यात् भवन्मतेपि गौरवादिति।

नैवम्, सिद्धान्तिमते प्रत्यक्षेच्छाविरहानुमित्सयोरेकत्र निवेशेन विशेष्यविशेषणभावे विनिगमनाविरहात् गुरुसामग्र्याः प्रतिबन्धकताबाहुल्यमिव भवन्मतेऽपि तत्रानुमितिसामग्र्यां सिद्ध्यभावनिवेशस्याधिकतया सिद्ध्यभावप्रत्यक्षेच्छाऽभावादीनां विशेष्यविशेषणभावे विनिगमनाविरहेण तादृशसामग्र्याः प्रतिबन्धकत्वबाहुल्यम्, मन्मते तु समानविषयकप्रत्यक्षस्थलीयानुमितिसामग्रीप्रतिबन्धकतायां सिद्ध्यभावो न निवेश्यते, अनुमित्सायास्तत्र निवेशादनुमित्साकाले च सिद्धिसत्त्वेप्यनुमितेरेवोत्पत्त्या प्रत्यक्षस्यानुदयात् इति नास्माकं तन्निवेशप्रयुक्तप्रतिबन्धकताबाहुल्यमिति प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्र्याः प्रतिबन्धकत्वबाहुल्यं मुभयमते समानं परन्तु प्रत्यक्षेच्छाविरहमनिवेश्यानुमितिसामग्र्या इच्छाविशिष्टायाः पृथक् प्रतिबन्धकतायाः भवता कल्पनीयत्वात् गुरुसामग्र्याः प्रतिबन्धकत्वाधिक्यं दुर्वारमेवेति प्रत्यक्षसामग्र्या बलवत्त्वमेवोचितमिति। एवं समानविषयकशाब्दसामग्र्या अपि अनुमितिसामग्र्यपेक्षया बलवत्त्वमुचितं तस्या हीनबलत्वे शाब्देच्छाविशिष्टशाब्दसामग्रीकालेऽनुमितिवारणायानुमित्साविरहविशिष्टशाब्दसामग्रीत्वेन प्रतिबन्धकत्वकल्पनस्यावश्यकतयाऽनुमित्साविरहेण शाब्देच्छादीनां मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण शाब्दसामग्र्याः प्रतिबन्धकत्वबाहुल्यात्, मन्मते तु शाब्देच्छाऽनुमित्साभावयोः पृथक् प्रतिबन्धकतायामेव निवेशेन विशेष्यविशेषणभावे विनिगमनाविरहस्याप्रसक्तेः। न च भवन्मतेऽपि अनुमितिसामग्रीप्रतिबन्धकतायामनुमित्साशाब्देच्छाभावयोरेकत्र निवेशात् अनुमितिसामग्र्याः प्रतिबन्धकत्वबाहुल्यात् कथं लाघवमिति वाच्यम्। अनुमितिसामग्र्यपेक्षया शाब्दसामग्र्या आकाङ्क्षायोग्यतातात्पर्यज्ञानादिरूपबहुतरकारणघटितत्वेन गुरुतया तत्प्रतिबन्धकत्वबाहुल्यापेक्षयाऽनुमितिसामग्रीप्रतिबन्धकताबाहुल्यस्यैवोचितत्वादिति दिक् ॥ ० ॥

चाक्षुषस्पार्शनसामग्रीयोगे तु चाक्षुषमेव जायते तदनन्तरं पश्यामीत्यनुव्यवसायस्यैवोदयात्, अतः स्पार्शनं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वं वाच्यं तादृशसामग्र्याश्च आलोकसंयोगविशिष्टचाक्षु-

षवद्वृत्तिचक्षुःसंयोगत्वेन प्रतिबन्धकता, आलोकसंयोगनिवेशात् तमसि घटादिचक्षुःसंयोगसत्त्वेऽपि न स्पार्शनानुपपत्तिः । वाय्वादिचक्षुःसंयोगदशायां स्पार्शनोपपत्तये चाक्षुषवदिति विशेषणम् । चाक्षुषवत्त्वञ्च लौकिकविषयतया, वाय्वादेरपि चाक्षुषोपनीतभानविषयत्वात् । एवञ्च रूपमहत्त्वानुद्भूतरूपाभावादीनां चाक्षुषहेतुत्वेऽपि सामग्रीप्रतिबन्धकतायां न ते निवेश्यन्ते प्रयोजनाभावात् । प्रतिबध्यतावच्छेदकन्तु घटस्पार्शनत्वादिकं घटस्पार्शनं जायतामित्याकारकेच्छानां विशिष्योत्तेजकत्वानुरोधात् । सकलेच्छानां स्पार्शनेच्छात्वेनैवोत्तेजकत्वे पटस्पार्शनं जायतामित्याकारकेच्छाकाले घटादिस्पार्शनापत्तेः ।

अथ घटस्पार्शनेच्छानां यदि घटस्पार्शनविषयकेच्छात्वादिना उत्तेजकता, तदा घटचाक्षुषस्पार्शनादिसामग्रीसत्त्वे घटज्ञानं जायतामित्येतादृशेच्छासत्त्वे घटस्पार्शनस्य प्रसङ्गः । यदि च घटस्पार्शनत्वप्रकारकेच्छात्वादिना उत्तेजकता, तदा पटचाक्षुषसामग्रीकाले घटस्पार्शनमात्रसामग्रीसत्त्वे घटज्ञानत्वादिप्रकारकेच्छासत्त्वे घटस्पार्शनानुपपत्तिः, तदानीञ्च स्पार्शनोत्पत्तिं विना तथाविधेच्छाविषयसिद्ध्यभावात् स्पार्शनोत्पाद आवश्यक इति न तदुत्पाद इष्टापत्तिरिति चेत् ।

घटस्पार्शनत्वाद्यवच्छिन्नं प्रति घटस्पार्शनत्वादिप्रकारकेच्छाविरहविशिष्टघटचक्षुःसंयोगत्वघटादिस्पार्शनेच्छाविरहविशिष्टचक्षुःसंयोगत्वाभ्यां प्रतिबन्धकते कल्प्येते । एवञ्च यत्र घटचाक्षुषसामग्री तत्स्पार्शनसामग्री च तत्र घटज्ञानं जायतामित्येतादृशेच्छासत्त्वे घटस्पार्शनेच्छाविरहविशिष्टचाक्षुषसामग्र्यभावसत्त्वेऽपि घटस्पार्शनत्वप्रकारकेच्छाविरहविशिष्टचाक्षुषसामग्रीरूपप्रतिबन्धकसत्त्वान्न स्पार्शनापत्तिः । यत्र पटचाक्षुषसामग्री घटस्पार्शनमात्रसामग्री घटज्ञानत्वादिप्रकारिका च स्पार्शनेच्छा तत्र घटस्पार्शनत्वादिप्रकारकेच्छाविरहविशिष्टघटचाक्षुषसामग्र्यभावो विशेष्याभावप्रयुक्तो विशेषणाभावप्रयुक्तश्च घटस्पार्शनेच्छाविशिष्टसामग्र्यभाव इति न स्पार्शनानुपपत्तिः । अत्र च द्वितीयप्रतिबन्धकतायामालोकसंयोगादिनिवेशो नास्ति अन्धकारस्थघटादिचक्षुःसंयोगदशायामन्धकारस्यैवेदन्त्वादिना चाक्षुषोदयात् तदानीं स्पार्शनानुत्पादात् । प्रथमप्रतिबन्धकतायान्तु तन्निवेशनमावश्यकम्, अन्यथा ऽन्धकारेण युक्तस्य घटस्य घटज्ञानं जायतामित्येतादृशेच्छासत्त्वेऽपि स्पार्शनानुत्पादप्रसङ्गात् इत्यवधेयम् । उभयेच्छाकाले स्पार्शनवारणाय चाक्षुषेच्छाविशिष्टचाक्षुषसामग्र्या इच्छामुत्तेजिकामकृत्वा प्रतिबन्धकत्वान्तरं कल्पनीयम् । अत्र च विषयमाश्रित्य स्पार्श-

नत्वमेव प्रतिबध्यतावच्छेदकं वाच्यम्, प्रतिबन्धकता तु घटचाक्षुषेच्छाविशिष्टघटचाक्षुषसामग्रीत्वादिना, अतो नैकगोचरचाक्षुषेच्छाकालीनान्यगोचरचाक्षुषसामग्रीदशायां स्पार्शनेच्छाधीनस्पार्शनानुदयापत्तिः । अथवा सामानाधिकरण्यसम्बन्धेन चाक्षुषेच्छाविशिष्टचक्षुःसंयोगत्वेनैव प्रतिबन्धकत्वं कल्प्यते, सामानाधिकरण्यञ्च स्वीयचाक्षुषनिष्ठविशेष्यतानिरूपितविषयितासंसर्गावच्छिन्नप्रकारतासम्बन्धेन स्वाधिकरणे समवायेन वृत्तिः। पटचाक्षुषं जायतामित्येतादृशेच्छायाञ्च नैतादृशसामानाधिकरण्यं घटचक्षुःसंयोगादौ इति नानुपपत्तिः ।

अथ चाक्षुषेच्छादीनां इच्छात्वेन चाक्षुषत्वप्रकारकेच्छात्वेन वा निवेशः । आद्ये पटप्रत्यक्षं जायतामित्येतादृशेच्छाविशिष्टचाक्षुषसामग्रीकाले स्पार्शनेच्छासत्त्वे पटस्पार्शनापत्तिः । किञ्च घटप्रत्यक्षं स्पार्शनञ्च जायतामित्येतादृशेच्छाकाले घटचाक्षुषसामग्रीसत्त्वे घटस्पार्शनानुदयप्रसङ्गः, तदानीञ्च घटस्पार्शनोत्पत्तौ तथाविधेच्छाया उभयविषयसिद्ध्या स्पार्शनस्यैवोत्पत्त्या तदनुत्पाद इष्टापत्तेरसम्भवात् इति चेन्न ।

घटभिन्नविषयकस्पार्शनत्वावच्छिन्नं प्रति घटचाक्षुषविषयकेच्छाविशिष्टचाक्षुषसामग्रीत्वादिना प्रतिबन्धकता, अतो नोक्तस्थले घटस्पार्शनानुदयप्रसङ्गः । एवं विषयानाश्रितस्पार्शनत्वावच्छिन्नं प्रति चाक्षुषत्वप्रकारकेच्छाविशिष्टघटचाक्षुषसामग्रीत्वादिना उपदर्शितसामानाधिकरण्यसम्बन्धेन चाक्षुषत्वप्रकारकेच्छाविशिष्टचाक्षुषसामग्रीत्वादिना वा प्रतिबन्धकत्वं कल्पनीयम्, अतो न समानविषयकचाक्षुषसामग्रीकाले स्पार्शनापत्तिः । चाक्षुषसामग्र्याश्च प्रतिबन्धकता समवायेन स्पार्शनस्य प्रतिबध्यता च पूर्वोक्तार्थनिष्ठपरम्परासम्बन्धेन, अत एकपुरुषीयचाक्षुषसामग्रीकाले नान्यपुरुषीयस्पार्शनानुपपत्तिः ।

वस्तुतः यत्र स्पार्शनत्वप्रकारकेच्छा उत्तेजिका तत्र विषयनिष्ठप्रत्यासत्त्यैव प्रतिबध्यप्रतिबन्धकभावः, आत्मनिष्ठप्रत्यासत्त्या घटस्पार्शनत्वावच्छिन्नं प्रति घटस्पार्शनत्वादिप्रकारकेच्छाविरहविशिष्टघटचाक्षुषसामग्रीत्वादिनैव प्रतिबन्धकताया विवक्षणीयत्वे विषयभेदेनानन्तप्रतिबध्यप्रतिबन्धकभावापत्तेः, मन्मते विषयमनिवेश्य विषयतासम्बन्धेन स्पार्शनं प्रति स्वीयस्पार्शनत्वावच्छिन्नविशेष्यतानिरूपितविषयितासंसर्गावच्छिन्नप्रकारत्वसंसर्गावच्छिन्नप्रतियोगिताकस्पार्शनेच्छाभावविशिष्टचक्षुःसंयोगत्वेन समवायप्रत्यासत्त्यप्रातिबन्धकताकल्पने विषयभेदेन प्रतिबन्धकताया बाहुल्याभावात् । नचैतन्मते एकपुरुषीयचाक्षुषसामग्रीकालेऽन्यपुरुषीयस्पार्शनोपपत्तये तत्तत्पुरुषीय-

स्पार्शनत्वावच्छिन्नं प्रति तत्तत्पुरुषीयचक्षुःसंयोगत्वेन प्रतिबन्धकत्वं कल्पनीयमिति पुरुषभेदेन प्रतिबध्यप्रतिबन्धकभावबाहुल्यात् न लाघवावकाश इति वाच्यम्। पुरुषापेक्षया विषयाणामनन्ततया पुरुषभेदेन प्रतिबन्धकताबाहुल्येऽपि लाघवसम्भवात्। स्पार्शनत्वप्रकारकतद्‌प्रकारकेच्छासाधारणरूपेण यत्रोत्तेजकता तत्रोपदर्शितविषयनिष्ठप्रत्यासत्त्या प्रतिबन्धकताभ्युपगमे घटादिचाक्षुषसामग्रीकाले पटादिस्पार्शनापत्तर्वारयितुमशक्यतया तत्र विषयं निवेश्य आत्मनिष्ठप्रत्यासत्त्या एव प्रतिबन्धकत्वं कल्प्यते।

अथैवं तत्रापि विषयतासम्बन्धेन स्पार्शनं प्रति चाक्षुषसामग्रीविशिष्टस्वीयस्पार्शननिष्ठविशेष्यतानिरूपितविषयितासंसर्गावच्छिन्नप्रकारतासंसर्गावच्छिन्नप्रतियोगिताकेच्छाभावस्य विशेषणताप्रत्यासत्त्या प्रतिबन्धकता विषयमनिवेश्यैव कल्प्यते, सामग्रीवैशिष्ट्यञ्च तादृशेच्छाभावे एककालीनत्वसम्बन्धेन बोध्यम्। एवं चाक्षुषत्वप्रकारकेच्छाविशिष्टचाक्षुषसामग्रीप्रतिबन्धकतायामपि न विषयनिवेशः, किन्तु विषयमनिवेश्य विषयतासम्बन्धेन स्पार्शनत्वावच्छिन्नं प्रति स्वीयचाक्षुषत्वावच्छिन्नविशेष्यतानिरूपितविषयितासंसर्गावच्छिन्नप्रकारताश्रयसमवेतत्वसम्बन्धेन चाक्षुषेच्छाविशिष्टचक्षुःसंयोगत्वेन समवायसम्बन्धेन वा प्रतिबन्धकता कल्प्यते। कालिकविशेषणतैव वा उभयघटकप्रत्यासत्तिः। एवं चाक्षुषविषयकेच्छाविशिष्टचाक्षुषसामग्र्या अपि विषयमनिवेश्य स्पार्शनं प्रति स्वीयचाक्षुषनिष्ठविशेष्यतानिरूपितविषयितासंसर्गावच्छिन्नप्रकारताश्रयसमवेतत्वसम्बन्धेन चाक्षुषेच्छाविशिष्टचक्षुःसंयोगत्वेनैव कालिकप्रत्यासत्त्या वा प्रतिबन्धकता कल्प्यते। नचैवं घटप्रत्यक्षं घटस्पार्शनं च जायतामित्येतादृशेच्छाकाले घटस्पार्शनानुदयप्रसङ्ग इति वाच्यम्। स्वीयस्पार्शनत्वावच्छिन्नविशेष्यतानिरूपिततादृशप्रकारताश्रयवृत्तित्वसम्बन्धेन स्पार्शनत्वप्रकारकेच्छाविशिष्टालोकसंयोगाभावस्य स्वाश्रयविषयकचाक्षुषविषयकत्वसम्बन्धेन चाक्षुषेच्छायां वैशिष्ट्यनिवेशात्, उक्तस्थले तादृशेच्छायाः तथाविधस्पार्शनत्वप्रकारकेच्छाविशिष्टात्मकसंयोगाभावविशिष्टत्वाभावेनानुपपत्त्यसम्भवात्। नचैवं घटचाक्षुषं घटस्पार्शनञ्च जायतामित्येतादृशेच्छाकाले घटस्य चाक्षुषस्पार्शनसामग्रीकाले पटस्य स्पार्शनसामग्रीकाले पटादेः स्पार्शनापत्तिरिति वाच्यम्। चाक्षुषत्वप्रकारकेच्छाविशिष्टचाक्षुषसामग्र्या अपि कालिकप्रत्यासत्त्यैव प्रतिबन्धकभावोपगमात्, तत एव तादृशापत्तेर्वारणात्। यत्र च घटस्य स्पार्शनमात्रसामग्रीदशायां घटप्रत्यक्षं स्पार्शनञ्च जायतामित्येतादृशेच्छा

जागदीशोऽव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे २ ) रु० २—८

काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता । (व्या० वि० ११) पूर्वार्द्धम् । रु० २—८ उत्तरार्द्धं । रु० २-८

त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् । (पुराणेतिहास वि०१) रु० ९—०

आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३ ) रु० १—४

(१) संस्कारदीपकः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीय विरचितः । गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग निरूपणात्मकः प्रथमोभागः । (कर्म० वि० ८) रु० २-०

(२) संस्कारदीपकः । " " " विवाह-गर्भाधानादिकशान्त्यन्तसंस्कारनिरूपणात्मकः द्वितीयोभागः । " रु० ३-०

(३) संस्कारदीपकः । " तुलादानादि-मूलशान्त्यादि निरूपणात्मकः नाम परिशिष्टदीपकः तृतीयोभागः । " रु० ३-०

वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापन सहितः । म० म० पण्डित नित्यानन्द पन्त-पर्वतीय विरचितः । ( कर्म्म० वि ९ ) रु० ३-८

श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम् । (कर्म० वि० १०) रु० २—०

नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि०१९) रु० १—४

ब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

वृत्तरत्नावलीवल्लभः । सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छ-न्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागमसार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्त्तिना महामहोपाध्यायेन देवीप्रसाद-पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः । ( छन्दः शास्त्र वि० ४) रु० २—८

सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम् । (न्याय विभागे ४) ) रु० १—८

वेदभाष्यभूमिकासंग्रहः । ( सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः ) । [ वेद० वि० ९ ] रु० २—८

माधवीयधातुवृत्तिः । श्रीमत्सायणाचार्यविरचिता । ( व्या० वि० १२) रु० ९—०

बौधायनधर्मसूत्रम् । श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम् । [कर्म०वि० ११] रु० ४—०

ताण्ड्यमहाब्राह्मणम् । सायणाचार्यविरचितभाष्यसहितम् । ( वेद वि० ६ ) ( प्रथमोभागः ) रु० ९-०-० ( द्वितीयोभागः ) रु० ७-०-०

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा–संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम ॥ २ ॥

स्तवकाः ४६८.

*Printed by Jaya Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*
1940.

पटस्य स्पार्शनसामग्री च तत्र पटादिस्पार्शनमिष्टमेव, तत्र स्पार्शनस्यावश्यकतया घटपटोभयविषयकसमूहालम्बनरूपस्य तस्याभ्युपगमे क्षतिविरहादिति दिक्।

स्पार्शनेच्छाविशिष्टस्पार्शनसामग्रीकाले चाक्षुषसामग्रीसत्त्वे चाक्षुषगोचरेच्छायामसत्यां चाक्षुषापत्तेर्वारणाय स्पार्शनेच्छाविशिष्टस्पार्शनसामग्र्याश्चाक्षुषेच्छाविरहविशिष्टायाः प्रतिबन्धकत्वमुपदर्शितदिशा कल्पनीयम्।

केचित्तु चाक्षुषसामग्रीस्पार्शनसामग्रीयौगपद्ये स्पार्शनमेव स्वीकुर्वन्ति, चाक्षुषसामग्र्यपेक्षया स्पार्शनसामग्र्या आलोकसंयोगाघटितत्वेन लघुशरीरतया स्पार्शनं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वकल्पनापेक्षया चाक्षुषं प्रति स्पार्शनसामग्र्याः प्रतिबन्धकत्वकल्पने लाघवादिति।

तदसत्, चाक्षुषसामग्र्या हीनबलत्वेऽपि स्पार्शनं प्रति इच्छाविशिष्टायाश्चाक्षुषसामग्र्याः प्रतिबन्धकत्वकल्पनस्यावश्यकतया लाघवानवकाशात्। न च चाक्षुषसामग्र्या बलवत्त्वे स्पार्शनेच्छाभावं चाक्षुषेच्छाञ्च पृथक् पृथक् निवेश्य स्पार्शनं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकताद्वयं कल्पनीयम्, मन्मते च तस्या एकमेव प्रतिबन्धकत्वमिति भवन्मते सामग्रीप्रतिबन्धकताया आधिक्यात् गौरवमिति वाच्यम्। भवन्मते स्पार्शनेच्छाभावचाक्षुषेच्छे एकत्र निवेश्य चाक्षुषसामग्र्याः प्रतिबन्धकत्वस्य कल्पनीयतया तयोः परस्परं विशेष्यविशेषणभावे विनिगमनाविरहेण चाक्षुषसामग्र्याः प्रतिबन्धकताधिक्यात्।

यत्तु घटादिस्पार्शनेच्छाविशिष्टस्पार्शनसामग्री—तच्चाक्षुषसामग्री पटादिचाक्षुषेच्छाविशिष्टचाक्षुषसामग्रीकाले घटादिचाक्षुषेच्छायामसत्यामपि घटपटादिविषयकसमूहालम्बनचाक्षुषोदयात् पटचाक्षुषगोचरेच्छाविशिष्टपटादिचाक्षुषसामग्र्यभावघटिता एव इच्छाविशिष्टघटादिस्पार्शनसामग्र्याः घटादिचाक्षुषप्रतिबन्धकत्वं स्वीकरणीयम्, इत्थञ्च स्पार्शनेच्छाविशिष्टस्पार्शनसामग्र्यभावघटितचाक्षुषसामग्र्यपेक्षया स्पार्शनसामग्र्येव गुरुशरीरा तस्याः प्रतिबन्धकताधिक्येन च सिद्धान्तमत एव गौरवं, तदाधिक्यञ्च चाक्षुषेच्छाभावस्पार्शनेच्छयोरेकत्र निवेशेन सामग्र्या बलवत्त्वमते पृथगेव तयोर्निवेशादिति।

तदसत्, उपदर्शितस्थले पटाद्यविषयकस्यैव घटादिस्पार्शनस्य स्वीकारेण सामग्र्यभावाघटिताया एव सामग्र्याः प्रतिबन्धकत्वोपगमात् चाक्षुषसामग्र्या एव गुरुशरीरत्वादिति॥

अत्राहुः—स्पार्शनत्वावच्छिन्नं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वे मानाभावः, तत्तदिन्द्रियजन्यज्ञाने तत्तदिन्द्रियमनोयोगस्य हेतुत्वात्, एकदा चक्षुरादिभिर्मनोयोगस्यैवानभ्युपगमात् चाक्षुषस्पार्शनादिसामग्रीयौगपद्यस्यैवासम्भवात्, नच जन्यज्ञानत्वावच्छिन्नं प्रति त्वङ्मनोयोगस्य हेतुत्वाच्चाक्षुषसामग्रीकाले त्वङ्मनोयोगस्यावश्यं स्वीकरणीयतया इन्द्रियमनोयोगस्य हेतुत्वेऽपि चाक्षुषसामग्रीकाले स्पार्शनापत्तिरस्त्येवेति वाच्यम्, विषयावच्छिन्नत्वङ्मनोयोगस्यैव स्पार्शनहेतुत्वोपगमात् चक्षुर्मनोयोगकालीनत्वङ्मनोयोगस्य च विषयावच्छिन्नत्वानभ्युपगमेन तदानीं स्पार्शनापत्त्यसम्भवात् ॥ * ॥

इति सामग्रीप्रतिबन्धकतावाद(२९)वीचिः ।

ॐ नमः शिवाय

## श्री महामहोपाध्यायगदाधरभट्टाचार्यकृतः

## कारणतावाद(३०)वीचिः ।

अथ किन्नाम कारणत्वं यदवच्छेदकावच्छिन्नसमुदायः सामग्री ?

अत्र प्राञ्चः-अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं कारणत्वम् । तत्र येन रूपेण यादृशकार्यं प्रति पूर्ववर्तित्वमवगम्यते तादृशकार्यं प्रति तद्रूपमन्यथासिद्धम् , यथा घटादिकं प्रति दण्डत्वादिकम्(१) ॥ कारणान्तरेण सह यद्रूपावच्छिन्नस्य यादृशकार्यं प्रति पूर्ववर्तित्वमवगम्यते तद्रूपावच्छिन्नं तादृशकार्यं प्रति अन्यथासिद्धम् , यथा घटादिकं प्रति दण्डरूपत्वाद्यवच्छिन्नम् , दण्डसमवहितचक्रत्वाद्यवच्छिन्नञ्च(२) ॥ अन्यं प्रति पूर्ववर्तित्वे ज्ञात एव यद्रूपावच्छिन्नस्य प्रकृतकार्यं प्रति पूर्ववर्तिताग्रहस्तद्रूपावच्छिन्नं तत्कार्यं प्रत्यन्यथासिद्धम् . यथा ज्ञानादिकं प्रत्याकाशत्वाद्यवच्छिन्नम् , तत्र हि शब्दादिसमवायिकारणतयाऽऽकाशादिसिद्धावेव तस्य ज्ञानादिपूर्ववर्तित्वं ग्रहीतव्यमिति तत्र शब्दादिपूर्ववर्तिताग्रहापेक्षा । यथा वा घटादिकं प्रति कुलालपितृत्वाद्यवच्छिन्नं, कुलालपितृत्वादेः कुलालादिपूर्ववर्तिताघटितत्वात्तदवच्छिन्नस्य घटादिपूर्ववर्तित्वग्रहे कुलालादिपूर्ववर्तित्वग्रहस्यापेक्षितत्वात् । अपूर्वादिपूर्ववर्तित्वमगृहीत्वापि यागत्वाद्यवच्छिन्ने स्वर्गादिपूर्ववर्तित्वग्रहसम्भवादपूर्वद्वारा न यागत्वाद्यवच्छिन्नस्य स्वर्गादिकार्यं प्रत्यन्यथासिद्धत्वम् । एतादृशस्थल एव व्यापारेण व्यापारिणो नान्यथासिद्धिः। कुलालादिपितृत्वाद्यवच्छिन्नस्य कुलालादिव्यापारकत्वेऽपि अन्यथासिद्धिरेव(३)॥ अवश्यक्लृप्तनि-

यतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतं यद्धर्मावच्छिन्नं तद्धर्मावच्छिन्नमपि तत्रान्यथासिद्धम्, यथा पाकजगन्धादौ रूपादिप्रागभावः, तत्र हि सुरभ्यसुरभिमदवयवारब्धघटादौ पाकजगन्धप्रागभावाभाववति रूपादिप्रागभाववति गन्धोत्पादवारणाय तत्प्रागभावस्य तन्नियतपूर्ववर्तित्वस्य कल्पनात्(४)॥ प्रकृतकार्यं प्रति यद्धर्मव्याप्यधर्मस्यागुरोः कारणतावच्छेदकत्वसम्भवस्तदवच्छिन्नश्च प्रकृतकार्ये अन्यथासिद्धम्, यथा घटादौ द्रव्यत्वाद्यवच्छिन्नम्, घटादिप्रकृतकार्यजनकतावच्छेदकश्च दण्डत्वादि, तस्य द्रव्यत्वव्याप्यत्वात् ॥

वस्तुतस्तु नियतपूर्ववर्तितावच्छेदकयद्धर्मावच्छेदेन यादृशकार्यं प्रति न कारणत्वव्यवहारः प्रामाणिकानां तद्रूपावच्छिन्नमेव तादृशकार्ये अन्यथासिद्धम्; तेन शब्दादिपूर्ववर्तित्वमगृहीत्वापि शब्दसमवायित्वादिनाऽऽकाशादौ ज्ञानादिपूर्ववर्तित्वग्रहसम्भवेऽपि पूर्वसंयोगनाशादिपूर्ववर्तित्वमगृहीत्वापि विभागत्वाद्यवच्छिन्नस्योत्तरसंयोगादिपूर्ववर्तिताग्रहसम्भवेऽपि च तत्र तेषामन्यथासिद्धत्वमेव । अत एव लघुधर्मसमनियतगुरुधर्मावच्छिन्नस्य प्रतिबन्धकाभावनिष्ठतद्व्यक्तित्वावच्छिन्नस्य च न कारणत्वं, तद्रूपावच्छिन्नस्य निरुक्तान्यथासिद्धत्वात् । अधिकभेदनिवेशाद्गौरववारणाय नियतपूर्ववृत्तितावच्छेदकत्वं धर्मविशेषणम् । तच्च न कारणताशरीरघटकं किन्तु भेदप्रतियोगिपरिचायकमात्रम् । तादृशधर्माणाञ्च प्रातिस्विकरूपेण भेदकूटस्य कारणतावच्छेदकांशे विशेषणत्वं बोध्यम्, अतो न 'प्रक्षालनाद्धि पङ्कस्ये'त्यादिन्यायावतारः । एकस्यैव केनचिद्रूपेणान्यथासिद्धत्वात् रूपान्तरेण जनकत्वाच्च अन्यथासिद्धान्यत्वेन न कारणं विशेषणीयम्, किन्तु येन रूपेणान्यथासिद्धत्वं तदन्यधर्मवत्त्वमेव निवेशनीयम् ॥ कार्याव्यवहितप्राक्क्षणे कार्याधिकरणे यद्रूपावच्छिन्नासत्त्वेऽपि कार्यमुत्पद्यते तथाविधतत्तद्दण्डत्वाद्यवच्छिन्नस्य घटसामान्यजनकतावारणाय नियतपूर्ववर्तिजातीयतानिवेशः । अतीतानागतव्यधिकरणदण्डादीनामपि दण्डत्वादिना घटादिस्वरूपयोग्यत्वात् जातीयत्वनिवेशः । तथाचान्यथासिध्यनिरूपकनियतपूर्ववर्तितावच्छेदकतद्धर्मवत्त्वं तद्धर्मपुरस्कारेण कारणत्वमिति समुदायार्थः । अत एव कारणतावच्छेदकनिष्ठनियतपूर्ववर्तितानवच्छेदकत्वमेव व्यभिचार इति गीयते ॥

ननु किमिदं नियतपूर्ववर्तितावच्छेदकत्वम्? न तावत्कार्याव्यवहितपूर्वत्वाश्रययावत्कालवृत्तितावच्छेदकत्वं, स्वर्गादिकार्यं प्रति यागत्वादेरतथात्वप्रसङ्गात्, स्वर्गाव्यवहितपूर्वक्षणे यागादीनां स्वतोऽसत्त्वात् ।

कालिकविशेषणताव्यापारान्यतरसम्बन्धेन तादृशकालवृत्तित्वनिवेशेनैत- द्दोषस्य नावकाश इति चेत्। तर्हि विशिष्टबुद्धिविशेषणज्ञानयोः कार्यकार- णभावे विशिष्टस्मृतौ व्यभिचारवारणायानुभवत्वस्य कार्यतावच्छेदके नि- वेशनं प्रामाणिकानां विरुद्धं स्यात्। विशेषणज्ञानत्वावच्छिन्नस्य अनुभ- वात्मकविशिष्टबुद्धिपूर्वकाले कालिकविशेषणतया तादृशस्मृतिपूर्वकाले च संस्कारात्मकव्यापारसम्बन्धेन वृत्तितया विशिष्टबुद्धित्वावच्छिन्ननि- रूपितनियतपूर्ववर्तितावच्छेदकताया विशेषणज्ञानत्वादौ सत्त्वात्। एवं तादृशनियतपूर्ववर्तितावच्छेदकतायाः कारणतालक्षणे प्रवेशे घट- त्वाद्यवच्छिन्नं प्रति तन्तुत्वतन्तुसंयोगत्वादिना हेतुत्वापत्तिः, तदवच्छि- न्नस्य किञ्चिद्देशावच्छेदेन घटाद्यव्यवहितपूर्वकालेऽवश्यं सद्भावात्। कारणतावच्छेदकनिष्ठस्य यावत्कार्याधिकरणनिष्ठकारणताघटकसम्बन्धा- वच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्याधिकस्य निवेशेऽपि घटादौ घटतन्तुसंयोगान्यतरत्वादिना हेतुत्वापत्तिर्दुर्वारैव ॥

अथ कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्तिर्यः कारणता- वच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावः तत्प्रतियोगितानवच्छेदक- त्वरूपकालघटितदैशिकव्यापकतावच्छेदकत्वमेव तत्। तद्घटाद्यधिकरणे कपालादावुत्पत्तिकालावच्छेदेन विजातीयसंयोगाद्यभावसत्त्वात् तत्र तद्धेतुत्वानुपपत्तिरिति कार्याव्यवहितपूर्वक्षणावच्छिन्नत्वं वृत्तित्वविशे- षणम्। एकघटाद्यव्यवहितपूर्वक्षणावच्छेदेनान्यघटाद्यधिकरणकपालादौ विजातीयसंयोगाद्यभावसत्त्वादव्याप्तिरिति तु नाशङ्कनीयम्, स्वाव्यवहित- पूर्वक्षणावच्छिन्नस्वाधिकरणवृत्तित्वसम्बन्धेन कार्यवैशिष्ट्यस्याभावे नि- वेशनीयत्वात्। न चैवं घटत्वाद्यवच्छिन्नं प्रति तत्कपालत्वादिनापि ता- दात्म्यसम्बन्धेन हेतुतापत्तिः, घटाधिकरणकपालान्तरे व्याप्यवृत्तेस्तत्क- पालत्वावच्छिन्नभेदस्य वृत्तौ कालविशेषस्यानवच्छेदकतया यत्पदेन ता- दृशाभावस्य ग्रहीतुमशक्यत्वादिति वाच्यम्। स्वाव्यवहितपूर्वक्षणाव- च्छिन्नत्वस्थलेऽवच्छिन्नत्व-तादृशक्षणानवच्छिन्नत्वोभयाभावस्यैव नि- वेशनीयत्वात्, तादृशाभावीयवृत्तावच्छिन्नत्वविरहेणोभयाभावस्याक्ष- तत्वात्। यागादेः स्वर्गादिकारणतानिर्वाहाय च तन्नियतपूर्ववर्तितावच्छे- दकतन्नियतपूर्ववर्तितावच्छेदकावच्छिन्ननियतपूर्ववर्तितावच्छेदकान्यत- रत्वमेव कारणतावच्छेदकधर्मं निवेशनीयम्, यागत्वादेः स्वर्गविशेषा- दिनियतपूर्ववर्तितावच्छेदकत्वविरहेऽपि तादृशकार्यनियतपूर्ववर्तिताव- च्छेदकापूर्वविशेषत्वावच्छिन्ननियतपूर्ववर्तितावच्छेदकत्वेनान्यतरत्वमक्ष- तमेवेति चेन्न।

घटाद्यव्यवहितपूर्वक्षणेऽपि तदधिकरणकपालादौ किञ्चित्कपालिकाद्यवच्छेदेन विजातीयसंयोगाद्यभावसत्त्वात्, दैशिकाव्याप्यवृत्तीनां विजातीयसंयोगादीनां कारणत्वानुपपत्तेर्दुर्वारत्वात् । प्रतियोगिवैयधिकरण्यस्याभावविशेषणत्वोपगमे घटादिकं प्रति घटतन्तुसंयोगान्यतरत्वादिना हेतुताया दुर्वारत्वात्, घटाद्यधिकरणनिष्ठस्य तद्रूपावच्छिन्नाभावस्य प्रतियोगिसमानाधिकरणत्वात् । न चाभावनिष्ठकार्याधिकरणवृत्तित्वे देशनिरूपितावच्छेद्यत्वशून्यत्वं विशेषणं देयम्, तथाच देशविशेषावच्छिन्नदर्शिताभावमादाय नाव्याप्यवृत्तौ कारणतायाः क्षतिरिति वाच्यम् । तथासति समवायेन ज्ञानत्वावच्छिन्नं प्रति ज्ञानत्वादिना हेतुतापत्तिः, ज्ञानाद्यधिकरणात्मादिनिरूपिताया ज्ञानानवच्छेदकक्षणावच्छिन्नाया ज्ञानाद्यभावीयवृत्तेः ज्ञानावच्छेदकक्षणावच्छिन्नज्ञानाद्यभावीयवृत्तिताभिन्नत्वे मानाभावात्, तादृशाभावस्य कार्याधिकरणे देशानवच्छिन्नवृत्तिकत्वविरहात् । न च कार्याधिकरणदेशावच्छिन्नकार्याव्यवहितपूर्वक्षणवृत्तिकाभावीयकालिकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव नियतपूर्ववर्तितावच्छेदकत्वम् । विजातीयसंयोगाद्यधिकरणदेशावच्छेदेन तद्वति काले विजातीयसंयोगादेः कालिकसम्बन्धावच्छिन्नाभावो नास्ति तदवच्छेदेन प्रतियोगिसत्तायास्तदवच्छेदेनाभाववृत्तौ विरोधित्वादिति नोक्ताव्याप्यवृत्तिकारणत्वानुपपत्तिः ।

एतेन पूर्वोक्तनियतपूर्ववर्तितावच्छेदकताया निवेशे विषयतया लौकिकप्रत्यक्षत्वावच्छिन्नं प्रतीव ज्ञानत्वावच्छिन्नं प्रत्यपि विषयत्वेन तादात्म्यसम्बन्धेन हेतुतापत्तिः, विषयतया ज्ञानत्वावच्छिन्नानुमित्यादिमति अतीतादिविषये कार्याव्यवहितपूर्वक्षणावच्छेदेनापि कारणतावच्छेदकतादात्म्यसम्बन्धेनावच्छिन्नप्रतियोगिताकस्य विषयत्वावच्छिन्नाभावस्य भेदरूपस्यासत्त्वादिति निरस्तम् ।

तत्रातीतादिविषयावच्छेदेनानुमितिप्राकाले कालिकसम्बन्धावच्छिन्नविषयत्वावच्छिन्नाभावसत्त्वादिति वाच्यम् । एवंसति कारणतावच्छेदकताघटकतया कारणतायाः सम्बन्धविशेषनियन्त्रितत्वानुपपत्तिः । तादृशसम्बन्धघटितदैशिकव्यापकतावच्छेदकतां स्यातन्त्र्येण निवेश्य तदुपपादनेऽपि घटादिकं प्रति समवायेनाभावघटान्यतरत्वादिना हेतुतापत्तेः, तत्र निरुक्तनियतपूर्ववर्तितावच्छेदकतायाः समवायघटितदैशिकव्यापकतावच्छेदकताबाध्याक्षतत्वात् । एवमतीताद्यवच्छेदेन कालेकालिकसम्बन्धावच्छिन्नप्रतियोगिताकविषयत्वावच्छिन्नाभावस्याप्रामाणिकत्व·

या ज्ञानत्वावच्छिन्नं प्रति तादात्म्येन विषयत्वेन हेतुताप्रसङ्गस्यैतन्मतेऽपि दुर्वारत्वाच्च ॥

यत्तु स्वसामानाधिकरण्य-स्वाधिकरणक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धावच्छिन्नायाः कार्यनिष्ठभेदप्रतियोगितावच्छेदकताया अनवच्छेदकत्वमेव नियतपूर्ववर्तितावच्छेदकत्वम् । स्वसामानाधिकरण्यञ्च कार्यकारणभावघटकसम्बन्धाभ्याम् । घटाद्यधिकरणे यत्किञ्चिद्देशावच्छेदेन विजातीयसंयोगाद्यभावसत्त्वेऽपि न कुत्रापि घटादावुक्तोभयसम्बन्धेन विजातीयसंयोगादिमतो भेदो वर्तते इति विजातीयसंयोगत्वादौ निरुक्तप्रतियोगितावच्छेदकतानवच्छेदकत्वमक्षतमेव । एवमतीतादिमात्रविषयकानुमित्यादौ तादात्म्यविषयत्वोभयसम्बन्धघटितसामानाधिरण्य-स्वाधिकरणक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन विषयवद्भेदस्याक्षततया ज्ञानत्वावच्छिन्नं प्रति तादात्म्येन विषयत्वेन हेतुताया न प्रसङ्गः । एवञ्च समवायेन विजातीयसंयोगं प्रति क्रियात्वेन हेतुत्वे उत्तरदेशे व्यभिचारवारणाय स्वाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टसमवायस्य कार्यतावच्छेदकसम्बन्धत्वानुधावनमपि निरर्थकम् ; शुद्धसमवायस्य तथात्वेऽपि सर्वसांकर्यव्यक्तीनां किञ्चिदधिकरणेषु पूर्वक्षणावच्छेदेन कारणसत्त्वयैव निरुक्तनियतपूर्ववर्तितावच्छेदकतायाः कारणतावच्छेदके निर्वाहादिति ।

तदपि न, तथासति घटादिकं प्रति रूपात्यन्ताभावत्वादिनापि हेतुताप्रसङ्गात्, रूपात्यन्ताभावस्य सदातनया सर्वेष्वेव घटादिषु तदधिकरणक्षणाव्यवहितोत्तरक्षणोत्पन्नत्वसत्त्वात्, सर्वेषामेव तेषामधिकरणे कपालादावुत्पत्तिकालावच्छेदेन रूपात्यन्ताभावसत्त्वात् तत्सामानाधिकरण्यस्यापि तेषु सत्त्वात् ।

उच्यते—स्वाव्यवहितपूर्वक्षणावच्छिन्नस्वसमानाधिकरणवृत्तित्वसम्बन्धेन कार्यविशिष्टो योऽभावस्तदीयसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव नियतपूर्ववर्तितावच्छेदकत्वम् । अव्याप्यवृत्तीनां विजातीयसंयोगादीनां समवायेनैवाव्याप्यवृत्तितया सामानाधिकरण्यसम्बन्धेन न तथात्वमिति घटादिसमानाधिकरणे कपालादिवृत्तिधर्मे घटाद्यव्यवहितपूर्वक्षणावच्छेदेन सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकस्तदभावो नास्ति इति कारणतोपपत्तिः । अतीतादिमात्रविषयकानुमित्यादिसमानाधिकरणे तादृशविषयनिष्ठतद्व्यक्तित्वादौ तादृशानुमित्याद्यव्यवहितपूर्वक्षणावच्छेदेन तादात्म्यघटितसामानाधिकरण्यसम्बन्धेन विषयत्वावच्छिन्नाभावोऽत्व

एवेति न ज्ञानत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन विषयत्वेन हेतुताप्रसङ्गः। प्रथमं सामानाधिकरण्यं कार्यतावच्छेदकसम्बन्धेन स्वाधिकरणे स्वरूपसम्बन्धेन वृत्तित्वम्, चरमञ्च कारणतावच्छेदकसम्बन्धेन स्वाधिकरणे स्वरूपसम्बन्धेन वृत्तित्वम्, अतः सम्बन्धभेदमादाय न दोषः। व्याप्यवृत्तेरवच्छेदकत्वानभ्युपगमे स्वाव्यवहितपूर्वक्षणावच्छिन्नत्वस्थाने पूर्वदर्शितोभयाभावो निवेशनीयः। यागादेः स्वर्गादिकारणत्वमपि पूर्ववदुपपादनीयम् इति वदन्ति॥

अत्र च कारणत्वस्य निरुक्तरूपत्वे तद्घटकान्यथासिद्धिनिरूपकधर्मभेदकूटस्य प्रतिस्विकरूपेण युगसहस्रेणापि ज्ञातुमशक्यतया कारणत्वस्य दुर्ज्ञेयत्वापत्तिः। न च तादृशभेदकूटविशिष्टविशेषणताविशेषसम्बन्धेन निरुक्तनियतपूर्ववर्तितावच्छेदकतावत्त्वमेव कारणताशरीरे निवेशनीयं, तथाच सम्बन्धज्ञानस्य विशिष्टबुद्धावहेतुतयाऽनुपस्थितानामेव भेदानां सम्बन्धघटकतया भानसम्भव इति वाच्यम्। भेदकूटविशिष्टत्वेन विशेषणताविशेषस्य सम्बन्धत्वे मानाभावात्। एवं निरुक्तकारणतायाः कार्यतावच्छेदकघटिततया "स्वर्गकामो यजेते"त्यादिवाक्याद्यागादौ स्वर्गादिसाधनत्वग्रहानुपपत्तिः, यागादिजन्यतावच्छेदकस्य स्वर्गनिष्ठजातिविशेषादेः प्रागनुपस्थितत्वात्। तादृशविधिवाक्याधीनकार्यकारणभावग्रहानन्तरमेव कार्यतायाः किञ्चिदवच्छिन्नत्वनियमप्रवृत्तेन अतिप्रसक्तस्वर्गत्वाद्यवच्छिन्नत्वबाधसहकृतेन यागादिजन्यतायां स्वर्गत्वाद्यवान्तरधर्मविशेषावच्छिन्नत्वग्राहकानुमानेन जातिविशेषोपस्थापनात्। एवमेतन्मते प्रवृत्तौ ज्ञायमानपुरोवर्तिनि ज्ञायमानेष्टभेदाग्रहत्वादिना हेतुताकल्पने कारणतावच्छेदकगौरवात् विशिष्टज्ञानत्वेन हेतुतासिद्ध्यान्यथासिद्धिरित्यपि न स्यात्। तादृशगुरुधर्मस्य नियतपूर्ववर्तितावच्छेदकताया उभयवादिसिद्धत्वात्। अन्यथासिद्धिनिरूपका ये ये धर्मास्तत्तद्भेदकूटस्यापि तत्र सत्त्वात्,प्रवृत्तिकारणताशरीरे तादृशधर्मभेदस्य प्रयोजनविरहेणानिवेशनीयत्वात, इत्यादिबहुविधदुरुद्धरदोषदर्शिनः सिद्धान्तविरुद्धप्रवादकाः साम्प्रदायिकाः कारणत्वं स्वरूपसम्बन्धविशेष एवेति प्रलपन्ति।

तदपि न साधीयः। घटादिकारणतायाः कारणीभूतदण्डादिस्वरूपत्वे तेन समं तस्याधाराधेयभावानुपपत्तिः, अभेदेऽपि तदुपगमे दण्डो घटकारणवानित्यादिप्रतीत्यापत्तेः, दण्डत्वादिस्वरूपत्वे च सप्रतियोगिकत्वानुपपत्तिः, जातेर्निष्प्रतियोगिकत्वात्, दण्डत्वाद्यवच्छिन्नत्वानुपपत्तिश्च, अभेदेऽवच्छेद्यावच्छेदकभावविरहात्। अभेदेपि तदुपगमे दण्ड-

त्वेन घटकारणत्वमितिवद्दण्डत्वेन दण्डत्वमित्यादिप्रतीत्यापत्तिः। तस्मात्कारणत्वं पदार्थान्तरमेव। तच्चावच्छेदकभेदाद्भिद्यते। तदनुगमककारणतात्वमप्यतिरिक्तमेव। एवं कार्यत्वकार्यतात्वे अपि। इति दीधितिकृदुक्तं युक्तमालोचयामः॥

कारणतावच्छेदकदण्डत्वादिकमेव कारणत्वं, तस्य च कारणतात्वेन घटादिप्रतियोगिकत्वं, जातेः स्वरूपत एव निष्प्रतियोगिकत्वोपगमात् कारणतात्वेनावच्छेद्यता, स्वरूपतश्चावच्छेदकता, अभेदेऽपि भिन्नरूपेणावच्छेद्यावच्छेदभावोपगमे क्षतिविरहादित्यपि कश्चित्॥

कारणत्वन्तु त्रिविधं समवायिकारणत्वमसमवायिकारणत्वं निमित्तकारणत्वञ्चेति। तत्र समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणता समवायिकारणता, यथा घटादिकं प्रति कपालादेः। समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नकारणता असमवायिकारणता, यथा घटादिकं प्रति कपालद्वयसंयोगादेः यथावा घटरूपादिकं प्रति कपालरूपादेः। विभागानुमित्यादौ संयोगपरामर्शादीनामसमवायिकारणताव्यवहाराभावात्, तत्तत्कार्यनिरूपिततत्तत्कारणनिष्ठकारणतानां भेदकूटस्याप्यसमवायिकारणताशरीरघटकत्वं बोद्धव्यम्॥ समवाय्यसमवायिकारणताभिन्नकारणता निमित्तकारणता, यथा घटादिकं प्रति दण्डादेरिति सङ्क्षेपः॥

इति महामहोपाध्यायश्रीगदाधरभट्टाचार्यविरचितः
कारणतावाद(३०)वीचिः समाप्तः॥-॥

---

## अथ कारणतावाद(३१)वीचिः।

कर्पूरकुन्दकुमुदकैलासोदरसोदरम्।
विघ्नध्वंसकरं धाम नमामः शैवदैवतम॥
अन्यैरनुचितविविधक्षोदैः कलुषीकृतः कविभिः।
न्यायादर्शं इदानीं श्रीजगदीशप्रकाशितः स्फुरतु॥
यन्मादृशे समुपदिष्टमजुष्टमान्यश्रीसार्वभौमगुरुणा करुणामयेन।
सिन्धागतसारमिदमादरतस्तदन्यविद्यार्थिनां गुणकृते प्रकृते वदामः॥

अथ निखिलेषु वैदिकेषु लौकिकेषु च कर्मसु तत्तत्फलस्य कारणत्वं निर्णयन्त एव सन्तः प्रवर्तन्ते न तु तदपलपन्तः। तत्र किं नाम कारणत्वम्? न तावत् तत्तत्फलान्यवहितपूर्वसत्त्वम्, अतिप्रसङ्गात् कचिद्प्राग

ग्राह्य। नापि तदभावप्रयोजकीभूताभावप्रतियोगित्वं, प्रयोजकत्वं हि न व्यापकत्वं, घटारम्भकसंयोगादिकं प्रत्यपि घटादेर्जनकत्वापत्तेः। नापि स्वरूपसम्बन्धविशेषः, प्रमाणाभावात्। दण्डाभावप्रयुक्तो घटाभाव इत्यादिप्रतीतौ दण्डाभावप्रतियोगिजन्यप्रतियोगिकत्वादिलक्षणस्य दण्डाभावप्रयुक्तत्वस्य घटाभावेऽवगाहनात्। अन्यथावश्यकतया स्वरूपसम्बन्धविशेषमेव कारणत्वं किमिति न ब्रूषे। न चात्र निर्भरः कर्तव्यः, स हि स्वरूपसम्बन्धविशेषो न कारणस्वरूपः, तत्तदवच्छेदकीभूतधर्मस्वरूपो वा, तन्मात्रग्रहेऽपि कारणत्वाप्रत्ययात्, दण्डः कारणमित्यादिसहप्रयोगानुपपत्तेश्च इति चेत्।

अत्रोच्यते—यदवच्छिन्नं प्रति यादृशसंसर्गेण नियताव्यवहितपूर्ववर्त्तितावच्छेदकं यदन्यथासिद्ध्यनिरूपकं रूपं तद्वत्त्वमेव तदवच्छिन्नं प्रति तादृशसंसर्गेण कारणत्वम्। तत्र यद्यपि घटत्वावच्छिन्नसामान्यस्याव्यवहितपूर्वत्वमप्रसिद्धं घटसामान्यप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे सति घटप्रागभावाधिकरणकालत्वरूपस्य तस्य क्वचिदप्यसत्त्वात्। प्रसिद्धं वा न कारणत्वस्य निर्वाहकम्, महाप्रलयप्राक्कालीनतत्तद्दण्डत्वादिनापि घटत्वावच्छिन्नं प्रति हेतुत्वप्रसङ्गेनाव्यावर्तकत्वात्। अत एव यत्किञ्चित्घटाव्यवहितपूर्वत्वमपि दुर्निवेश्यं, घटसामान्यं प्रत्यपि तत्कपालत्वेन हेतुतापत्तेः, तद्धर्मावच्छिन्नसकलकार्याव्यवहितपूर्ववर्त्तित्वावच्छिन्नवत्ताकधर्मस्यैवान्यथासिद्धयनिरूपकत्वदलेन वारणीयत्वात्, अन्यथा तन्मात्रस्यव सम्यक्त्वेऽव्यवहितपूर्ववर्त्तितावच्छेदकत्वांशवैयर्थ्यापत्तेः। न च तद्धर्मविशिष्टस्य यावतः प्रत्येकाव्यवहितप्राक्कालावच्छेदेन तत्प्रत्येकस्याधिकरणे वर्त्तमानस्याभावस्य यत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदको यो धर्मः तद्वत्त्वमेव तद्धर्मावच्छिन्नं प्रति तत्सम्बन्धेन कारणत्वमिति साम्प्रतम्। घटत्वावच्छिन्नं प्रति तादात्म्येन कपालत्वादिना हेतुतायामव्याप्तिप्रसङ्गात्। घटाव्यवहितप्राक्कालावच्छेद्यस्य कपालादौ तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धत्वात्, अन्योन्याभावमात्रस्यैव देशे व्याप्यवृत्तित्वात्। तथापि तद्धर्मविशिष्टा यावन्तः तत्प्रत्येकाधिकरणदेशावच्छेदेन तत्प्रत्येकाव्यवहितप्राक्काले वर्त्तमानस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितानवच्छेदकत्वमेव तद्धर्मावच्छिन्नं प्रति तत्सम्बन्धेन नियताव्यवहितपूर्ववर्त्तितावच्छेदकत्वं विवक्षितम्, घटाव्यवहितप्राक्काले तदधिकरणीभूतकपालाद्यवच्छेद्यस्य पटादिभेदस्यैव सुलभत्वात्। निरुक्तप्रत्येकाधिकरणत्वञ्च देशस्य कार्यताघटकसम्बन्धेनैव ग्राह्यम्,

अतः सम्बन्धान्तरेण यत्कार्यस्याधिकरणं तादृशदेशावच्छेदेन कार्यस्य प्राक्काले कारणाभावस्य सत्त्वेऽपि न क्षतिः। इच्छाद्यव्यवहितप्राक्काले घटाद्यवच्छेदेन तदुत्तरकाले वा तत्तदिच्छाद्यधिकरणपुरुषावच्छेदेन ज्ञानादिसामान्याभावस्य सत्त्वेऽपि न तत्तदिच्छाद्यधिकरणपुरुषावच्छेदेन तत्तदिच्छाव्यवहितप्राक्काले समवायेन ज्ञानादेः सामान्याभाव इति इच्छाद्यवच्छिन्नं प्रति समवायेन ज्ञानत्वादिना हेतुतायां नाव्याप्तिः। अत एव घटाद्यधिकरणकपालाद्यवच्छेदेन तदव्यवहितप्राक्काले संयोगादिसंसर्गावच्छिन्नप्रतियोगिताकस्य कपालाद्यभावस्य सत्त्वेऽपि तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकतदभावस्या सत्त्वात् घटत्वाद्यवच्छिन्नं प्रति तादात्म्येन कपालत्वादिना हेतुतायामपि नाव्याप्तिः, घटाद्यवच्छेदेन तदव्यवहितप्राक्काले कपालभेदस्यासत्त्वात्। नचैवं प्रतियोगित्वादिसंसर्गेण द्रव्यनाशादिकं प्रति आरम्भकसंयोगनाशादेः स्वप्रतियोगिजन्यत्वादिसंसर्गेण कारणत्वं न स्यात् तादृशसंसर्गावच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति वाच्यम्। तादात्म्यस्येव सम्बन्धान्तरस्यापि वृत्त्यनियामकस्य प्रतियोगिताच्छेदकत्वे बाधकाभावात्। यद्धर्मविशिष्टनिरूपितयादृशसम्बन्धत्वं यद्धर्मावच्छिन्नस्य यावतः प्रत्येकाधिकरणदेशावच्छेदेन तत्प्रत्येकाव्यवहितप्राक्काले वर्त्तमानस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितानवच्छेदकं तद्धर्मवत्त्वमेव वा तादृशसम्बन्धेन तदवच्छिन्नं प्रति कारणत्वं वाच्यम्, अत एव रूपादिनिरूपितसंयोगाप्रसिद्ध्यैव घटादिकं प्रति संयोगसम्बन्धेन रूपत्वादिना न हेतुत्वम्, अन्यथा रूपत्वादेरपि घटाद्यधिकरणकपालाद्यवच्छेदेन तदव्यवहितप्राक्काले वर्त्तमानस्य संयोगसंसर्गावच्छिन्नप्रतियोगिताकस्य घटाद्यभावस्यैव प्रतियोगितानवच्छेदकतया तद्वारणानुपपत्तेः कार्यं प्रति व्यापकतावच्छेदकधर्मस्यैवान्यथासिद्ध्यनिरूपकत्वदलेन वारणीयत्वस्य प्रागुक्तत्वात्।

वस्तुतः तद्धर्मावच्छिन्नस्य यावतः प्रत्येकाधिकरणदेशावच्छेदेन तत्प्रत्येकाव्यवहितप्राक्कालवृत्तिस्वविशिष्टप्रतियोगिकतादृशसम्बन्धवत्त्वाकान्यथासिद्ध्यनिरूपकधर्मवत्त्वं तद्धर्मावच्छिन्नं प्रति तादृशसम्बन्धेन कारणत्वं वाच्यम्, उक्तापेक्षया लघुत्वात्। अत एव कर्मजविलक्षणसंयोगस्य निष्क्रियाधिकरणावच्छेदेन तदव्यवहितप्राक्काले कर्मत्वविशिष्टप्रतियोगिकसमवायाभावसत्त्वेऽपि संयोगं प्रति समवायेन कर्मणः कारणतायां नाव्याप्तिः। अत एवाश्रयान्तरस्यैकत्वमादायैवासमवायिकारणस्य निर्वाहात् घटादौ द्वितीयक्षण एव द्वि

त्वाद्युत्पादेऽपि न क्षतिः । नचैवं घटसामान्यं प्रत्येव स्ववृत्तिजाति-मदीयसंयोगादिसंसर्गेण तत्तद्दण्डत्वादिना हेतुतापत्तिः, घटमात्र-स्यैवाव्यवहितप्राक्काले तद्दण्डीयतादृशसंयोगस्य सत्त्वादिति वाच्य-म् । तादृशसंयोगसंसर्गे मानस्याभावात्, भावे वा तद्दण्डत्वस्य तादृश-सम्बन्धेन घटसामान्यं प्रत्यन्यथासिद्ध्यनिरूपकत्वेनैव वारणीयत्वा-त् । स्वर्गं प्रति यागस्य स्मृतिं प्रति चानुभवस्य कारणत्वग्रहदशायां तदीयसम्बन्धत्वेन गृहीतोऽप्यपूर्वसंस्कारादिको व्यापारोऽनतिरिक्तभा-वत्वगुणत्वादिना यागादिव्यापारत्वादिना, वा लभते इति तादृप्येणैव तस्योत्तरकालकल्प्यत्वमतो नापसिद्धान्तः। स्वस्वप्रतियोगिव्यधिकरणहे-तुसमानाधिकरणयावदभावानामनुपस्थितिदशायां तद्गर्भव्याप्तेरिव घटत्वादिविशिष्टयावद्व्यक्तीनां विशिष्यानुपस्थितिदशायामपि तद्घ-टितस्य घटत्वाद्यवच्छिन्नं प्रति कारणत्वस्याग्रहो न क्षतिकरः, समु-पस्थितयावदभावावगाहिव्याप्तिग्रहस्यैवानुमितिहेतुत्वे घटत्वादिमत्त-योपस्थितयावद्व्यक्त्यन्तर्भावेणैव घटादिकारणत्वग्रहस्य घटार्थिप्रवृ-त्तिहेतुतायाः सुवचत्वात् प्रमेयत्वसामान्यलक्षणया तादृप्येण तत्तद्घ-टत्वस्योपस्थित्यनन्तरं जायमानात् प्रमेयवदित्यनुभवादेव स्वरूपतस्त-त्तद्घटत्वेन निखिलघटानां स्मृतिसम्भवाच्च घटांशे तत्तद्व्यक्तित्वस्य स्मृतिदशायां तत्तद्व्यक्तित्वांशे प्रमेयत्वस्योद्बोधकविरहादेवास्मरणसम्भ-वात् । न चैवमपि विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानादेः कारण त्वं न स्यात् तादृशबुद्धित्वाश्रययावदन्तर्गतस्य नित्यज्ञानादेरव्यवहित-प्राक्कालाप्रसिद्धेरिति वाच्यम्। इष्टत्वात्, कार्यमात्रवृत्तिधर्मस्य का-र्यतावच्छेदकतया जन्यविशिष्टबुद्धित्वावच्छिन्नं प्रत्येव तथात्वात, का-लिकसम्बन्धसहितेनैव कार्यतावच्छेदकताघटकसमवायादिसम्बन्धेन तद्धर्मावच्छिन्नस्यैव वा तद्धर्मावच्छिन्नं प्रति कारणतायां निवेश्यत्वेन कार्यवृत्तिधर्मावच्छिन्नं प्रत्युक्तक्रमेण कारणत्वस्य सुवचत्वात् । प्राय-श्चित्तं च न प्रागभावपर्यवसितस्य दुःखानुत्पादस्य हेतुः किन्तु गोहत्या-दिजनितपापनाशस्यैव, अतस्तदव्यवहितपूर्वत्वाप्रसिद्धावपि न क्षतिः । न च लौकिकविषयतासंसर्गेण साक्षात्कारसामान्यं प्रति विषयत्वेन हेतुतायामव्याप्तिः, कार्यताघटकलौकिकविषयतासम्बन्धेन तत्तत्साक्षा-त्कारस्याधिकरणं घटादि तदवच्छेदेन तत्तत्साक्षात्काराव्यवहितप्राक्काले विषयत्वविशिष्टप्रतियोगिकतादात्म्यविरहात् विषयतादात्म्यस्य काले व्याप्यवृत्तित्वेन तत्र देशस्यानवच्छेदकत्वादिति वाच्यम् । प्रत्यक्षत्वाव-च्छिन्नं प्रति सामान्यतो विषयत्वेन हेतुतायां मानाभावात साक्षात्-

करोमीतिप्रतीतिनियामकविलक्षणविषयत्वेनैव हेतुत्वस्य वक्ष्यमाणत्वात् तादृशविषयत्वविशिष्टप्रतियोगिकतादात्म्यस्य च तादृशविषयावच्छेदेनैव कालवृत्तित्वात्। न च विषयतामात्रस्य स्वनिरूपकज्ञानसमानकालस्थायित्वात् प्रत्यक्षविषयीभूतघटाद्यवच्छेदेन प्रत्यक्षाव्यवहितप्राक्काले साक्षात्कारत्वनिरूपितविषयताविशिष्टस्यासत्त्वात् तादृशविषयत्वेनापि तत्र हेतुत्वं दुर्घटमिति वाच्यम्। साक्षात्कारत्वनिरूपितविलक्षणविषयतावद्वृत्तिधर्मशून्यत्वपर्यवसितेनैव तादृषविषयत्वेन हेतुत्वस्य वाच्यत्वात्। घटादौ स्वसाक्षात्कारप्राक्काले निरुक्तविषयत्वमपि तादृशविषयतावद्वृत्तिधर्मशून्यत्वस्यानपायात्। अत एव पिठराद्यारम्भदशायां पार्थिवादीनां निःस्पर्शत्वोपगमेऽपि स्पर्शवन्निष्ठद्रव्यत्वव्याप्यजातिमत्पर्यवसितेन स्पर्शवत्त्वेन द्रव्यारम्भकत्वं प्राचीनमते समवायेन द्रव्यत्वावच्छिन्नं प्रति स्पर्शवत्त्वेन हेतुत्वमिति कार्यकारणभावः सुवच इति वक्ष्यते।

कालिकसम्बन्धेन कार्यत्वावच्छिन्नं प्रति महाकालत्वेन तद्व्यक्तित्वेन वा तादात्म्येन महाकालस्य हेतुत्वं न तु कालत्वमात्रेण कालोपाधीनां कार्यत्वावच्छिन्नं प्रति हेतुतायां मानाभावात्, कालजन्यवस्तुसाधारणस्य कालत्वस्याभावादिदानीमितिप्रतीतिसिद्धाधिकरणत्वरूपकालत्वस्य सर्वसाधारण्यात् महाकालदिशोरेव सर्वोत्पत्तिमतां निमित्तकारणत्वस्य भाष्यादिसम्मतत्वाच्च।

अस्तु वा कालिकसम्बन्धावच्छिन्नाधिकरणत्वपर्यवसितेन कालत्वेनव तत्र जन्यानामपि हेतुत्वं तथापि न क्षतिः, घटादौ पटाद्युत्पत्तेः समवायिकारणाभावादेव वारणीयत्वात्। समवायेन कार्यत्वावच्छिन्नं प्रति विषयतया ज्ञानत्वेन न हेतुत्वं किन्तु घटत्वावच्छिन्नं प्रत्येव कपालत्वादिप्रकारकप्रत्यक्षत्वेन तथात्वम्, अन्यथा कपालत्वाद्यग्रहेऽपि रूपान्तरेण कपालग्रहे घटाद्यापत्तेः। अतः कार्यसमवाय्यवच्छेद्यस्य काले प्रत्यक्षविषयत्वस्यासत्त्वेऽपि न क्षतिरिति वदन्ति।

न चैवमपि तद्व्यक्तित्वावच्छिन्नं प्रति हेतुतायामव्याप्तिः, तदवच्छिन्नस्य यावतोऽप्रसिद्धेरिति वाच्यम्। व्यक्तिस्थलीयकार्यकारणभावस्य प्राच्यैरस्वीकारात्, कार्यतावच्छेदकभेदेन कारणत्वस्य विभिन्नतया तादृशस्थले यावत्त्वस्यानुपादेयत्वाच्च, शब्दैक्यस्याकिञ्चित्करत्वात्। नचैवं तदवच्छिन्नसमानाधिकरणवृत्त्यन्यथासिद्ध्यनिरूपकधर्मवत्त्वमेव तदवच्छिन्नं प्रति कारणत्वं लाघवादुचितम्, तद्ग्रहेऽपि कार्यव्यभिचारिणः कारणत्वेनाग्रहात्, अन्यथा व्यधिकरणस्यापि अन्यथासिद्ध्यनिरूपकत्व-

दलेनैव वारणसम्भवे सामानाधिकरण्यांशस्यानुपादेयत्वापत्तेः। घटत्वावच्छिन्नं प्रति जनकतावच्छेदकदण्डत्वादिव्यापकतया द्रव्यत्वादेर्दण्डत्वापेक्षया गुरुत्वेन प्रमेयदण्डत्वादेरन्यजनकतात्वेन शब्दसमवायिकारणत्वादेश्चान्यथासिद्धिनिरूपकत्वात् ताद्रूप्येण घटत्वावच्छिन्नं प्रति हेतुतावारणार्थमन्यथासिद्ध्यनिरूपकत्वस्य प्रवेशः। तद्धर्मावच्छिन्नं प्रत्यन्यथासिद्ध्यनिरूपकत्वञ्च तद्धर्मावच्छिन्नं प्रति नियतपूर्ववर्त्तितावच्छेदकेन यद्रूपेण प्रामाणिकानां कारणत्वव्यवहारस्तदन्यत्वम्। अवश्यक्लृप्तनियतपूर्ववर्त्तिन एव कार्यसंभवे तत्सहभूतत्वमित्यादिना त्रिधान्यथासिद्धयभिधानस्य दिगुपदर्शनात्। अत एव शब्दवत्वादिनापि गगनादेर्न घटादिकं प्रति हेतुत्वम्, दण्डत्वादिकमपि घटादेः कारणतावच्छेदकत्वेनान्यथासिद्धत्वात् न तत्र हेतुः। नचैवं चाक्षुषादौ चक्षुरादेः कारणत्वं न स्यात् चक्षुःसंयोगत्वादिना तद्धेतुतायां चक्षुरादेरवच्छेदकत्वादिति वाच्यम्। चाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयोगत्वादिना हेतुतायां मानाभावात्, द्रव्यप्रत्यक्षसामान्यं प्रत्येव इन्द्रियसंयोगत्वेन संयोगत्वेनैव वा चक्षुरादिसंयोगस्य हेतुत्वेन व्यापारत्वसम्भवात्। द्रव्यचाक्षुषत्वाद्यवच्छिन्नं चाक्षुषसामान्यं प्रत्येव वा संयोगादिसम्बन्धेन चक्षुष्ट्वादिना हेतुत्वकल्पनयैवातिप्रसङ्गभङ्गात् चाक्षुषमात्रस्यैव विषयतासम्बन्धेन कस्याश्चिदधिकरणव्यक्तौ तत्पूर्वं संयोगसंयुक्तसमवेतत्वाद्येकतरसम्बन्धेनावश्यं चक्षुषः सत्वात् द्रव्यचाक्षुषत्वादिना गुरुधर्मेण तज्जन्यतानवच्छेदेऽपि क्षत्यभावात्, एवञ्च दण्डत्वेन घटजनकत्वमित्यादावभेदस्य तृतीयोपस्थापनात् घटत्वावच्छिन्नं प्रत्यन्यथासिद्ध्यनिरूपको नियतपूर्ववर्त्तितावच्छेदकश्च धर्मो दण्डत्वस्वाभिन्न इत्याकारकस्तत्र बोधः। ते न निरुक्तधर्मस्य दण्डत्वानवच्छेद्यत्वेऽपि न क्षतिः।

वस्तुतः यद्यदवच्छिन्नं प्रति नियतपूर्ववर्त्तितावच्छेदकेन यादृशरूपेण प्रामाणिकानां न कारणत्वव्यवहारः तादृशधर्मानवच्छिन्नप्रकारतावच्छेदकत्वमेव तत्तदवच्छिन्नं प्रत्यन्यथासिद्ध्यनिरूपकत्वं वाच्यं न तु तादृशधर्मान्यत्वं, घटं प्रत्यन्यथासिद्धिनिरूपकं यत् प्रमेयदण्डत्वं तदन्यत्वस्य दण्डत्वादौ विरहात् ताद्रूप्येण घटजनकतानुपपत्तेः, अस्माकन्तु दण्डत्वेन घटजनकत्वमित्यादाववच्छेदकत्वमेव तृतीयार्थः, स चान्यथासिद्ध्यनिरूपकत्वघटितकायां प्रकारतायामन्वेतीति न काप्यनुपपत्तिः। अत एव घटं प्रत्यन्यथासिद्ध्यनिरूपकस्य नियतपूर्ववर्त्तितावच्छेदकस्य च दण्डत्वादेः प्रमेयदण्डत्वाद्यभिन्नत्वेऽपि घटजनकत्वं प्रमेयदण्डत्वेनेत्यादिको न प्रयोग इति युक्तमुत्पश्यामः।

ननु दण्डत्वसमशरीरेण घटोपधायकतावत्दण्डान्यतरत्वलक्षणाख-ण्डभेदव्यक्तिमत्त्वेन घटं प्रति जनकताया आवश्यकत्वे तद्व्यापकधर्मतया द्रव्यत्वेनेव दण्डत्वेनापि जनकतायामन्यथासिद्धिप्रसङ्ग इति चेन्न। रक्तदण्डत्वादातिरिक्तस्य तावद्दण्डान्यतरत्वलक्षणाखण्डानुगतभेदस्य प्रमाणविरहेणासत्त्वात्, सत्त्वे वा प्रतियोग्यविशेषितरूपेणाखण्डाभावानां जनकतायामिव जनकतावच्छेदकतायामप्यन्यथासिद्धत्वात्, अन्यथा तावद्दण्डगगनाद्यन्यतमत्वलक्षणाखण्डभेदव्यक्तिमत्त्वेनापि घटादिजनकतापातात्। अत एव गन्धादिकं प्रति गन्धत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्येव रूपरसगन्धान्यतमत्वावच्छिन्नप्रतियोगिताकाभावस्याखण्डस्य तद्व्यक्तित्वेन हेतुत्वम्, अन्यथा रूपादिकमिव शब्दबुद्ध्यादिकमन्तर्भाव्य चतुःपञ्चकान्यतमत्वं तदवच्छिन्नप्रतियोगिताकाभावव्यक्तीनामप्यखण्डतत्तद्व्यक्तित्वेन गन्धादिहेतुतायामनन्तकार्यकारणभावापत्तेः। न चैवं गन्धत्वावच्छिन्नप्रतियोगिताकाभावस्यापि तद्व्यक्तित्वेन गन्धहेतुत्वं न स्यात्, इष्टत्वात्। गन्धत्वावच्छिन्नप्रतियोगिताकाभावत्वेनैव तथात्वात् तद्रूपापेक्षया यादृशरूपं गुरुतरं तद्रूपावच्छिन्नप्रतियोगिताकाभावव्यक्तेस्तद्व्यक्तित्वेन हेतुत्वसम्भवः, तत एव तादृशरूपावच्छिन्नप्रतियोगिताकाभावव्यक्तेस्तद्व्यक्तित्वेन हेतुतायामन्यथासिद्धिरित्यभिधाने गन्धत्वावच्छिन्नप्रतियोगिताकाभावव्यक्तेस्तद्व्यक्तित्वेन हेतुतायाः सम्भावितत्वाच्च। तत्र गन्धत्वाद्यपेक्षया लघुतरधर्मावच्छिन्नप्रतियोगिताकाभावस्य तद्व्यक्तित्वेन गन्धादिहेतुत्वस्यासम्भावितत्वात्। नीलघटत्वावच्छिन्नं प्रत्यपि नीलकपालत्वेनान्यथासिद्धत्वात् न ताद्रूप्येण हेतुत्वम्। घटसामान्यं प्रत्यपि कपालत्वेन अवयविनीलं प्रति चावयवनीलत्वादिना हेतुत्वस्यावश्यकतया तत्प्रत्येकावच्छिन्नसामग्रीसमाजादेव नीलघटत्वावच्छिन्नस्योत्पत्तिसम्भवे तदवच्छिन्नं प्रत्यर्थसमाजग्रस्तत्वेन नीलकपालत्वादेरन्यथासिद्धिनिरूपकत्वात्, अन्यथा यावानेव घटमात्रवृत्तिरनुगतो धर्मः तत्प्रत्येकावच्छिन्नं प्रति नियतपूर्ववर्त्तितावच्छेदकैर्दण्डमात्रवृत्तियावद्धर्मैः कारणत्वकल्पनेऽनन्तकार्यकारणभावप्रसङ्गात्। व्यापकधर्मावच्छिन्नं प्रति जनकतावच्छेदकरूपेणापि व्याप्यधर्मावच्छिन्नं प्रति जनकतायामन्यथासिद्धिरेव, अत एव जन्यभावत्वावच्छिन्नं प्रति जनकतावच्छेदकीभूतेन द्रव्यत्वेन स्पन्दत्वावच्छिन्नं प्रति न हेतुत्वं किन्तु मूर्त्तत्वेनैव सामान्यविशेषयोरेकप्रयोजकप्रयोज्यत्वनियमस्य सत्त्वादित्यग्रे वक्ष्यते ॥

स्वाव्यवहितोत्तरक्षणोत्पन्नकार्यकत्वं तत्तत्कार्याव्यवहितपूर्वक्षण-

र्त्तित्वविशिष्टत्वम्, एवं तत्कार्याव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वावच्छिन्नप्रतियोगिताकाभावत्वादिकमपि तत्तत्कार्यं प्रत्यन्यथासिद्धिनिरूपकत्वादेव न कारणतावच्छेदकम्, अन्यथा निरुक्तरूपेण दण्डादेर्घटादिकार्यं प्रति हेतुत्वसम्भवात् दण्डत्वादिप्रकारेण तत्र हेतुत्वं न स्यात्, न स्याच्च मण्यभावत्वादिना दाहादिकं प्रति हेतुत्वम्, तथाच कार्याणां कारणसमाजाधीनोत्पत्तिकालनियमस्य भङ्गप्रसङ्गः । एवं प्रत्यक्षाव्यवहितपूर्ववर्त्तित्वादिकञ्चान्यं प्रति जनकतावच्छेदकत्वेपि न क्षतिकरं तत्तदनुमित्यव्यवहितपूर्ववर्त्तितावशिष्टत्वपर्यवसितेन तदनुमितिसामग्रीत्वेन प्रत्यक्षत्वाद्यवच्छिन्नं प्रति विरोधित्वस्य घटाद्यव्यवहितपूर्ववर्तित्वादिविशिष्टबुद्धित्वावच्छिन्नं प्रति च तादृशपूर्ववर्तिज्ञानत्वेन हेतुत्वस्य च सर्वसम्मतत्वादित्यपि वदन्ति ॥

अथ 'व्रीहिभिर्यजेत यवैर्वा' इति श्रुतिलब्धायां पुण्यविशेषं प्रति व्रीहिकरणकयवकरणकदर्शयोर्वैकल्पिककारणतायां तथाप्यव्याप्तिः, तादृशदर्शयोरेकं विनाप्यन्यतः पुण्यविशेषस्योत्पादेन तत्र व्रीहिकरणकत्वादिना हेतुत्वासम्भवादिति चेन्न ।

तादृशपुण्यत्वावच्छिन्नं प्रति दर्शत्वेन हेतुत्वं, तदवान्तरवैजात्यद्वयावच्छिन्नं प्रत्येव व्रीहिकरणकदर्शत्वादिना हेतुत्वसम्भवात् । नचैवमुभयकरणकादपि दर्शात् पुण्यविशेषस्य तदधीनस्वर्गस्य च प्रसङ्गः, व्रीहिप्रयोज्यवैजात्यावच्छिन्नपुण्यं प्रति यवकरणकदर्शत्वेन यवप्रयोज्यवैजात्यावच्छिन्नपुण्यं प्रति च व्रीहिकरणकदर्शत्वेन प्रतिबन्धकत्वस्यापि वक्तव्यत्वात् । विकल्पमुख्याकाङ्क्षया प्रवृत्तस्य विधेरेकैकमात्रकरणकत्वप्रत्यायकत्वेन विकल्पस्थले उभयस्य शास्त्रार्थत्वात् । अत एव वाजपेयाश्वमेधयोः स्वर्गत्वावान्तरवैजात्यद्वयावच्छिन्नं प्रत्येव वाजपेयत्वादिना हेतुत्वेऽपि स्वर्गं प्रति तयोर्न वैकल्पिकहेतुता । यदुभयोरेकजन्यतावच्छेदकधर्मावच्छिन्नं प्रत्यपरस्य विरोधित्वं तादृशवैजात्यावच्छिन्नं प्रति यवकरणकदर्शत्वेन यवकरणकदर्शप्रतिबध्यतावच्छेदकजात्यवच्छिन्नपुण्यविशेषं प्रति च व्रीहिकरणकदर्शत्वेन हेतुतायां मानाभावः। नच तादृशजातिद्वयव्यापकविलक्षणपुण्यत्वावच्छिन्नं प्रति दर्शत्वेन सामान्यहेतुत्वकल्पनयैवातिप्रसङ्गभङ्ग इति वाच्यम् । तथात्वेऽपि क्षत्यभावात्। यत्र यादृशधर्मद्वयव्यापकरूपावच्छिन्नं प्रत्यनुगतरूपेण कारणीभूतयोस्तादृशधर्मद्वयावच्छिन्नं प्रति मिथः प्रतिबन्धकत्वं तत्रैव वैकल्पिककारणत्वस्य व्यवहर्तव्यत्वात् । सत्प्रतिपक्षस्थले च विरोधिपरामर्शयोः प्रतिबध्यतावच्छेदकं यत् साध्यादिविशिष्टबुद्धित्वं तद्व्यापकरूपावच्छिन्नं प्रति तयोरनुगतरूपेण न हेतुत्वं

किन्तु साध्यविषयकानुमितित्वावच्छिन्नं प्रत्येव साध्यादिपरामर्शत्वेन तथा-त्वमिति तयोर्व्युदासः। नच व्रीहिभिर्यजेत यवैर्वा इति श्रुत्या यागं प्रत्येव व्रीहियवयोरुक्तक्रमेण वैकल्पिकं हेतुत्वमुचितम्, इच्छासामान्यं प्रत्यका-रणस्य व्रीह्यादेस्तद्विशेषात्मनि यागे कारणत्वासम्भवेन बाधितार्थस्य वेदे-नापि बोधयितुमशक्यत्वात्। व्रीह्यादिनिर्मितपुरोडाशविषयकत्वलक्ष-णेन व्रीह्यादिविषयकत्वरूपेणैव व्रीह्यादिकरणत्वेनापूर्वविशेषं प्रति दर्शस्य हेतुतायाः प्रतिबन्धकतायाः वा व्रीह्याद्यजन्यत्वेऽपि सम्भवात्। अत एव 'यादृशस्वर्गत्वावच्छिन्नं प्रति दर्शत्वेन कारणत्वं तदवान्तरवैजा-त्यद्वयावच्छिन्नं प्रत्येव व्रीहियवकारणकयागयोर्विशिष्य हेतुत्वं मिथो विरोधित्वमेव वा तयोर्वैकल्पिककारणतायां नियामकमित्यपि न युक्तम्, उभयकरणकादपि दर्शात् स्वर्गविशेषस्योत्पत्तिप्रसङ्गात्, व्रीह्यादिकरणक-यागस्याशुतरविनाशित्वेन यवादिकरणकयागजन्यस्वर्गं प्रति साक्षात् वि-रोधित्वासम्भवात्, स्वजन्यापूर्वद्वारा तद्विरोधित्वकल्पने च व्रीह्या-दिकरणकयागोत्तरमतिचिरेण कृतादपि यवकरणकयागात् स्वर्गानुत्प-त्तिप्रसङ्गात्। न च तवापि व्रीह्याहुतेरनन्तरक्षणे कृतात् यवहोमात् पु-ण्यविशेषानुपपत्तिः व्रीहियागस्य नाशोत्तरमेव तत्र यवयागे नापूर्वस्य जननीयत्वात्।

यत्तु व्रीहियवोभयकरणकहविस्त्यागे पुण्यविशेषजनकतावच्छेदक-त्वेनैव सिद्धस्य दर्शत्वस्य विरहादेव ततः फलानुत्पत्तिसम्भवात् उक्तक्र-मेण मिथो विरोधित्वकल्पनमप्रामाणिकमिति।

तन्न, याज्ञिकानामुभयकरणकेऽपि यागे दर्शव्यवहारेण तस्यापि द-र्शत्वात्, अन्यथा अश्वमेधजन्यापूर्वं प्रत्यपि तदङ्गक्रियाणामहेतुतापत्तेः, अङ्गहानिस्थलीययागस्य पुण्यविशेषप्रयोजकाश्वमेधत्वविरहेणैव ततः फलानुत्पादस्य सुवचत्वात् इति। विकल्पस्थले द्वयोरुपस्थितिदशाया-मैच्छिकमेकस्य ग्रहणम्। अनुकल्पस्थले तु यवाद्यप्राप्तिस्तदनुकल्पेन गो-धूमादिना क्रियमाणयागजन्यापूर्वं प्रति हेतुः,

> यथोक्तवस्त्वसम्प्राप्तौ ग्राह्यं तदनुकारि यत्।
> यवानामिव गोधूमा व्रीहीणामिव शालयः ॥

इति कात्यायनवचनात्

> प्रभुः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते ॥
> न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

इति स्मृत्यन्तराच्च इति विकल्पानुकल्पयोर्भेद इति संक्षेपः॥

एकदेशिनस्तु सामान्यतः कारणत्वेन निश्चिते वस्तुनि कस्येदं

कारणमित्यवान्तरजिज्ञासानुरोधात कारणत्वं नेकरूपं कार्यविशेषगर्भं, किन्तु पदार्थान्तरं, तच्चावच्छेदकीभूतस्यधर्मस्येव सम्बन्धस्यापि भेदाद्भिन्नमेव, दण्डश्चक्रत्वेन घटजनक इत्यस्येव दण्डः समवायेन घटजनक इत्यस्याप्यप्रमात्वेन सर्वसिद्धत्वात्। नचैवं समवाय्यसमवायिनिमित्तकारणेषु अनुगताकारप्रतीत्यनुपपत्तिः, घटवत्त्वादिप्रत्ययस्य घटत्वादिनेव कारणत्वप्रत्ययस्यापि कारणतात्वेन अखण्डधर्मान्तरेण वा अनुगताकारत्वात्। कार्यतावच्छेदकभेदस्तु न सर्वत्र कारणताभेदनियामकः, मानाभावात्। भिन्नधर्मावच्छिन्नकार्यताप्रतियोगिकयोरप्येकरूपसम्बन्धाभ्यामवच्छिन्नकारणत्वद्वयोरभेदे क्षतिविरहात्, सुखत्वावच्छिन्नं प्रति आत्मत्वेन समवायिकारणव्यक्तेरेव दुःखत्वावच्छिन्नं प्रति समवायिकारणत्वकल्पने बाधकाभावात्। न च कारणतायाः कार्यताप्रतियोगिकत्वे मानाभावः, पटत्वावच्छिन्नं प्रत्येव तन्तुत्वेन हेतुत्वं न तु जन्यत्वावच्छिन्नं प्रति इत्यादिप्रतीतेरेव मानत्वात्। यद्यप्येतावता घटत्वावच्छिन्नप्रतियोगिकत्वमेव कारणत्वस्य आयाति न तु तदवच्छिन्नकार्यताप्रतियोगिकत्वम् उक्तप्रतीत्या कार्यत्वस्यानुल्लेखात्, तथापि समवायेन पटत्वावच्छिन्नं प्रति तादात्म्येन तन्तुत्वेन हेतुत्वमित्यादिप्रतीत्यैव तत्सिद्धिः, पटत्वावच्छिन्नप्रतियोगिकत्वस्य समवायादिसम्बन्धावच्छेद्यतायाः कस्याप्यननुभवेन कार्यताया एव तथात्वात्।

वस्तुतः कारणतायाः कार्यताप्रतियोगिकत्वे पटत्वावच्छिन्नं प्रति तन्तुत्वेन कारणत्वमित्यपि प्रत्ययापत्तिरतः कारणत्वं न कार्यताप्रतियोगिकं, किन्तु समवायेन पटत्वावच्छिन्नं प्रति तन्तुत्वेन कारणत्वमिति प्रतीत्या पटत्वावच्छिन्नप्रतियोगिकत्वस्यैव समवायसंसर्गावच्छेद्यत्वमुपेतव्यमिति दिक्॥

न च कारणत्वस्यातिरिक्तत्वे दण्डत्वादेर्घटादिनियतपूर्ववर्त्तितानवच्छेदकत्वग्रहेऽपि तादृरूप्येण घटादिजनकत्वस्यापि ग्रहापत्तिः, तद्रूपेण कारणत्वग्रहं प्रति तद्रूपधर्मिकघटादिनियतपूर्ववर्त्ति तावच्छेदकत्वनिश्चयस्य हेतुत्वात्। न चैवमावश्यकतया तदेवास्तु कारणत्वमिति वाच्यम्। घटादिकार्यस्यानुपस्थितावपि दण्डः कारणं न वा दण्डः कारणमित्यादिप्रतीत्यनुरोधेनैव पदार्थान्तरस्य तस्योपेयत्वात्।

अस्तु वा भ्रमत्वादिज्ञानं प्रति प्रमात्वस्येव घटादिजनकतावच्छेदकत्वग्रहं प्रति घटादिनियतपूर्ववर्त्तितानवच्छेदकत्वस्य निश्चयस्तद्भावतकधर्मदर्शनत्वेनैव विरोधीति तदानीं न दण्डत्वादिना घटादिजनकत्वस्य ग्रहः। कारणत्वमिव तदवच्छेदकत्वमप्यतिरिक्तः पदार्थः स्वरूपसम्बन्ध-

विशेषो वा, तस्य च लघौ सम्भवे गुरावसत्त्वस्वाभाव्याच्च प्रमेयदण्डत्वा-
दिना घटादिहेतुत्वम्। अत एव व्याप्यादिधर्मस्य तथात्वसम्भवे न व्या-
पकधर्मस्य तथात्वम्। फलानुपधायकस्य च न कारणत्वम्, मानाभा-
वात्, अन्यथा अरण्यस्थदण्डो न घटं जनयति इति प्रतीतेर्भ्रमत्वापत्तिः,
किन्तु जनकतावच्छेदकधर्मवत्त्वलक्षणं जननयोग्यत्वमेव, परैरप्युक्तप्र-
त्ययानुरोधेनान्यथासिद्ध्यनिरूपकतत्तद्धर्मविशिष्टे प्रागुक्तकार्याव्य-
वहितपूर्वसत्त्वस्यैव कारणतात्वेनोपेयत्वात्। प्रात्यक्षिके च दण्ड-
त्वादिना घटत्वाद्यवच्छिन्नं प्रति कारणत्वस्य ग्रहे दण्डघटयोरन्वय-
व्यतिरेकज्ञानमप्यपेक्षितमतस्तदसत्त्वदशायां न दण्डत्वादिना घटादि-
जनकत्वस्य साक्षात्कारः। युज्यते चातिरिक्तं कारणत्वं, कथमन्यथा इष्ट-
साधनत्वबोधकानां स्वर्गकामो यजेत इति विधीनां प्रामाण्यं, यागादौ
धर्मिणि स्वर्गादिप्रतियोगिककारणतासामान्यबोधकतयैव तेषां तथा-
त्वात्, अन्यथा स्वर्गत्वावच्छिन्नाव्यवहितपूर्ववर्तितावच्छेदकीभूता-
न्यथासिद्ध्यनिरूपकधर्मवत्त्वस्याप्रसिद्ध्या विजातीयस्वर्गत्वावच्छिन्न-
नियतपूर्ववर्तितावच्छेदकत्वे सत्यन्यथासिद्ध्यनिरूपकस्याश्वमेधत्वादे-
स्ततोऽपि च स्वर्गगतवैज्यात्यानुपस्थितौ बोधयितुमशक्यत्वात् तादृश-
विधीनामप्रामाण्यापत्तेः। एवं दण्डादेः कार्यत्वमपि घटादावतिरिक्तप-
दार्थः, न तु दण्डादिनियतोत्तरवर्तिताविशेषः, दण्डाद्यनुपस्थितावपि
घटः कार्यं इत्याद्यनुभवस्य सर्वसिद्धत्वादित्यास्तां विस्तरः॥

तच्चेदं कारणत्वं त्रिविधं समवाय्यसमवायिनिमित्तकारणत्वभेदात्। तत्र
समवायसंसर्गावच्छिन्नकार्यताप्रतियोगिकतादात्म्यसंसर्गावच्छिन्नकार-
णत्वं समवायिकारणत्वम्। प्रत्यक्षादौ विषयादेस्तादात्म्यसंसर्गावच्छिन्न-
मपि कारणत्वं न समवायसंसर्गावच्छिन्नकार्यताप्रतियोगिकम्, समवाये-
नेच्छादिकं प्रति च ज्ञानत्वादिना समवायेन कारणत्वं न तादात्म्यसंसर्गाव-
च्छिन्नमिति तयोर्व्युदासः। तद्धर्मावच्छिन्नस्य समवायित्वे सति कारणत्वम-
न तद्धर्मावच्छिन्नसमवायिकारणत्वं, जन्यत्वावच्छिन्नं प्रति कालत्वादिना
निमित्तकारणतायामतिव्याप्त्यापत्तेः। तत्र जन्यभावत्वावच्छिन्नं प्रति
गुणवत्त्वेन समवायिकारणत्वं, गुणविशिष्टस्य घटादेः प्रागसत्त्वेन तत्र
पाद्यनुत्पत्तिप्रसङ्गात्, गुणत्वजातौ प्रमाणाभावात् संख्यापरिमाणाद्येकै-
मादाय विनिगमनाविरहप्रसङ्गाच्च, किन्तु द्रव्यत्वेनैव, निरुक्तकारणताव-
च्छेदकत्वेनैव तज्जातिसिद्धेः। न च घटत्वादिविशिष्टं प्रति कपालत्वादि-
विशेषतः समवायिकारणत्वस्यावश्यकत्वात् उक्तक्रमेण सामान्यतः कार्-
यां मानाभाव इति वाच्यम्। तत्सत्त्वे नीलपीतादीनां स्वाश्रयसमवेत-

प्रत्यासत्त्या स्वाश्रयवृत्तिगुणादिष्वपि सत्त्वेन तेष्वपि कारणगुणपूर्वकाणां
नीलपीतादीनामुत्पादस्य दुर्वारतापत्तेः । यदि च स्वाश्रयसमवायित्वस-
म्बन्धेन रूपादिकं प्रति समवायेनैव रूपत्वादिना हेतुत्वस्य वाच्यत्वा-
न्नोक्तदोषः, समवायेन गुणादौ रूपाद्यसत्त्वात् समवायस्वाश्रयसमवायि-
त्वान्यतरसंसर्गावच्छिन्नकार्यताप्रतियोगिकसमवायसम्बन्धावच्छिन्नका-
रणतावत्त्वेनैव रूपादेरसमवायिकारणत्वसम्भवात् । न चैवं घटाद्यन्त्या-
वयविष्वपि समवायेन नीलादिसत्त्वात् तत्रापि स्वाश्रयसमवायित्वसम्ब-
न्धेन नीलाद्युत्पत्तिप्रसङ्गः, स्वाश्रयसमवायित्वसम्बन्धेन नीलाद्युत्पत्तिं
प्रति समवायेन रूपत्वाद्यवच्छिन्नोत्पादस्य व्यापकतया तद्धेतुभूतस्य स-
मवायसम्बन्धावच्छिन्नप्रतियोगिताकरूपादिसामान्याभावस्य रूपदशायां
घटादावसत्त्वात् व्यापकसामग्रीविरहादेव तादृशसमवायित्वसम्बन्धेन
नीलाद्युत्पत्तेरसम्भवात्, रूपरसादिकं प्रति रूपत्वरसत्वादिना एककार्य-
समवायेन प्रतिबन्धकत्वस्यावश्यकत्वात्, अन्यथा रूपादिसत्त्वेऽपि घटा-
दौ रूपाद्युन्तरापत्तेरित्यादिकं विभाव्यते, तदापि संयोगत्वविभागत्वा-
द्यवच्छिन्नं प्रति समवायिकारणत्वं द्रव्यत्वेनैव वक्तव्यं, कार्यमात्रवृत्ति-
जातेः समवायावच्छिन्नकार्यताया अवच्छेदकत्वनियमस्यान्यथोपपाद-
यितुमशक्यत्वात् । न च समवायेनेव कालिकेनापि सम्बन्धेन यः सं-
योगत्वावच्छिन्नः तं प्रति द्रव्यत्वेन समवायिकारणतायामव्यभिचारात्
जन्यभावमात्रं प्रत्येव द्रव्यत्वेन समवायिकारणत्वं स्यादिति वाच्यम् ।
तथापि क्षत्यभावात्, जातेः कालिकसम्बन्धेन जन्यतावच्छेदकताया-
मन्यथासिद्धेश्च, अन्यथा घटत्वपटत्वादीनां निखिलजातीनामुक्तकारण-
तायां कालिकसम्बन्धेन जन्यतावच्छेदकत्वे तद्भेदेनानन्तकार्यकारण-
भावकल्पनापत्तेरिति ॥ जन्यद्रव्यत्वावच्छिन्नं प्रति च न स्पर्शवत्त्वेन स-
मवायिकारणत्वं गौरवात्, अनुद्भूतस्पर्शवत्त्वे प्रमाणाभावेन पिशाचाद्य-
वयवस्य निष्पर्शतदनारम्भकत्वप्रसङ्गाच्च । नापि स्पन्दवेगयोः समवायि-
कारणतावच्छेदकत्वेन सिद्धाया मूर्त्तत्वजात्या एव तथात्वं, मनसोऽपि
द्रव्यारम्भकत्वापत्तेः, नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भावनियमेन स-
हकार्यभावस्य तत्र वक्तुमशक्यत्वात्, किन्तु क्षित्यादिद्रव्यचतुष्कवृत्तिना
जात्यन्तरेणैव तथात्वं, तादृशकारणतावच्छेदकत्वेनैव तेषु जात्यन्तरसि-
द्धेः । न चैवं जन्यसंस्कारत्वावच्छिन्नं प्रति समवायिकारणतावच्छेदक-
त्वेनात्मन्यविभुवृत्तिजात्यन्तरसिद्धिप्रसङ्गः, सुखसमवायिकारणतावच्छे-
दकत्वेन सिद्धस्यात्मत्वस्य ईश्वरावृत्तित्वेन तत्साङ्कर्यायोगादिति वा-
च्यम् । वेगस्थितिस्थापकभावनानुगतसंस्कारत्वजातौ प्रमाणाभावेन त-

द्वच्छिन्नस्य समवायिकारणतावच्छेदकत्वेन जातिसिद्धेर्वायसदशनदंशनतुल्यत्वात्, अनुगतधर्मावच्छिन्नकार्यतानिरूपितस्यैव कारणत्वस्य जातिव्यवस्थापकत्वात् अन्यथाऽतिप्रसङ्गात्। अस्तु वा मूर्त्तत्वेनैव जन्यद्रव्यत्वावच्छिन्नं प्रत्यारम्भकत्वम्, मनसि विलक्षणसंयोगविरहादेव द्रव्यारम्भासम्भवात्, नित्यस्येत्यादिनियमे प्रमाणाभावात्। नचैवं स्पन्दत्वावच्छिन्नं प्रत्यपि द्रव्यत्वेनैव समवायिकारणत्वसम्भवात् मूर्त्तत्वमपि जातिर्न स्यात् गगनादौ स्पन्दानुत्पादस्यापि सहकार्यभावप्रयुक्तत्वसम्भवादिति वाच्यम्। स्पन्दहेतोर्दण्डाद्यभिघातस्य गगनेऽपि सत्त्वात् तत्र सहकार्यभावस्य दुर्वचत्वात्, अन्यथा दण्डाद्यभिघातासमवायिकारणकस्य विलक्षणशब्दस्य तत्रानुत्पत्तिप्रसङ्गात्।

यत्तु विजातीयैकत्ववत्त्वेनैव जन्यद्रव्यत्वावच्छिन्नं प्रति समवायिकारणत्वं, न तु मूर्त्तत्वेन, नियताजनकव्यावृत्तरूपस्य सुवचत्वे तत्साधारणधर्मेण (१)कारणत्वस्यान्याय्यत्वात्, द्रव्यारम्भप्रयोजकस्य विलक्षणैकत्वस्यावयवमात्रनिष्ठत्वोपगमेन गगनादिष्विव अन्त्यावयविष्वपि प्रमाणविरहेणासत्त्वात् कारणतावच्छेदकादेर्यथाकार्यमुन्नयनादिति।

तत्तुच्छम्, एकत्वजन्यतावच्छेदिकया निखिलजन्यैकत्वनिष्ठजात्या साङ्कर्येण उक्तवैजात्यासिद्धेः मूर्त्तत्वजात्यपेक्षया विलक्षणैकत्वानां गुरुत्वेन जनकतानवच्छेदकत्वाच्च, नियताजनकव्यावृत्तस्य लघुनः सम्भव एव तत्साधारणरूपेण जनकत्वस्य न्याय्यत्वात्, अन्यथा दण्डत्वादेर्नियताजनकसाधारण्यात् आरण्यकान्यदण्डत्वादिनैव घटत्वाद्यवच्छिन्नं प्रतिहेतुतापत्तेः। तुल्यन्यायेन द्रव्यचाक्षुषत्वाद्यवच्छिन्नं प्रति विषयस्य जन्यस्पर्शत्वावच्छिन्नं प्रति च समवायिनो विलक्षणैकत्वेन हेतुत्वसिद्ध्या तादृशवैलक्षण्यैरपि साङ्कर्येण जन्यद्रव्यजनकतावच्छेदकतावच्छेदकतया एकत्वगतवैजात्योपगमासम्भवाच्च। न चान्त्यावयविनामप्येकत्वेषु द्रव्यारम्भप्रयोजकं वैजात्यमुपेतव्यम्, नित्यानामेव स्वरूपयोग्यानां फलोपधायकत्वनियमेन तेषां सहकार्यभावेनापि कार्याजनकत्वसम्भवादिति वाच्यम्। तथासति दित्यादिचतुष्क एव लाघवेन द्रव्यारम्भप्रयोजकजातेः सम्बन्धकल्पनाया उचितत्वात्। इत्थञ्च जन्येषु रूपस्पर्शेष्वपि मूर्त्तत्वेन भूतचतुष्टयवृत्त्यवान्तरवैजात्येनैव वा समवायिकारणत्वं स्वीकार्यम्। पाकजरूपादिकं प्रति विलक्षणतेजःसंयोगवत्त्वेन पाकाजन्यजन्यरूपादिकं प्रति च स्वाश्रयसमवेतत्वप्रत्यासत्त्या रूपत्वादिना हेतुत्वस्यावश्यकत्वेन तादृशविशेषसामग्रीविरहादेव वायवीयपरमाणौ रूपरसाद्यनुत्पत्तिसम्भवात्, स्पर्शत्वाद्यवच्छिन्न-

(१) जनकतदितरवृत्तिधर्मेण।

प्रति स्पर्शत्वादिना एकार्थसमवायेन प्रतिबन्धकताध्रौव्येणापि तत्र स्पर्शोत्पादायोगाच्च। न च जन्यानां रूपरसस्पर्शानां समवायिकारणतावच्छेदकत्वेन पार्थिवान्यपरमाणुभिन्नेषु यावन्मूर्तेषु जातिविशेष एव कल्प्यतां, तथाच नित्यस्येत्यादिव्याप्तिरपि निर्वहतीति वाच्यम्। प्रत्यक्षप्रमाणसिद्धैर्जलत्वतेजस्त्ववायुत्वजातिभिः साङ्कर्येण तादृशवैजात्यस्यासिद्धेः। जन्यजलत्वावच्छिन्नं प्रति जलत्वादिनैव समवायिकारणत्वेन जलत्वजातेः परमाणुवृत्तितया तादृशवैजात्यव्याप्यत्वासम्भवात्, न हि स्पन्द इव जलादित्रिकेऽपि मूर्तत्वेनैव समवायिकारणत्वं, पार्थिवादिपरमाणावपि जलाद्युत्पत्तिप्रसङ्गात्, नित्यस्येत्यादिव्याप्तिवादिनां सहकार्यभावेन तत्र तदनुत्पादस्य वक्तुमशक्यत्वात्। न च जन्यं जलं प्रति शीतस्पर्शवत्त्वेन तेजः प्रति उष्णस्पर्शवत्त्वेन वायुं प्रति च क्षितिव्यावृत्तविलक्षणानुष्णाशीतस्पर्शवत्त्वेनैव समवायित्वसम्भवात् जलत्वादिकं न परमाणुवृत्तीति वाच्यम्। जलत्वाद्यपेक्षया शीतस्पर्शवत्त्वादेर्गुरुतया तद्रूपेण जलादिकं प्रत्यहेतुत्वात्, अनुद्भूतस्पर्शे प्रमाणाभावेन रसनचक्षुस्त्वगादीनामवयवस्य निःस्पर्शतया तेषामनुत्पत्तिप्रसङ्गात्, जलं प्रति शीतस्पर्शवत्त्वेनेव स्नेहवत्त्वेन तेजः प्रति च उष्णस्पर्शवत्त्वेनेव भास्वररूपवत्त्वेनापि विनिगमकाभावेन कारणत्वप्रसक्तौ लाघवेन जन्यजलतेजोजनकतावच्छेदकतया प्रमाणसिद्धाभ्यां परमाणुसाधारणजातिभ्यामेव रूपादित्रिकसमवायिकारणतावच्छेदकजातेः साङ्कर्यस्य दुर्वारत्वाच्च।

एतेन जन्ययोरेव गुरुत्वयोः समवायिकारणतावच्छेदकतया पाथःपृथिव्योरेकजातिसिद्धिरित्यप्यपास्तम्, जलत्वपृथ्वीत्वाभ्यां जलत्वेनैव वा साङ्कर्येण तादृशजातेरसम्भवात्, तस्मिन्नित्यस्येत्यादिव्याप्तेः प्रामाणिकत्वे परमाणुभिन्नमूर्तत्वेनैव जन्यस्पर्शादिकं प्रति समवायित्वेन तत्त्वं वाच्यम्। न च जन्यस्पर्शत्वादेर्जन्यजलत्वादेर्वा कार्यतावच्छेदकत्वे मानाभावात् तदवच्छिन्नं प्रति मूर्तत्वादिना समवायिकारणत्वाभावेऽपि न क्षतिः, कार्यमात्रवृत्तिजातेः समवायिकारणजन्यतावच्छेदकत्वनियमादेव स्पन्दत्वावच्छिन्नं प्रति मूर्तत्वादिना तथात्वस्वीकारादिति वाच्यम्। स्पर्शादिमति स्पर्शाद्यनुत्पत्त्या जन्यस्पर्शत्वादेः स्पर्शादिप्रतिबध्यतावच्छेदकत्वेन कार्यतावच्छेदकत्वध्रौव्यात्। यदि च शब्दासमवायिकारणीभूतसंयोगस्याभिघातत्वे प्रमाणाभावः शब्दस्य भेरीदण्डाद्यभिघातनिमित्तकारणकत्वेनैवाभिघातजन्यत्वादिति स्पन्दासमवायिकारणस्याभिघातादेरसत्त्वादेव गगनादौ न तस्य उत्पाद इत्युच्यते। तदापि स्पन्दत्वावच्छिन्नं प्रति न द्रव्यत्वेन समवायिकारणत्वं, जन्यभावत्व-

स्पन्दत्वयोः समान्यविशेषयोरेकप्रयोजकप्रयोज्यतायामन्यथासिद्धेः, किन्तु मूर्त्तत्वेनैव तथात्वमिति वदन्ति ॥

नीलादिरूपे तिक्तादिरसे गन्धादिसामान्ये च पृथिवीत्वेनैव समवायिकारणत्वं तादृशकारणतावच्छेदकतयैव पृथिवीत्वजातिसिद्धेः, अन्यथा द्रव्यत्वेन मूर्त्तत्वादिना वा तथात्वे जलप्रभृतौ गन्धस्य तेजःप्रभृतौ तिक्तादिरसस्य वायुप्रभृतौ च नीलादिरूपस्याप्युत्पत्तिप्रसङ्गात्। न च पाकजे गन्धे विलक्षणतेजःसंयोगत्वेन तद्भिन्ने च तत्र स्वाश्रयसमवेतत्वसम्बन्धेन गन्धत्वादिना हेतुत्वात् तदुभयविशेषसामग्रीविरहादेव नोक्तातिप्रसङ्ग इति वाच्यम्। विलक्षणतेजःसंयोगत्वेनैव पाकजगन्धरसादिकं प्रत्यसमवायिकारणतया तादृशसंयोगस्य तेजस्यपि सत्त्वात् तत्रापि पाकजगन्धरसाद्यापत्त्या पृथिवीत्वेनैव तदुभयसमवायिकारणत्वस्यावश्यकत्वात्। तेजःप्रतियोगिकत्वविशिष्टेन विलक्षणसंयोगत्वेन तादृशगन्धादिहेतुत्वे विलक्षणसंयोगत्वविशिष्टेन तेजःप्रतियोगित्वेनापि तथात्वापत्तौ गुरुतरकार्यकारणभावद्वयापत्तेः। न च पाकान्यविलक्षणसंसर्गेण तेजस्त्वेनैव पाकजं प्रति निमित्तकारणत्वात् तेजसि च तेजसस्तादृशसम्बन्धेनासत्त्वान्नोक्तातिप्रसङ्ग इति वाच्यम्। पूर्वं पाकस्य वैजात्यासिद्धौ तादृशसंयोगेन तेजसि कारणत्वकल्पनस्यायोगात् गन्धनीलादिजनकतावच्छेदकतयैव तस्योपेयत्वात्। कारणतावच्छेदकतया संसर्गस्येव तद्गतधर्मस्याप्रसिद्धेः, अन्यथा गुरुतरेण नानाविधेन वा क्लृप्तसम्बन्धेन चाक्षुषादिकार्यं प्रति चक्षुरादेः कारणत्वं न स्यात् तादृशकार्यस्य जनकतावच्छेदकत्वेनैव चक्षुरादेः स्वग्राह्येषु संसर्गान्तरस्य सिद्धेः सुवचत्वादिति॥ न च जम्बीरनिम्बादिजलेष्वपि अम्लतिक्तादिरसोत्पत्तेर्न तत्र पृथिवीत्वेन समवायिकारणत्वं सम्भवतीति वाच्यम्। जम्बीरादिजलेषु तदुपष्टब्धस्य जम्बीरादिभागस्यैवाम्लादिरसस्य परम्परया प्रत्ययात्, अन्यथा पलतोलकादिमितेन जम्बीरादिजलेन समं घटाश्रितजलान्तरस्य संयोगात् जायमानस्य महाजलस्यापि कारणगुणक्रमेणाम्लादिरसोत्पत्तौ तदनुभवस्य ब्रह्मणोऽपि दुर्वारतापत्तेः॥ निविडादौ संयोग इव कोमलकठिनादौ स्पर्शेऽपि पृथिवीत्वेनैव समवायिकारणत्वं तादृशसंयोगस्पर्शादेः तत्र तत्रासमवायिकारणत्वाच्च नातिप्रसङ्गः। अनुष्णाशीतस्पर्शसामान्यं प्रति पृथिवीत्वेन समवायिकारणत्वमिति तु रिक्तं वचः। शीतोष्णभिन्नस्पर्शत्वावच्छिन्नं प्रति पृथिवीत्वेन हेतुत्वे वायोरपि पृथिवीत्वापत्तेः पृथिवीस्पर्शमात्रवृत्त्यनुगतैकजातेरसत्त्वेन जन्यतावच्छेदकत्वायोगात्, कोमलकठिनौ च स्पर्शावेव, न तु संयोगप्रभेदौ, त्वचेव चक्षुषापि प्रत्यक्षतापत्तेरि

ति॥ स्वर्णत्वपद्मरागत्वाद्यवच्छिन्ने तत्तद्विलक्षणरूपवत्त्वेन दधिदुग्धत्वाद्य-च्छिन्ने विलक्षणरसवत्त्वेन चम्पकत्वाद्यवच्छिन्ने च विलक्षणगन्धवत्त्वेनैव समवायिकारणत्वं, कारणतावच्छेदकविशिष्टस्य पूर्वसत्त्वापेक्षणाच्च परमाणौ द्व्यणुकान्तरस्योत्पाददशायां तज्जातीयद्व्यणुकस्य नोत्पादः । पृथिवीत्वेनैव द्रव्यत्वेनैव वा तेष्वपि समवायिकारणत्वम्, सामान्यविशेषयोरेकधर्मावच्छिन्नाप्रयोज्यत्वप्रवादस्य गाथामात्रत्वात् , रूपविशेषादेरेकार्थसमवायेन निमित्तकारणत्वकल्पनयैवातिप्रसङ्गभङ्गादित्यपि वदन्ति ।

स्वर्णपद्मरागादिगतविलक्षणरूपत्वावच्छिन्नं प्रति न स्वर्णत्वादिना हेतुत्वं, स्वर्णाद्यारम्भकपरमाणौ तादृशरूपाद्यनुत्पत्तिप्रसङ्गात् , द्रव्यत्वसाक्षाद्व्याप्याया एव जातेर्नियतवृत्तित्वात् । नचेष्टापत्तिः, पद्मरागादिद्व्यणुकरूपाद्युत्पत्त्यर्थं तदारम्भकपरमाणौ तादृशरूपादेरवश्याभ्युपेयत्वात् , किन्तु पृथिवीत्वेनैव द्रव्यत्वेनैव वा तत्रापि तथात्वं, तादृशरूपत्वाद्यवान्तरवैजात्यावच्छिन्नं प्रति तादृशरूपत्वादिना विलक्षणपाकत्वादिना च हेतुताद्वयस्यावश्यकतया तथ.विघ्नविशेषसामग्रीविरहादेव घटादौ न तादृशरूपरसादेरुत्पादापत्तिप्रसङ्गः ।

स्वतन्त्रास्तु–स्वर्णत्वपद्मरागत्वदधित्वदुग्धत्वाद्यवच्छिन्नं प्रत्यपि विभिन्नजातीयसंस्थानवत्त्वेनैव समवायिकारणत्वम् , अन्यथा रूपरसादिमत्त्वेन तथात्वे स्वर्णरजतयोः पद्मरागचूर्णयोः सक्तुदुग्धयोर्दधिशर्करायोश्च मिथः संयोगेन द्रव्यान्तरस्योत्पत्तिदशायां सुवर्णपद्मरागदुग्धाद्युत्पादस्य दुर्वारत्वापत्तेः । न च तत्र द्रव्यान्तरमेव नोत्पद्यते, प्रत्यक्षबाधापत्तेः, दुग्धादिव्यावृत्तविलक्षणरसस्याननुभवप्रसङ्गाच्च । न च स्वर्णादेर्नाशोत्तरं तदारम्भकैः परमाणुभिरेव तत्र द्रव्यान्तरस्योत्पादः, तन्नाशकस्यासत्त्वात् तादृशद्रव्यस्यावयवेषु स्वर्णत्वाद्यनुभवस्य सर्वजनसिद्धत्वाच्च । नचैवं विजातीयानामारम्भकत्वेऽपसिद्धान्तः । द्रव्यत्वसाक्षाद्व्याप्यजात्या द्रव्यविभाजकजात्या वा विजातीयानामेव मिथः संयोगेन द्रव्यानारम्भस्य सिद्धान्तसिद्धत्वात् , अन्यथा सुवर्णरजतयोः शणकार्पासादिसूत्रयोश्च मिथः संयोगेन द्रव्यानुत्पत्तिप्रसङ्गात् । एवञ्च पद्मरागदुग्धादिगतविलक्षणरूपरसत्वाद्यवच्छिन्नं प्रति पद्मरागत्वदुग्धत्वादिनैव समवायिकारणत्वं, पद्मरागाद्यारम्भकपरमाणौ तादृशरूपाद्यसत्त्वेऽपि क्षतिविरहात् । नचैवं स्वर्णादिद्व्यणुकस्य रूपविशेषादावसमवायिकारणालाभ इति वाच्यम् । रूपध्वंसाभावविशिष्टं पीतरक्तादिकं प्रति पीतत्वरक्तत्वादिना रसध्वंसाभावविशिष्टं मधुरतिक्तादिकं प्रति च मधुरतिक्तत्वादिना रूपरसादेरसमवायिकारणतया स्वर्णदुग्धादीनामारम्भक-

परमाणौ पीतादिरूपस्य मधुरादिरसस्य सत्त्वेव स्वर्णादौ विलक्षण-पीतादेः दुग्धादौ च विलक्षणमाधुर्यादेरसमवायिकारणतानिर्वाहात् इति प्राहुः । तच्चिन्त्यम् ॥

विलक्षणमाधुर्ये शीतस्पर्शे च सांसिद्धिकद्रवत्वेन स्नेहे च जन्यजलत्वेनैव समवायिकारणत्वम् । न च जलरसस्य वैलक्षण्यमनुपलम्भबाधितं, हरीतक्यादिकषायसम्पर्कस्य तद्व्यञ्जकत्वात् । न च हरीतक्या एवासौ माधुर्यप्रकर्षः जलसंयोगेन व्यज्जित इति साम्प्रतम् । हरीतक्यामलक्यादेरनुभूतकषायरसवत्त्वेन तत्र मधुररसस्यासम्भवात्, कषायभिन्नानां तदवयवानां प्रमाणबाधितत्वात् 'षड्रसा हरीतकी' इत्यादिभिषग्व्यवहारस्य षड्रसकार्यकारित्वेनाप्युपपत्तेः । ननु हरीतक्यादावेव सजलशरीरोष्णसंयोगेन कषायरसविनाशपूर्वकमुत्पादितो मधुरो रसो रसनया गृह्यते इत्येव किं न स्यात्, न स्यात् येषामेव दन्तदष्टानां कषायखण्डानां जलसंपर्केण माधुर्यमवधार्यते तेषामेव निर्जलानामप्युत्तरकालं मधुरताप्रतीत्यापत्तेः । न च पाकादुत्पन्नोऽपि कषायद्रव्यस्य मधुरो रसः पयसैव व्यञ्जनीय इति नोक्तदोषः । तावतापि तदानीं कषायरसास्वादस्यानुपपादनात् प्रत्यक्षे विषयस्यापि हेतुत्वात् एतावत्कल्पनाजालमपेक्ष्य लाघवादनुभूयमाने जलरस एव मधुरत्वादिजातेः कषायवस्तुसम्पर्कव्यङ्ग्यतया कल्पनौचित्याच्च ।

ननु घृष्टे श्रीखण्डपिण्डेपि शीतस्पर्शस्य सत्त्वान्न तत्र जलत्वेन समवायिकारणत्वं, न च घर्षकजलस्यैवासौ शीतस्पर्शः, तज्जलशैत्यापेक्षयाऽतिशयितत्वानुभवेन तदीयत्वासम्भवात् । न च घर्षणाद्बहिरागतस्य श्रीखण्डान्तर्गतजलान्तरस्यैव शैत्यातिशयस्तत्रोपलभ्यते इति साम्प्रतम् । जलान्तरकल्पनमपेक्ष्य क्लृप्तश्रीखण्डस्यैव शैत्यकल्पनाया लघुत्वात् । न च घर्षकजलस्यैव शैत्यप्रकर्षः श्रीखण्डक्षोदैरभिव्यज्यते इति पूर्वं न तद्ग्रह इति वाच्यम् । श्रीखण्डादिक्षोदस्यैव शैत्यप्रकर्षो घर्षकजलसंयोगेनाभिव्यज्यते इत्यस्यापि सुवचत्वात् एकशेषस्य दुष्करत्वात् इति चेन्न ।

चन्दनखण्डस्यानुभूयमानानुष्णाशीतस्पर्शवत्त्वानुरोधेन तदवयवीभूतक्षोदानामपि तादृशस्पर्शध्रौव्येण तदारभ्यस्य घृष्टचन्दनपिण्डस्य शीतस्पर्शवत्त्वासम्भवात् अवयविशैत्यं प्रति अवयवशैत्यस्य हेतुत्वात् । न च घर्षकजलस्य सम्पर्क एव चन्दनक्षोदेषु प्राक्तनमनुष्णाशीतस्पर्शं विनाश्य सातिशयं शीतस्पर्शं जनयिष्यत इति वाच्यम् । अनन्तस्पर्शतन्नाशतद्धेतुत्वादिकल्पनामपेक्ष्य क्षोदानामेव घर्षकजलनिष्ठशैत्यातिशयव्यञ्जकत्वकल्पनायां लाघवादिति सम्प्रदायः ।

न च घर्षकजलस्य शैत्यप्रकर्षोपगमे श्रीखण्डपेषणात् पूर्वं जलमिदं शीतमेव न तु शीततरमित्यादिस्पार्शनप्रतीत्यनुपपत्तिः, पूर्वं जलस्य शैत्यप्रकर्षव्यञ्जकचन्दनक्षोदसम्पर्कविरहेण तत्र सतोऽपि तस्याग्रहात्, उक्तप्रत्ययस्य भ्रमत्वस्वीकारे तु पूर्वं श्रीखण्डशैत्यातिशयव्यञ्जकजलसम्पर्कस्यासत्त्वेन तत्र सतोऽपि शैत्यातिशयस्य तदानीमग्रहेण श्रीखण्डक्षोदो न शीतः किन्त्वनुष्णाशीत इत्यादिप्रत्ययानामपि भ्रमत्वं सुवचम् । न च घर्षकपयस्तु पूर्वं न शीततरमित्यादिप्रत्ययस्य प्रामाण्यानुरोधेन श्रीखण्डमध्यवर्तिनो जलान्तरस्य घर्षणाद्बहिरागतस्य शैत्यातिशयो गृह्यते इत्युपेयम् । तथासति घृष्यमाणचन्दनक्षोदेषु क्षोदोऽयं न शीतः किन्त्वनुष्णाशीतः इत्यादिमतेरसत्यतानुरोधेन जलसम्पर्कात् क्षोदेष्वनुष्णाशीतस्पर्शविनाशशीतस्पर्शोत्पादयोरभ्युपगन्तुमौचित्यात् कल्पनागौरवस्य उभयमतेऽप्यविशिष्टत्वादिति पुनरुत्तानाः ।

ननु स्वाभाविकद्रवत्वसामान्यं प्रति न जलत्वेन समवायित्वं तैलादिद्रवत्वे व्यभिचारात् । न च तैलेऽनुभूयमानद्रवत्वं तदुपष्टम्भकजलस्यैवेति वाच्यम् । तादृशजले प्रमाणाभावात् । दुग्धेन पच्यमानस्य तण्डुलादेः दाहप्रतिबन्धार्थमेव दुग्धस्य जलोपष्टभ्यत्वस्वीकारात्, अन्यथा दुग्धेनेव तैलेनापि पच्यमानस्य वस्तुनः तदुपष्टम्भकजलेन प्रतिबन्धात् दाहप्रसङ्गात्, न ह्युपष्टम्भकान्यस्यैव जलस्य संयोगो दाहविरोधी, दुग्धादिना पच्यमानस्य तण्डुलादेस्तदुपष्टम्भकेनापि जलेन दाहप्रतिबन्धात् इति चेन्न ।

तिलाद्यारम्भकैरेव परमाणुभिर्लाघवेन तन्नाशोत्तरं तैलाद्यारम्भात् तेषां स्वाभाविकद्रवत्वसत्त्वे तदारब्धतिलादेरपि तादृशद्रवत्वस्य दुर्वारत्वापत्तेः । न च तिलाद्युत्पत्तेः पूर्वं पाकाद्विनष्टद्रवत्वैरेव तिलाद्यारम्भकाणुभिः पाकान्तरोपजातद्रवत्वविशिष्टैः तैलमारभ्यते इत्युक्तदोषानवकाशः, कल्पनागौरवापत्तेः, साक्षात् परम्परया वा पाकाप्रयोज्यस्यैव द्रवत्वस्य सांसिद्धिकत्वेन तावतापि तैलस्य तादृशद्रवत्वानिर्वाहाच्च, अन्यथा पाकजन्यद्रवत्वस्यैव सांसिद्धिकत्वे कारणगुणपूर्वकस्य घृतादिद्रवत्वस्यापि सांसिद्धिकत्वापत्तेः । नचैवं तैलस्य जलोपष्टभ्यत्वे दाहो न स्यात् जलसम्बन्धस्य दाहविरोधित्वादिति वाच्यम् । स्निग्धतमान्यस्यैव जलस्य दाहप्रतिकूलत्वात् तैलेऽनुभूयमानस्नेहस्य प्रकृष्टतमत्वाभावात् । एतेन तैलघृतादौ स्नेहसत्त्वात् न तत्र जलत्वेन समवायित्वमित्यपि नाशङ्कनीयम्, तैलघृतादेः समवायेन स्नेहवत्त्वे तदारम्भकैः परमाणुभिरारब्धस्य तिलदध्यादेरपि स्नेहवत्त्वप्रसङ्गात् । नहि मेरेवपाकाद्विन-

घृतस्नेहैरणुभिस्तिलादिरारब्धस्तैरेव पाकान्तरादुपजातस्नेहोपहितैस्तैला-दिकं जन्यते येन तैलादौ स्नेहः तदर्ज्जकतिलादौ च स्नेहविरहः सम्पद्यते, पाकस्य स्नेहतद्विनाशौ प्रत्यजनकत्वात्, जनकत्वे वा कल्प-नागौरवापत्तेरित्यास्तां विस्तरः ॥

भास्वररूपमुष्णस्पर्शं च जन्यं प्रति तेजस्त्वादिना समवायित्वम्, नि-दाघोष्मप्रभृतीनामपि रूपं भास्वरमेव किन्त्वनुद्भूतम्, अतो न तेषां चक्षुषा ग्रहः। न च वह्न्यादियोगात् जलेष्युष्णस्पर्शस्योत्पत्त्या न तत्र तेजस्त्वेन समवायित्वमिति वाच्यम्। वह्न्यादिगतस्पर्शेनैव परम्परया जलादा-वुष्णत्वप्रतीत्युपपत्तौ समवायेन तस्योष्णस्पर्शवत्त्वे प्रमाणाभावात्, स्प-र्शसामान्यं प्रति एकार्थसमवायेन स्पर्शस्य विरोधितया शैत्यवतो जलस्य उष्णतोत्पत्त्यसम्भवाच्च। न च वह्न्यादिसंयोगेनैव जलादौ शैत्यादिकं विनाश्य उष्णस्पर्शं उत्पादयिष्यते निमित्तीभूतस्य तादृशसंयोगस्य ना-शादेव च उष्णस्पर्शविनाश उत्पत्स्यते, सम्पत्स्यते च पुनः कारणशै-त्यक्रमेण शैत्यान्तरस्य ग्रह इति साम्प्रतम्। कल्पनागौरवापत्तेः। न चोष्णशीतौ द्वावपि स्पर्शौ जलस्य स्वाभाविकावेव, शीतं जलमुष्णं जलमिति कालभेदेन स्पार्शनप्रतीत्योरेकत्र प्रमात्वस्य नियन्तुमशक्यत्वात्, तादृशस्पर्शयोश्च तेजःसंयोगतदभावव्यङ्ग्यत्वादेव नैकदाऽनुभव इति वाच्यम्। पयस्युष्णस्पर्शान्तरस्य तत्प्रत्यक्षे तेजःसंयोगहेतुत्वस्य च कल्पनामपेक्ष्य लाघवेन उष्णं जलमितिप्रतीतेस्तैजसोष्णतामादाय परम्प-रया प्रमात्वकल्पनाया एव युक्तत्वात्। तेजोविगमदशायां नेदमुष्णं जलमिति स्पार्शनप्रमानुपपत्तेश्च ॥

समवायसम्बन्धावच्छिन्नकार्य्यतानिरूपितं समवायस्वाश्रयसमवा-यान्यतरप्रत्यासत्त्या कारणत्वमसमवायिकारणत्वम्। द्रव्यतत्समवेतादि-चाक्षुषं प्रति रूपादेः महत्त्वस्य वा समवायेन स्वाश्रयसमवायेन च निमित्तकारणत्वं न समवायावच्छिन्नया कार्यतया निरूपितं किन्तु विषयतासम्बन्धावच्छिन्नया, समवायेन घटत्वावच्छिन्नं प्रति च कपाल-त्वादिना समवायिकारणत्वं न समवायेन स्वाश्रयसमवायेन वाऽवच्छि-न्नं, किन्तु तादात्म्येनैव इति तयोर्व्युदासः। इच्छादिकं प्रति ज्ञानादेः कारणत्वस्यालक्ष्यतायाः सकलतान्त्रिकसिद्धत्वात् तद्वारणार्थमात्मविशेष-गुणावृत्तित्वेन कारणत्वं विशेषणीयम्। विभागं प्रत्यपि संयोगस्य कारण-त्वमसमवायिकरणत्वमेव, विभागत्वाद्यवच्छिन्नकार्यताप्रतियोगिकसंयो-गादिवृत्तिकारणतान्यत्वं वा विशेषणं देयम्, अत एवाभिघातादिकं प्रति स्प-र्शवेगादेरेकार्थसमवेतत्वप्रत्यासत्त्या निमित्तकारणतायामपि नातिव्याप्तिः।

अथ जन्यद्रव्यत्वावच्छिन्नं प्रति आरम्भकसंयोगस्य न संयोगत्वेनासमवायिकारणत्वं कपालद्वयस्य परमाणुद्वयस्य वा यथाकथञ्चित्संयोगादेव द्रव्योत्पत्तिप्रसङ्गात् । ( अपूर्णः )

## शरीरकारणतावाद ( ३२ ) वीचिः ।

शरीराद्यतिरिक्तस्य ज्ञानाद्यवच्छेदकत्वेऽतिप्रसङ्गस्तद्वारणायावच्छेदकतासम्बन्धेन जन्यज्ञानत्वावच्छिन्नं प्रति आत्मसमवेतजन्यविशेषगुणत्वावच्छिन्नं प्रति वा शरीरत्वेन शरीरस्य तादात्म्यप्रत्यासत्त्या हेतुत्वं कल्प्यते । अत्राप्यनुमित्यादौ परामर्शादीनां विशिष्टबुद्धौ विशेषणधियः सामानाधिकरण्यप्रत्यासत्त्या इव समानावच्छेदकत्वप्रत्यासत्त्यापि हेतुत्वं व्यवस्थापनीयम् । निर्विकल्पस्यावच्छेदकतानियमार्थमेव तादृशकल्पनम् । शरीरत्वादिकन्तु न जातिविशेषः पृथिवीत्वादिना सङ्करात् । नापि ज्ञानावच्छेदकत्वं, तस्यैव नियामकत्वे आत्माश्रयप्रसङ्गात् । अपि तु चेष्टावदन्त्यावयवित्वम् । चेष्टात्वञ्च प्रयत्नाधीनक्रियानिष्ठजातिविशेषः । शरीरावयवस्य ज्ञानावच्छेदकत्वोपगमे तु ज्ञानजनकतावच्छेदककोटौ अन्त्यावयवित्वं न निवेशनीयम् । अत एव खण्डशरीरोत्पत्तिकालेऽपि महाशरीरावयवावच्छेदेन ज्ञानाद्युत्पद्यते । चेष्टावत्त्वमुपलक्षणतया जनकतावच्छेदकमतो ज्ञानाव्यवहितप्राक्काले नियमतः शरीरे चेष्टाया असत्त्वेपि न क्षतिः ।

इदमत्रावधेयम् । मैत्रीयचक्षुःसंयोगादितो यदा मैत्रात्मनि चाक्षुषादिकं समवायेन उत्पद्यते तदा चैत्रशरीरे कथमवच्छेदकतया तन्नोत्पद्यते । न चावच्छेदकतासम्बन्धेन तदात्मसमवेतज्ञानं प्रति तन्मनःसंयोगस्यापि हेतुत्वान्न तदापत्तिः मैत्रीयमनःसंयोगस्य चैत्रशरीरेऽसत्त्वादिति वाच्यम् । यतो ज्ञानत्वावच्छिन्नोत्पत्तौ चैत्रीयमनोयोगरूपविशेषसामग्रीसमवहितशरीराद्यात्मकसामान्यसामग्र्या अपि नियामकत्वात् तस्याश्च तदानीं चैत्रशरीरे सत्त्वादुक्तापत्तिर्दुर्वारैव, तस्मात्तत्पुरुषीयचक्षुर्विषयसंयोगादेर्जन्यतावच्छेदककोटौ चाक्षुषाद्यंशे तत्तदात्मसमवेतत्ववत्तच्छरीरावच्छिन्नत्वमपि निवेश्यं तथाच शरीरहेतुत्वं निर्युक्तिकम् ।

अथ चक्षुःसंयोगजन्यतावच्छेदककोटौ तत्तदात्मसमवेतत्ववत्तच्छरीरावच्छिन्नत्वनिवेशे आत्मभेदेन शरीरभेदेन च तद्धेतुतावाहुल्यमिति अविशेषितचक्षुःसंयोगत्वादिनैव हेतुता कल्प्यते, यथा च विषयनिष्ठविषयतासमवाययोः कार्यकारणप्रत्यासत्तित्वं तथात्मनिष्ठसमवायस्वजनका-

दृष्टसमवाययोः शरीरनिष्ठावच्छेदकत्वस्वजनकादृष्टावच्छेदकत्वयोरपि तथात्वमुपेयते अतो नातिप्रसङ्ग इति चेत् ।

तथापि शरीरहेतुत्वमकिञ्चित्करमेव शरीरभिन्ने स्वजनकादृष्टावच्छेदकत्वसम्बन्धेन तादृशकारणविरहादेवातिप्रसङ्गनिरासात् ।

यदि च स्वजनकादृष्टावच्छेदकत्वस्य जनकताघटितत्वेन अतिगुरुशरीरतया तदुपेक्ष्य स्वसमवायिसंयुक्तमनःसंयोगसम्बन्धेनव चक्षुःसंयोगादेर्हेतुता स्वीक्रियते, तदापि शरीरस्य स्वतन्त्रहेतुताकल्पनमपेक्ष्य शरीरमनोयोगवृत्तिजातिविशेषं स्वीकृत्य तेन रूपेण तस्य सम्बन्धता स्वीकरणीया, तादृशसंयोगस्य शरीरभिन्नेऽसत्त्वान्नातिप्रसङ्गः । न च तादृशसंयोगस्य शरीर इव मनस्यपि सत्त्वात्तत्रावच्छेदकतया ज्ञानापत्तिर्दुर्वारैव इति शरीरहेतुताकल्पनमावश्यकमिति वाच्यम् । शरीरत्वात्मकोपाधिपुरस्कारेण शरीरहेतुताकल्पनमपेक्ष्य तादृशापत्तिवारणाय संयोगसम्बन्धेन मनस्त्वजात्यवच्छिन्नस्यैवावच्छेदकत्वसम्बन्धेन ज्ञानं प्रति हेतुतायाः कल्पयितुमुचितत्वादिति ।

यत्तु अवच्छेदकतासम्बन्धेन ज्ञानं प्रति तादात्म्यसम्बन्धेन शरीरस्य हेतुत्वे महाशरीरनाशकालोत्पन्नज्ञानस्यापि महाशरीरमवच्छेदकं स्यात् तादृशज्ञानाव्यवहितप्राक्काले तत्र मनःसंयोगसत्त्वेन निरुक्तपरम्परासम्बन्धेन चक्षुःसंयोगादेः सत्त्वात् । न चेष्टापत्तिः, भिन्नकालीनयोराधाराधेभावस्येवावच्छेद्यावच्छेदकभावस्याप्यनुभवविरुद्धत्वात् इति कार्यसहभावेन तादृशशरीरहेतुत्वमावश्यकमिति ।

तदसत्, संयोगसम्बन्धेन मनसः कार्यसहभावेन हेतुतयव तादृशापत्तिवारणसम्भवात् । न च कार्याधिकरणक्षणावच्छेदेन शरीरमनःसंयोगनाशोत्पत्तिक्षणेऽपि ज्ञानोत्पत्त्या संयोगेन मनसः तादृशहेतुत्वं न सम्भवतीति वाच्यम् । तदा ज्ञानोत्पत्तेरेवाप्रामाणिकत्वादिति समासः ।

* इति शरीरकारणतावाद (३२) वीचिः ॥ *

---

अथ महामहोपाध्यायहरिरामभट्टाचार्यविरचितः

## काशीमरणकारणतावाद (३३) वीचिः ।

काशीमरणं मोक्षकारणं तत्त्वज्ञानद्वारा इति सिद्धान्तः ।

अत्राक्षिपन्ति-काशीमरणस्य साक्षादेव मुक्तिहेतुत्वे किं तत्त्वज्ञानेन । न च

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

इतिश्रुत्या तत्त्वज्ञानस्य मोक्षत्वावच्छिन्नं प्रति हेतुत्वे सिद्धे तत्रापि तत्त्वज्ञानं कल्पनीयमिति वाच्यम्। यथा "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादौ स्वर्गत्वसामानाधिकरण्येन यागजन्यत्वं प्रतीयते, तथा तादृशश्रुत्यापि मोक्षत्वसामानाधिकरण्येन तत्त्वज्ञानजन्यत्वप्रत्यायनात्। न च काशीमरणस्य मोक्षविशेषकारणत्वे कारणवैशिष्ट्यमेव कार्यतावच्छेदकं वाच्यम्, तत्त्वज्ञानस्यापि मोक्षविशेषे तदेव कार्यतावच्छेदकमिति गौरवात् तत्त्वज्ञानस्य मोक्षसामान्ये काशीमरणस्य विजातीयतत्त्वज्ञाने श्रवणादीनां विजातीयतत्त्वज्ञाने हेतुत्वकल्पनमुचितमिति वाच्यम्। तत्त्वज्ञानगतजातेरप्रामाणिकत्वेन कारणविशिष्टत्वमेव कार्यतावच्छेदकं भवद्भिरपि वाच्यम्, एवञ्च मयापि तदेव कार्यतावच्छेदकं मोक्षेऽपि काशीमरणस्य वाच्यम् इत्युक्तानाः।

तन्न, कार्यतावच्छेदकग्राहकप्रमाणमेव शरीरलाघवसहकृतं तत्त्वज्ञानगतजातिं साधयति इति सैव काशीमरणजन्यतावच्छेदिका, विशिष्टत्वस्य बहुतरपदार्थघटितत्वेनातिगुरुत्वात्। न च मयापि विजातीयदुःखध्वंसत्वमेव जन्यतावच्छेदकं वाच्यं न विशिष्टत्वमिति वाच्यम्। विजातीयदुःखध्वंसत्वापेक्षया तत्त्वज्ञानगतवैजात्यस्य लघुत्वात् दुःखनिष्ठवैजात्ये साङ्कर्याच्च, तथाहि–काशीमरणानाश्ये गोवधजन्यदुःखे गोवधजन्यतावच्छेदिका जातिर्वर्तते न तु तत्त्वज्ञाननाश्यतावच्छेदिका जातिः, तत्त्वज्ञाननाश्यब्रह्मवधजन्यदुःखे सा जातिर्वर्तते न तु गोवधजन्या जातिः, एकत्र तत्त्वज्ञाननाश्ये गोवधजन्यदुःखे द्वयोः समावेश इति सिद्धं काशीमरणस्य तत्त्वज्ञानद्वारा मोक्षहेतुत्वम्।

अथ काशीमरणत्वेन हेतुत्वमनुगतं तदा स्यात्, यदि मरणत्वं नाम किञ्चिदनुगतं स्यात्, तदेव न सम्भवति तथाहि—न तावत् शरीरात्मसंयोगनाशत्वं तत्, जीवति चैत्रे तथाविधकसंयोगनाशे चैत्रो मृत इति व्यवहारापत्तेः। न च विजातीयशरीरात्मसंयोगनाशत्वं तत् इति वाच्यम्। यतः क्रियाजन्यतावच्छेदकजातीनां क्रियाव्यक्तिभेदेन भेदात् तदाश्रयस्यान्तरापि नाशसम्भवात् उक्तप्रतीत्यापत्तिर्दुर्वारा। अत एव प्राणात्मसंयोगनाशत्वं तत् इत्यपि निरस्तम्। सत्यपि जीवने मृत इति व्यवहारापत्तेः। नापि प्राणशरीरसंयोगनाशत्वं तदिति, प्राणशरीरसंयोगनाशस्य काश्यवच्छिन्नस्य केन सम्बन्धेन कारणत्वम्? स्वाश्रयसंयोगसम्बन्धेन तु न सम्भवति, तेन सम्बन्धेन काश्यां मृत इव

तत्र जीवत्यात्मनि तस्य सत्त्वात् तत्रापि तत्त्वज्ञानापत्तेः, एकस्य क्रियया सकलविभौ संयोगसम्भवात् तस्य मरणपदार्थत्वे तादृशसंयोगस्यान्तरापि नाशसम्भवेन जीवति पुरुषेऽपि मृत इति व्यवहारापत्तेश्च। न च स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसम्बन्धेन प्राणशरीरसंयोगप्रागभाववदन्यतादृशसंयोगध्वंसो मरणम्, अन्तरा तादृशध्वंसासम्भवेन तादृशप्रतीत्यापत्तेरसम्भवादिति वाच्यम्। तथाविधध्वंसस्य स्वाश्रयसंयोगसम्बन्धेन हेतुत्वे पूर्वोक्तदोषापत्तितादवस्थ्यात् इति चेत्।

मैवम्, स्वाश्रयशरीरावच्छिन्नादृष्टवत्त्वसम्बन्धेन तादृशध्वंसस्य कारणत्वे न कोऽपि दोषः, काश्यधिकरणकस्य तथाविधध्वंसस्य स्वाश्रयशरीरावच्छिन्नादृष्टवत्त्वसम्बन्धेन तदात्मन्येव सत्त्वात् आत्मान्तरे चासत्त्वात् न तत्र तत्त्वज्ञानापत्तिः, जीवनकालीनस्य प्राणशरीरसंयोगनाशस्य तादृशोभयसम्बन्धेन प्राणशरीरसंयोगप्रागभाववदन्यत्वविरहादेवान्तरा मरणव्यवहारः॥

इति महामहोपाध्यायश्रीहरिरामभट्टाचार्यकृतः काशीमरण कारणतावाद ( ३३ ) वीचिः समाप्तः॥

---

अथ महामहोपाध्याय श्रीगदाधरभट्टाचार्यविरचितः

## अपेक्षाबुद्धिकारणतावाद (३४) वीचिः।

अपेक्षाबुद्धिशून्यकाले द्वित्वाद्यनुपलम्भात् अपेक्षाबुद्धेरेकत्वभिन्नसंख्याहेतुत्वं स्वीक्रियते, तत्र एकत्वान्यसंख्यात्वावच्छिन्नं प्रति अपेक्षाबुद्धित्वेन न हेतुता अपेक्षाबुद्धित्वस्यानुगतस्य दुर्वचत्वात्। तथाहि अपेक्षाबुद्धित्वं न जातिः, चाक्षुषत्वादिना सङ्करात्। नापि नानैकत्वावगाहिज्ञानत्वं तत्, एकत्वनिष्ठनानात्वस्य दुर्वत्वात्।

यच्च स्वभिन्नैकत्वविषयकत्वस्वविषयकत्वोभयसम्बन्धेन एकत्ववज्ज्ञानत्वेन हेतुता। विशेषणदलप्रवेशात् एकैकत्वमात्रावगाहिज्ञानान्न द्वित्वापत्तिः। एकैकत्वावगाहिज्ञानस्यापि स्वभिन्नएकत्वविषयकत्वसम्बन्धेन तादृशज्ञानाविषयैकत्ववत्त्वात् तस्मात् द्वित्वाद्यापत्तिवारणाय विशेष्यदलम्। स्वभिन्नत्वञ्च स्वसामानाधिकरण्यस्वनिरूपकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यस्वभेदवत्त्वम्, अतः स्वस्मिन्नपि व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्वभेदसत्त्वेपि नापत्तिः, प्रत्यासत्तिश्च स्वीयैकत्ववृत्तिप्रकारतानिरूपितविशेष्यता कारणस्य, कार्यस्य च समवायः,

अतो न एकद्रव्ये एकत्वावगाहिज्ञानात् अपरत्र द्रव्ये द्वित्वाद्युत्पत्तिप्रसङ्ग इति।

तदपि न, एवमपि एकत्वद्वयावगाहिज्ञानात् द्वित्वाद्यापत्तेः। एवमतीतपटाद्यंशे विद्यमानघटाद्यंशे च एकत्वप्रकारकज्ञानस्यापि तथात्वात् ततो विद्यमानघटे द्वित्वाद्यापत्तिः। न च कारणतावच्छेदकविशिष्टस्य पूर्वसत्ताया एव प्रकृते फलोपधानप्रयोजकतया तादृशज्ञानविषयीभूतैकत्वस्य तदानीमसत्त्वेन निरुक्तसम्बन्धेन एकत्वविशिष्टं ज्ञानं न तत्रास्तीति नापत्तिरिति वाच्यम्। एवमपि पटनाशकालीनात् 'तत्प्राक्क्षणोत्पन्नाद्वा नानैकत्वावगाहिनो विद्यमानघटकत्वावगाहिज्ञानात् घटे द्वित्वापत्तेर्वारयितुमशक्यत्वात् तदानीं उभयोरेकत्वयोरेव सत्त्वात् निरुक्तसम्बन्धेन एकत्वविशिष्टज्ञानस्य तदानीं सत्त्वात्। न च तदानीं तद्घटमात्रसमवेतं द्वित्वमापादयितुं न शक्यतेऽप्रसिद्धेः किन्तु घटपटोभयसमवेतं द्वित्वं, तत्र च पटस्यापि हेतुतया तदानीं च तस्यासत्त्वात् कथमापत्तिरिति वाच्यम्। तद्घटमात्रसमवेतद्वित्वत्वावच्छिन्नं घटपटोभयसमवेतद्वित्वत्वावच्छिन्नं वा नापाद्यते, किन्तु सामान्यसामग्रीवलात् द्वित्वत्वावच्छिन्नं, तादृशधर्मावच्छिन्नस्य च तत्पटादिरूपविशेषसामग्रीं विनापि सामान्यसामग्र्या जननात् तदसत्त्वस्याकिञ्चित्करत्वात्। न च तद्घटादिवृत्त्येकत्वान्यसंख्यात्वावच्छिन्नं प्रति तद्घटादिविशेष्यकैकत्वप्रकारकज्ञानत्वेन विशिष्यैव हेतुता, तत्तद्घटादिसमवेतत्वावच्छिन्नं प्रति तत्तद्घटत्वादिनापि हेतुता, एकमात्रविशेष्यकैकत्वप्रकारकज्ञानकाले न तत्र द्वित्वाद्यापत्तिः, घटान्तरविशेष्यकतादृशज्ञानानाञ्च तद्घटादिसहकृतानां तत्र विशेषसामग्रीत्वाभ्युपगमात् इति वाच्यम्। तथासति अयमेक इत्याकारकज्ञानद्वयादपि द्वित्वोत्पादप्रसङ्गात, नानैकत्वादिज्ञानस्यैवापेक्षाबुद्धितया तत्र तथाविधज्ञानाभावेन द्वित्वानुत्पादात् इष्टापत्तेरसम्भवात्।

अत्रोच्यते–तद्घटपटोभयसमवेतद्वित्वत्वावच्छिन्नं प्रति तद्घटपटोभयविशेष्यकैकत्वप्रकारकज्ञानत्वेन हेतुता, एवं त्रित्वादिस्थलेऽपि। एवं तद्घटसमवेतद्वित्वत्वावच्छिन्नं प्रति तद्घटत्वादिनापि हेतुता, अतो न तद्घटनाशकालीनतद्घटपटोभयविशेष्यकज्ञानात् पटे द्वित्वापत्तिः तद्घटपटविशेष्यकापेक्षाबुद्ध्या द्वित्वजनने तद्घटपटयोः विशेषसामग्रीत्वात्। एवमनयोरेकत्वमित्याकारकात् एकत्वविशेष्यकज्ञानादपि द्वित्वाद्युत्पादात् तादृशज्ञानस्यापि हेतुता कल्पनीया, द्वित्वत्वादिव्याप्यजातिविशेषाणां जन्यतावच्छेदकत्वाभ्युपगमात् न व्यभिचारः। न चोभयविधा-

पेक्षाबुद्ध्योः तद्घटपटोभयविषयित्वावच्छिन्नैकत्वविषयिताशालिज्ञानत्वेनैव हेतुता आस्तां किं पृथक् हेतुतया इति वाच्यम् । तथा सति एकत्वनिरूपिताधेयत्वसम्बन्धेन एकत्वप्रकारकात् एकत्वे इमावित्याकारकज्ञानादपि द्वित्वापत्तेः । एकत्वाधिकरणत्वावगाहिज्ञानत्वेनानुगमे घटपटोभयनिरूपिताधेयत्वावगाहित्वेनापि अनुगमापत्तौ कार्यकारणभावद्वयापत्तेः, अवच्छेदकगौरवञ्च, एतदपेक्षया पृथक्कारणत्वमेव लघु ।

एवमपेक्षाबुद्धिनाशोत्तरं द्वित्वादेरनुपलम्भात् अपेक्षाबुद्धिनाशस्य द्वित्वादिनाशकताभ्युपेयते, तस्य नाशत्वेनैव हेतुत्वं, स्वप्रतियोग्यपेक्षाबुद्धिजन्यत्वं कारणतावच्छेदकसंसर्गः, प्रतियोगित्वं च कार्यतावच्छेदकसम्बन्धः । कार्यतावच्छेदकञ्च संख्यानाशत्वम् एकत्वान्यसंख्यानाशत्वं वा, कारणनियमादेवान्यस्मात् नाशवारणसम्भवात् । अत एव अपेक्षाबुद्ध्यादेः त्रिक्षणावस्थायित्वमुपेयते, अन्यथा तृतीयक्षणे तस्य नाशे चतुर्थक्षणे द्वित्वनाशात् द्वे द्रव्ये इति लौकिकद्वित्वत्वविशिष्टबोधो न जायेत, तथाहि—अपेक्षाबुद्धिद्वितीयक्षणे द्वित्वोत्पत्तौ तृतीयक्षणे द्वित्वद्वित्वत्वनिर्विकल्पकं ततश्चतुर्थक्षणे द्वित्वत्वविशिष्टबुद्धौ सत्यां पञ्चमक्षण एव तादृशविशिष्टवैशिष्ट्यबुद्धिर्भविष्यति, सा च न भवितुमर्हति कार्याव्यवहितप्राक्काले द्वित्वरूपविषयाभावात् विषयस्य च लौकिकप्रत्यक्षहेतुत्वात् , अपेक्षाबुद्धेः चतुर्थक्षणे विनाशे च पञ्चमक्षणे द्वित्वस्य नाशे तादृशविशिष्टवैशिष्ट्यबोधः सूपपाद एव ।

वस्तुतस्तु अपेक्षाबुद्धिनाशस्य स्वप्रतियोगिजन्यत्वसम्बन्धेन द्वित्वनाशकता नाभ्युपेयते, किन्तु द्वित्वनाशं प्रति स्वप्रतियोग्यधिकरणसमयप्रागभाववत्त्वसम्बन्धेन नाशत्वेनैव हेतुत्वं स्वीक्रियते, प्रागभाववत्त्वं च कालिकविशेषणतया, एतादृशकारणतावच्छेदकप्रत्यासत्त्या स्वतृतीयक्षणोत्पन्नस्य यस्य कस्यचिन्नाश एव द्वित्वे वर्तते तत एव चतुर्थक्षणे तन्नाशः । एवञ्चापेक्षाबुद्धेः स्वोत्पत्तितृतीयक्षणे विनाशेऽपि न क्षतिः । तथा सत्यपि स्वोत्पत्तिचतुर्थक्षण एव द्वित्वनाशेन द्वे द्रव्ये इत्येतादृशविशिष्टवैशिष्ट्यबुद्ध्यनुपपत्त्यसंभवात् । नच यत्र द्वित्वोत्पत्तिद्वितीयक्षणे आश्रयविनाशात् तृतीयक्षण एव द्वित्वनाशः तत्र व्यभिचारवारणाय स्वाश्रयनाशाजन्यत्वस्य कार्यतावच्छेदकत्वे गौरवम्, अपेक्षाबुद्धिनाशस्य हेतुत्वे च तादृशद्वित्वोत्पादकापेक्षाबुद्धेः तृतीयक्षण एव नाशाभ्युपगमात् न व्यभिचार इति वाच्यम् । भवन्मते सर्वासामपेक्षाबुद्धीनां ज्ञानान्तरादिना तृतीयक्षणे विनाशवारणाय तत्र सामग्र्यन्तरकल्पने गौरवात्(१) । न च



(१) द्वित्वनिर्विकल्पकसामग्र्याः अपेक्षाबुद्धिनाशप्रतिबन्धकत्वोपगमादेव न

स्वोत्तरोत्पन्नस्वसमानाधिकरणगुणस्यैव योग्यविभुविशेषगुणनाशकतया ऽपेक्षाबुद्धिद्वितीयक्षणे च तदधिकरणआत्मनि विशेषगुणानुत्पादात् नापेक्षाबुद्धेः तृतीयक्षणे नाशापत्तिरिति वाच्यम् । अपेक्षाबुद्धिद्वितीयक्षणे हि संस्कारादिविशेषगुणोत्पादे बाधकाभावः, प्रतिबन्धकादिकल्पने गौरवात् । न च विभुसमवेतविशेषगुणनाशत्वावच्छिन्नं प्रति स्वोत्तरोत्पन्नविभुविशेषगुणत्वेनानुगतरूपेण हेतुत्वं न सम्भवति स्वत्वाननुगमात्, किन्तु तत्तद्गुणनाशत्वावच्छिन्नं प्रति तत्तद्गुणत्वेन हेतुत्वम्, तथाच अपेक्षाबुद्धिनाशस्थले तृतीयक्षणोत्पन्नानामेव गुणानां हेतुत्वं कल्पनीयमिति न तृतीयक्षणे तन्नाशापत्तिरिति वाच्यम् । नाशत्वावच्छिन्नं प्रति स्वप्रतियोगिसत्त्वस्वपूर्वत्वैतदुभयसम्बन्धेन नाशत्वेनैवानुगतेन हेतुतायाः सम्भवात्, एतदनुरोधेन तत्तद्व्यक्तित्वेन हेतुत्वे च महागौरवात् ।

अत्राहुर्मीमांसकाः—यावद्द्रव्ये नित्यमेकमेव द्वित्वादिकमभ्युपेयते । न च यावद्द्रव्ये एकद्वित्वाऽभ्युपगमे यावन्तो द्वावित्यादिप्रत्ययानां प्रमात्वप्रसङ्गः, प्रतिद्विकं प्रतित्रिकं द्वित्वत्रित्वादीनां भेदे तु व्यासज्यवृत्तिधर्मावच्छिन्नविशेष्यताकबुद्धौ विशेष्यतावच्छेदकावच्छेदेनैव विधेयभानस्य व्युत्पत्तिसिद्धत्वात् यावत्त्वावच्छेदेन कस्यापि द्वित्वस्यासत्वात् तादृशप्रत्ययानां न प्रमात्वापत्तिरिति वाच्यम् । द्वित्वादीनामभेदेऽपि प्रतिद्विकं प्रतित्रिकं तत्पर्याप्तीनां भेदात् यावत्त्वाद्यवच्छिन्नोद्देश्यताकद्वित्वादिबुद्धौ यावत्त्वादिव्यापकीभूतपर्याप्तेरेव सम्बन्धतया द्वित्वादिपर्याप्तेश्च यावत्त्वाऽव्यापकतया तादृशप्रत्ययानां भ्रमत्वोपपत्तिः । न च एतन्मते द्वित्वादीनां नित्यानेकसमवेतत्वरूपजातिलक्षणाक्रान्ततया जातिव्यवहारापत्तिरिति वाच्यम् । असमवायित्वे सति तादृशसमवेतत्वस्याऽऽकृतिव्यंग्यत्वस्य वा जातिव्यवहारनियामकत्वाभ्युपगमात् । यदि च संयोगादिवत् द्वित्वादीनामपि उत्पत्तिविनाशप्रत्ययोऽनुभवसिद्धः, तदा प्रतिद्विकं प्रतित्रिकं भिन्नभिन्नमेवाश्रयोत्पत्तिद्वितीयक्षणोत्पत्तिकमाश्रयनाशनाश्यमेकैकमेव द्वित्वत्रित्वादिकमस्तु, तेषामपेक्षाबुद्धिजन्यत्वे तन्नाशनाश्यत्वे वा मानाभावः, अपेक्षाबुद्धिसमसंख्यकनानाद्वित्वादिकल्पनेऽपेक्षाबुद्धितन्नाशयोः तदुत्पत्तिविनाशहेतुत्वे महागौरवात् । न च मीमांसकमते आश्रयोत्पत्तिद्वितीयक्षणे द्वित्वाद्युत्पत्तिस्वीकारे अपेक्षाबुद्धिशून्यकालेऽपि तत्साक्षात्कारप्रसङ्ग इति वाच्यम् । अपेक्षाबुद्धेः द्वित्वादिसाक्षात्कारहेतुत्वोपग-

तृतीयक्षणे नाशसम्भव इति नव्याः । अत एव संख्याग्रन्थे द्वित्वनिर्विकल्पकसामग्र्याः प्रतिबन्धकत्वस्यावश्यकत्वे लाघवात् द्वित्वप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वस्य स्वीकारात् द्वित्वप्रत्यक्षसन्तानोऽपि सूपपन्न इति दीधितिकार एव विवेचयिष्यति ।

मात्, भवन्मतेऽपि एकपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादीनामपेक्षाबुद्धिशून्ये पुरुषान्तरे प्रत्यक्षवारणाय विषयतया तत्पुरुषीयैकत्वान्यसंख्याप्रत्यक्षत्वावच्छिन्नं प्रति तत्पुरुषीयापेक्षाबुद्धिजन्यसंख्यात्वेन समवायेन तत्पुरुषीयापेक्षाबुद्धिजन्यसंख्यायाः तादात्म्यसम्बन्धेन वा हेतुत्वकल्पनाया आवश्यकत्वात्।

एतेनापेक्षाबुद्धेः व्यञ्जकत्वे चक्षुःसंयुक्तसमवायरूपसामान्यसामग्रीबलात् व्यञ्जकशून्यदशायामपि द्रव्यसमवेतचाक्षुषापत्तिः, अपेक्षाबुद्धिरूपविशेषसामग्रीं विनापि सामान्यसामग्रीबलात् द्रव्यसमवेतचाक्षुषोदयेन तादृशविशेषसामग्रीविरहस्याकिञ्चित्करत्वात् अपेक्षाबुद्धेः उत्पादकत्वमेव सम्यक् इति निरस्तम्।

उत्पादकत्वमतेऽपि एकपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादीनां सामान्यसामग्रीबलात् प्रत्यक्षप्रसङ्गात्।

अथास्मन्मते तत्पुरुषीयैकत्वान्यसंख्याप्रत्यक्षं प्रति तत्पुरुषीयापेक्षाबुद्धिजन्यसंख्यात्वेन हेतुत्वं न स्वीक्रियते, तादृशविशेषसामग्रीं विना रूपादिषु सामान्यधर्मावच्छिन्नस्य सामान्यसामग्र्या उत्पादेन द्वित्वादावपि तदापत्तिः स्यात्, किन्तु तत्पुरुषीयप्रत्यक्षं प्रति तदन्यपुरुषीयापेक्षाबुद्धिजन्यसंख्यात्वेन प्रतिबन्धकता कल्प्यते, तादृशप्रतिबन्धकाभावरूपविशेषसामग्रीविनिर्मोकेण तत्पुरुषीयचक्षुःसंयुक्तसमवायादिघटितसामान्यसामग्र्या कुत्रापि फलाजननात् नापत्तिरिति चेत्।

न, मन्मतेऽपि द्वित्वादिप्रत्यक्षेऽपेक्षाबुद्धेरिव रूपादिप्रत्यक्षे तादात्म्येन रूपादीनामपि विशेषसामग्रीत्वात् तावदन्यतमसहकारेण च सामान्यसामग्र्या फलजननात् नापत्तिः। न च रूपादिप्रत्यक्षे रूपादीनां विशेषसामग्रीत्वकल्पनमधिकमिति वाच्यम्। तदकल्पने व्यञ्जकशून्यकालेऽपि सामान्यसामग्रीबलात् ब्राह्मणत्वप्रत्यक्षापत्तिवारणाय तत्कल्पनाया आवश्यकत्वात्।

अथ सामान्यतः एकत्वान्यसंख्याप्रत्यक्षं प्रति अपेक्षाबुद्धित्वेन हेतुता न सम्भवति, अपेक्षाबुद्धित्वस्यानुगतस्य दुर्वचत्वात् घटादिविषयकापेक्षाबुद्धिदशायां पटादिवृत्तिद्वित्वादीनां प्रत्यक्षत्वप्रसङ्गाच्च। एकत्वान्यसंख्यावृत्तिविषयतासम्बन्धेन प्रत्यक्षं प्रति स्वीयकत्वप्रकारतानिरूपितविशेष्यताश्रयवृत्तित्वसम्बन्धेनापेक्षाबुद्धेर्हेतुता अतो नकविशेष्यकापेक्षाबुद्धितोऽन्यविशेष्यकसंख्याप्रत्यक्षप्रसङ्ग इति वाच्यम्। एवमपि घटपटविशेष्यकापेक्षाबुद्धिदशायां घटकुड्यादिवृत्तिद्वित्वादिप्रत्यक्षस्य वारयितुमशक्यत्वात्। न च स्वीयकत्वप्रकारतानिरूपितविशेष्यत्वाभाव

वृत्तित्वसम्बन्धेनापेक्षाबुद्धेः हेतुत्वान्नैव दोषः घटपटविषयकापेक्षाबुद्धेः तादृशसम्बन्धेन घटकुड्यादिवृत्तिद्वित्वादावसत्त्वात्, एवञ्चापेक्षाबुद्धेः ज्ञानत्वेनैव हेतुता, एकत्वाविषयकज्ञानस्य एकैकत्वमात्रावगाहिज्ञानस्य च एकत्वप्रकारतानिरूपितविशेष्यत्वाभाववति द्वित्वादीनां वृत्तेः तादृशज्ञानात्‌ना द्वित्वादिप्रत्यक्षापत्त्यसम्भवादिति वाच्यम्। एकत्वप्रकारतानिरूपिततघटनिष्ठविशेष्यत्वाभाववति पटे पटनिष्ठतादृशविशेष्यत्वाभाववति घटे तदुभयवृत्तिद्वित्वस्य सत्त्वात् तादृशद्वित्वे स्वीयैकत्वप्रकारतानिरूपितविशेष्यत्वाभाववृत्तित्वसम्बन्धेनापेक्षाबुद्धेरसत्त्वात्, एकत्वप्रकारतानिरूपितविशेष्यतात्वावच्छिन्नप्रतियोगिताकाभावस्य ज्ञानान्तरीयतादृशविशेष्यत्ववति कुड्यादावसत्त्वेन निवेशयितुमशक्यत्वात् तज्ज्ञानीयतादृशविशेष्यतात्वावच्छिन्नप्रतियोगिताकाभावस्य चाननुगमात्, तस्मात् एतद्घटपटोभयवृत्तिद्वित्वविषयकप्रत्यक्षत्वावच्छिन्नं प्रति एतद्घटपटोभयविशेष्यकैकत्वप्रकारकज्ञानत्वेन हेतुता वाच्या, तत्र द्वित्वविषयकत्वप्रत्यक्षत्वयोः विशेष्यविशेषणभावे विनिगमनाविरहेणानन्तविषयभेदेन भिन्नानां कार्यकारणभावानां द्वैगुण्यम्, मन्मते च तादृशद्वित्वत्वादिकमेव कार्यतावच्छेदकम्, प्रत्यक्षस्थले च तत्पुरुषीयैकत्वान्यसंख्याप्रत्यक्षत्वावच्छिन्नं प्रति तत्पुरुषीयतादृशज्ञानजन्यसंख्यात्वेन हेतुत्वं, तत्पुरुषीयप्रत्यक्षं प्रति तदन्यपुरुषीयापेक्षाबुद्धिजन्यद्वित्वत्वेनैव वा प्रतिबन्धकत्वं तद्भेदः कारणमिति घटपटादिकं द्वित्वादिकमपि विशिष्यानिवेश्य पुरुषभेदेन कार्यकारणभावकल्पनम्। तदपेक्षया भवन्मते कार्यकारणभावकल्पनाधिक्यं स्फुटमेव इति चेत्।

न, लौकिकविषयतासम्बन्धेन तादृशद्वित्वस्यैव कार्यतावच्छेदकत्वाभ्युपगमेन उक्तविनिगमनाविरहासंभवात्। न च लौकिकविषयतासम्बन्धेन द्वित्वस्य ईश्वरज्ञानसाधारणत्वात् जन्यप्रत्यक्षत्वस्य निवेश आवश्यक इति अस्यैव विशेष्यविशेषणभावे विनिगमनाविरह इति वाच्यम्। नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे क्षतिविरहात् जन्यप्रत्यक्षत्वस्यानिवेशात्। अपेक्षाबुद्धिव्यञ्जकतावादिनां मीमांसकानां मते ईश्वराभावेन तन्मते नित्यसाधारण्याभावाच्च। एवं भवन्मते एतद्घटपटोभयसमवेतत्वद्वित्वत्वयोः विशेष्यविशेषणभावे विनिगमनाविरहः, मन्मते एतद्घटपटयोः नानाद्वित्वाभावेन एतद्द्वित्वविषयकप्रत्यक्षत्वस्य तादृशविजातीयप्रत्यक्षत्वस्य वा जन्यतावच्छेदकत्वेनैवोपपत्तौ एतद्घटपटसमवेतत्वस्यानिवेशात् द्वित्वत्वेन सह तस्य विनिगमनाविरहाप्रसक्तेः। एवं तत्पुरुषीयैकत्वान्यसंख्याप्रत्यक्षं प्रति तत्पुरुषीयज्ञानजन्यसंख्या-

त्वेन हेतुत्वेऽपि पुरुषान्तरीयापेक्षाबुद्धिजन्यद्वित्वादेः पुरुषान्तरेण ग्रहण-प्रसङ्गो दुर्वारः, पुरुषान्तरीयापेक्षाबुद्धेः अपेक्षाबुद्धित्वेन पुरुषान्तरीया-पेक्षाबुद्धिजन्यद्वित्वादिजनकत्वात्, फलोपहितजन्यतायाः प्रत्यासत्तित्वे-चाननुगमात् इति संक्षेपः ॥

इतिमहामहोपाध्यायश्रीगदाधरभट्टाचार्यविरचितः अपेक्षा-बुद्धिकारणतावाद (३४) वीचिः समाप्तः ।

## अथ स्वत्वजनकतावाद(३५)वीचिः ॥

ननु पित्रादिमरणोत्तरं सर्वेष्वेव पित्रादिधनेषु सर्वभागिनां स्व-त्वमुत्पद्यते, किं वा गुटिकापातादिना वस्तुगत्या यस्य योंऽशो निर्णीतो भविष्यति तत्रैवांशे स्वत्वमुत्पद्यते इति चेत् ।

अत्र सामुदायिकस्वत्ववादिनो मैथिलाः । पित्रादेर्मरणोत्तरं सर्वेष्वेव पित्रादिधनेषु सर्वभागिनिरूपितं स्वत्वं प्रथमतो जायते, पश्चाद्विभागेन तत्र सामुदायिकस्वत्वं विनाश्य स्वीयांशमात्रवृत्तिस्वत्वान्तराण्युत्पद्य-न्ते । विभागो नाम पित्रादिधनेषु भागिनामिदमेव मम तत्तस्यैव, तस्य इदं न इत्यादिनिश्चयविशेषः । भागिनामित्युपादानं मध्यस्थेन निर्णीते-पि भागिभिरनिर्णीते दाये विभक्तव्यवहारवारणाय । विशेषपदोपादाना-देव कालान्तरीयताद्दृशनिश्चये नातिप्रसङ्गः । विशेषत्वञ्च मानसत्वव्या-प्यो जातिविशेषः उपपाधिविशेषो वा इत्यन्यदेतत् । स च सामुदा-यिकस्वत्वनाशकतावच्छेदकतया आंशिकस्वत्वान्तरजनकतावच्छेदकतया च सिद्धः । तदवच्छिन्नोत्पत्तिनियामकश्च तदवच्छिन्नेतरज्ञानसामग्र्य-भावः, स च फलबलकल्प्यः, यत्र कारणं विना नोत्पत्तिः तत्र सामग्री-त्वस्य प्रतिबन्धकतानवच्छेदकत्वेऽप्यत्र साधकाभावात् अनायत्या तत्र तत्कल्पनात् । न च प्रथमं सामुदायिकैकस्वत्वोत्पत्त्यभ्युपगमे सर्वेषां ताद्दृशनिश्चयरूपस्य विभागस्य भ्रमत्वापत्तिरिति वाच्यम् । पितुर्मरणो-त्तरं सामुदायिकैकस्वत्वोत्पादेऽपि पितृमरणपूर्वं ताद्दृशस्वत्वाभावसत्वेन पाकरक्तघटे श्याम इति बुद्धिवत् प्रथमं सामुदायिकैकस्वत्वोत्पादेऽपि ताद्दृशनिश्चयात्मकविभागेन पश्चात्नाशात् भाविरक्तघटे रक्त इति बुद्धि-वच्च भ्रमत्वविरहात् । न चैकदासीवृषादिमात्रस्य पैतृकस्वत्वस्थले नानाद्रव्याभावेन ताद्दृशनिश्चयासम्भवात् विभागो न स्यादिति वाच्य-म् । अत्रापि इदानीमेव ममेदं न तु तदानीं, तदानीमेवेदं तस्य नत्वि-

दानमिति निश्चयविशेषस्य विभागत्वात् । तत्र क्वचित् स्वत्वस्य क्वचिच्च स्वत्वनिष्ठतत्तत्पुरुषनिरूपितत्वस्य कालिकाव्याप्यवृत्तित्वाभ्युपगमात् । अत एव बृहस्पतिः—

एकां स्त्रीं कारयेत्कर्म यथा स्वांशेन वै गृहे ।
उत्सृज्य कूपवाप्यस्तदनुसारेण गृह्यते ॥

उत्सृज्येत्यस्य, यत्रैकमेव कूपवाप्यादिकं पैतृकं तत्रेत्यादिः । न च तदीयस्वत्वं प्रति तदितरनिरूपितस्वत्वस्य कार्यसहभावेन प्रतिबन्धकतया कथं सर्वेषु पित्रादिधनेषु सर्वभागिनामेकं स्वत्वमुत्पद्यते इति वाच्यम् । तदीयस्वत्वं प्रति तदनिरूपितत्वस्वत्वेनैव कार्यसहभावेन प्रतिबन्धकतया सर्वभागिनिरूपितैकस्वत्वोत्पत्तौ विरोधाभावात् । अन्यथा यच्चवधनं, तन्ममधनं यन्मम तत्तव इति नियमार्थकसंसृष्टिस्थले सर्वेषां सर्वधनगताविलक्षणैकस्वत्वोत्पादस्य एकदासदासीगवादिमात्रस्य पैतृकत्वस्थले एकस्यामेव दासादिव्यक्तौ नानाभ्रातृनिरूपितैकस्वत्वस्य गौडमैथिलोभयसम्मतस्यानुपपत्तेः । क्रयादिस्थले उत्पन्नपुनरुत्पादे क्रमिकस्वत्वोत्पादयोर्वारणाय सामान्यतः स्वत्वत्वावच्छिन्नं प्रति स्वत्वत्वेनैव पूर्ववर्त्तितामात्रेण प्रतिबन्धकत्वस्यावश्यकतया तदीयस्वत्वं प्रति तदितरनिरूपितस्वत्वत्वेन वा कार्यसहभावेन प्रतिबन्धकत्वे मानाभावाच्च । तादृशप्रतिबध्यप्रतिबन्धकभावानभ्युपगमे पितृमरणोत्तरं पुत्रविक्रीयमाणे धने क्रेतुः स्वत्वोत्पत्तिसंभवात् पुत्रस्यापि स्वत्वोत्पादप्रसङ्गादेर्मरणादिजन्यपित्रादिस्वत्वनाशस्य उत्पत्तिसम्बन्धेन हेतुताभ्युपगमादेव निरासस्सम्भवात् । स च पितृमरणादेः स्वत्वप्रयोजकताविचारे प्रपञ्चितः । न च पित्रादिमरणोत्तरं सर्वेष्वेव पित्रादिधनेषु सर्वभागिनिरूपितैकस्वत्वाभ्युपगमेन तन्मरणवत् स्वत्वनाशत्वेन हेतुहेतुमद्भावात् विभागात्पूर्वमेकस्य मरणे सर्वेषामेव स्वत्वनाशात् जीवद्व्यक्तीनां पुनः स्वत्वोत्पादः कथं स्यात् उत्पादकाभावात् मरणादिजन्यपित्रादिस्वत्वनाशस्योत्पत्तिसम्बन्धेनैव पुत्रादिस्वत्वोत्पादकत्वादिति वाच्यम् । यत्र विनाशात्पूर्वमेकस्य मरणं तत्र तस्य सर्वधनगतपृथक्स्वत्वाभ्युपगमात् तदन्येषामेव सर्वेषां सर्वधनगतमेकं स्वत्वम्, एवं विभागात्पूर्वमेकेन विभागोत्तरं योऽशः केवलं मम भविष्यति सोंऽशो न मम किन्त्वस्येत्यादिसङ्कल्पविशेषात्मकदानविक्रयादि क्रियते तत्रापि तस्य सर्वधनगतं पृथगेव स्वत्वम्, तेन तादृशैकभागिकृतदानादितोऽन्येषां स्वत्वनाशः । एवं संसृष्टधने या एका एव मुद्रा पैतृकी तत्र बोध्यम्, तत्राप्यसत्येव बाधके सर्वधनगतैकस्वत्ववत् एकस्यामेव मुद्रायां सर्वभ्रातृनिरूपितैकस्वत्वस्य गौडमैथिलादिसकलसम्मत-

त्वात् । न च तथापि पित्रादिमरणोत्तरं सर्वेष्वेव धनेषु सर्वभागिनां स्वत्वाभ्युपगमे विभागात्पूर्वमेकेन विक्रये दाने वा कृते इतरस्वत्वस्थले क्रेतृप्रतिग्रहीत्रोः कथं स्वत्वोत्पत्तिः, कथं वा विभागात्पूर्वं पुत्रवतोमरणे तत्स्वत्वस्थले पुत्रस्य स्वत्वोत्पत्तिः स्वत्ववति स्वत्वान्तरानुत्पत्त्या भागान्तरस्वत्वावरुद्धत्वेन स्वत्वान्तरोत्पादासम्भवात् । एकस्य विक्रयदानमरणादित एव सर्वेषां स्वत्वनाशाभ्युपगमे पुनर्भागान्तराणां स्वत्वोत्पादानुपपत्तेः उत्पादकाभावात् गौरवप्रसङ्गाच्चेति वाच्यम् । तत्र जीवतां भागिनां स्वत्वस्य विनष्टस्यापि कालिकाव्याप्यवृत्तित्वाभ्युपगमेन क्रयादिस्वत्वोत्पत्त्यव्यवहितक्षणावच्छेदेन धनेषु तद्विरहादव्यवहितपूर्वक्षणावच्छेदेन कार्योत्पत्त्यधिकरणे प्रतिबन्धकस्वत्वस्यैव कार्यानुत्पादप्रयोजकत्वात् । अन्यथा संसृष्टधनेषु सर्वभागिनां स्वत्वस्य यत्र एका एव मुद्रा पैतृकी तत्र एकस्यामेव मुद्रायां सर्वभ्रातॄणां स्वत्वस्य च गौडमैथिलादिसकलसम्मतत्वेन तत्रापि विभागात् पूर्वमेकस्य विक्रयादिना क्रेत्रादेः स्वत्वोत्पादासम्भवस्य दुःसमाधेयत्वापत्तेः, तत्रापि संसर्गान्तराणां पुत्रान्तराणाञ्च स्वत्वस्याविनष्टस्यापि कालिकाव्याप्यवृत्तित्वस्यैव गमकत्वात् ।

एतेन एकदासदासीवृषादिमात्रस्य पैतृकस्वत्वस्थले एकस्यामेव दासादिव्यक्तौ समयभेदेन नानाभ्रातृनिरूपितस्वत्वस्य गौडमैथिलादिसकलसम्मतत्वात् स्वत्वावच्छेदकीभूते समये एकेन विक्रये दानादौ वा कृते क्रेतृप्रतिग्रहीत्रादेः स्वत्वोत्पत्तिर्न स्यात्, स्वत्ववति स्वत्वान्तरानुत्पत्त्या भ्रात्रन्तरपुत्रस्वत्वोत्पादस्य वक्तुमशक्यत्वात्, स्वत्वावरुद्धत्वेन क्रेत्रादिस्वत्वोत्पादासम्भवादित्यपि निरस्तम् ।

भ्रात्रन्तरस्वत्वस्यापि कालिकाव्याप्यवृत्तितया तदानीं तत्रासत्त्वात् स्वत्वानवच्छेदकसमये विक्रयादौ कृते क्रेत्रादिस्वत्वानुत्पादस्येष्टत्वात् प्रतिबन्धकस्वत्वान्तरसत्त्वात् । नचैवं स्वत्वानवच्छेदकसमये पुत्रवतैकेन मृतेऽपि मरणजन्यस्वत्वनाशात् तत्पुत्रस्वत्वोत्पत्तिर्न स्यात् प्रतिबन्धकान्तरस्य च सत्त्वात् मरणादिजन्यपित्रादिस्वत्वनाशस्य उत्पत्तिसम्बन्धेनैव पुत्रादिस्वत्वहेतुतया कालान्तरे तत्पुत्रस्वत्वोत्पादस्य वक्तुमशक्यत्वादिति वाच्यम् । स्वत्वानवच्छेदकसमयोत्पत्तिकमरणेन तदानीं तत्र स्वत्वं न नाश्यते किन्तु भ्रात्रन्तरस्वत्वसमये उत्तीर्ण एव तत्स्वत्वं विनाश्य तत्पुत्रस्वत्वमुत्पद्यते तत्स्वत्वनाशं प्रति तन्मरणस्य स्वप्रतियोग्याश्रयनिरूपितस्वत्वसम्बन्धेन हेतुत्वात् तन्निरूपितत्वस्याव्याप्यवृत्तित्वाभ्युपगमेन तत्स्वत्वे तदानीं तन्निरूपितत्वात् । अस्तु वा

एकस्य दानविक्रयमरणादिजन्यस्वत्वनाशोत्पत्तिक्षणे भ्रात्रन्तराणां स्वमविनष्टमपि, तत्वेनावृत्तित्वस्य कालिकाऽव्याप्यवृत्तित्वात्, एवञ्च स्वत्वस्वानवच्छेदकसमये एकस्य विक्रयादिना क्रेत्रादिस्वत्वोत्पत्तौ वाधकाभाव इत्याहुः।

दायभागकृतस्तु मरणादिजन्यपित्रादिस्वत्वस्वनाशात् तद्धनेषु न सर्वभागिनां स्वत्वोत्पत्तिः, किन्तु गुटिकापातादिना वस्तुगत्या यो यस्यांशो निर्णीतो भविष्यति तत्रैवांशे तस्य स्वत्वमुत्पद्यते सामुदायिकस्वत्वान्तरतत्प्रागभावतद्ध्वंसतत्कार्यकारणभावानां निरुक्तविभागे तन्नाशकत्वस्य स्वत्वान्तरोत्पादकत्वस्य च कल्पने गौरवात्। न च तावतापि यत्र पितृमरणोत्तरं पितृधनानां भ्रातृविभागश्रवणं कृतं किन्तु विभागं विनैव सर्वेषां भ्रातॄणां मरणं सर्वैकवाक्यतया दानविक्रयादिकं वा पितृद्रव्यादीनां कृतं तत्रांशिकानां स्वत्वतद्ध्वंसतत्प्रागभावादीनां कल्पने गौरवमिति वाच्यम्। तावता तत्र सर्वेषां पितृमरणात्सामुदायिकैकस्वत्वाभ्युपगमेऽपि विभागोपगतधनस्थले पितृमरणात् सर्वेषां सामुदायिकैकस्वत्वाभ्युपगमात् तत्र विभागोत्तरमांशिकस्वत्वानामावश्यकत्वेन तत्कल्पने गौरवापाताभावाच्च। न च विभागोपगतधनस्थलेऽपि पितृमरणादिजन्यपितृस्वत्वनाशस्य कारणस्य सर्वधनेषु अविशिष्टतया सर्वत्र सर्वेषां स्वत्वोत्पादापत्तिर्दुर्वारैव इति वाच्यम्। तादृशस्थले तदीयस्वत्वं प्रति तदीयस्वत्वाभावविशिष्टस्य तदीयेतरस्वत्वस्य कार्यसहवर्त्तितया प्रतिबन्धकत्वेनान्यांशेऽन्यस्य स्वत्वानुत्पत्तेः संसृष्टस्य धनादौ यत्र विभागात्पूर्वमेकस्य दायिनो मरणं तत्र प्रागुक्तयुक्त्या मृतस्य पृथक्स्वत्वाभ्युपगमेन व्यभिचारापत्त्या तद्वारणाय विशिष्टान्तं स्वत्वविशेषणम्। सामुदायिकस्वत्वान्तरतत्प्रागभावतद्ध्वंसतत्कार्यकारणभावानां विभागस्य तन्नाशकत्वस्वत्वान्तरोत्पादकत्वयोश्च कल्पनामपेक्ष्य कतिपयतादृशप्रतिबध्यप्रतिबन्धकभावकल्पनाया एव लघुत्वात्। पूर्वमन्यांशे ममेदमिति प्रत्ययप्रतिबन्ध एव विभागप्रयोजनम्। न च तादृशप्रतिबध्यप्रतिबन्धकभावाभ्युपगमे पतिस्वत्वसत्त्वे तद्धने विवाहानन्तरं पत्न्याः स्वत्वोत्पत्तिः न स्यात् "दम्पत्योर्मध्यमं धनम्" इति वचनेन पत्युपार्जितधने पतिस्वत्वसत्त्वेऽपि विवाहानन्तरं पत्न्याः स्वत्वावबोधनादिति वाच्यम्। विवाहेन पत्युः स्वत्वनाशे सति युगपदेव दम्पत्योः स्वत्वान्तरोत्पादात्, अन्यथा क्रयणादिस्थले उत्पन्नस्वत्वपुनरुत्पादकमिकस्वत्वद्वयोत्पादयोर्वारणाय लाघवात्सामान्यतः स्वत्वत्वावच्छिन्नं प्रति स्वत्वत्वेन प्रतिबध्यकत्वस्य प्राग्नैयायिकमतेऽप्यावश्यकतया तन्म-

तेऽप्यप्रतीकारात् वस्तुतः पत्युर्विद्यमानतादशायां तदुपार्जितधने भोजनादिना यथेष्टविनियोगे पत्न्याः प्रत्यवायाभावमात्रपरतया प्रामाणिकैर्व्याख्यातत्वाच्च। अन्यथा "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा" इत्यादिना याज्ञवल्क्यमहाशयैरुक्तराधिकारिगणने पत्नीगणनस्यासङ्गतत्वापत्तेः पतिमरणपूर्वमपि तद्धनेऽधिकारत्वात्, अत एव जीवति पितरि तद्धने पुत्राणां नाधिकारः स्वत्ववति स्वत्वान्तरानुत्पत्त्या तदीयस्वत्वं प्रति तदीयस्वत्वाभावविशिष्टस्य तदीयेतरस्वत्वस्य प्रतिबन्धकतया च पितृस्वत्वसत्त्वे पुत्रस्वत्वोत्पत्तेरसम्भवात् तत्पुत्रोत्पत्तेः पूर्वोत्पन्नपितृस्वत्वनाशकल्पने युगपत्पितृपुत्रयोः स्वत्वान्तरकल्पने च गौरवात् मानाभावाच्च। "उत्पत्त्यैवार्थस्वामित्वानुभव" इति गौतमवचनस्य "क्वचिज्जन्मैवार्जनं यथा पित्र्ये धने" इति प्रामाणिकाभिधानस्य च प्रागुक्तरीत्या पितृमरणोत्तरजातपैतृकदासदासीगवादिजन्यापत्यपरम्परारूपार्थविषयत्वात्। तादृशार्थोत्पत्तेरेव उक्तक्रमेण स्वत्वोत्पादकत्वात्, अन्यथा

"ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।
भजेरन् पैतृकं रिक्थमनी(१)शास्ते हि जीवतोः" ॥

इति मनुवचनविरोधात्, "पितर्यूर्ध्वं जातपुत्रा विभजेयुः पितुर्धनम्" इति देवलवचनविरोधाच्च। नचानीशापदमस्वतन्त्रपरमिति वाच्यम्। बाधकं विना लक्षणाया अन्याय्यत्वात् "जन्मनैव पुत्रस्य पितृधने स्वत्वमुत्पद्यते" इति मिताक्षरालिखनस्य युक्तिविरुद्धत्वेनानुपादेयत्वात्। न च तदीयस्वत्वं प्रति तदीयेतरस्वत्वत्वेन प्रतिबन्धकत्वे कारणान्तरविलोपापत्तिः, क्रयणादेः स्वत्वजनकताबोधकवचनानां नियतपूर्ववर्त्तितापरत्वेनाप्युपपत्तेरिति वाच्यम्। निधावुपादानात् पूर्वं स्वत्वसामान्योत्पादवारणाय क्रयणादेरपि स्वत्वहेतुत्वस्यावश्यकत्वात् निधेरौपादानिकतया उपादानात् पूर्वं तत्र कस्यापि स्वत्वविरहात्। निधित्वमौपादानिकेतरस्वत्वसामग्र्यभावविशिष्टस्वत्वनाशकत्वे सति स्वत्वसामान्याभाववत्त्वम्। परगणनादेरुपादानात् पूर्वमावश्यकपुष्पादेश्च वारणाय सत्यन्तम्। क्रयादिजन्यस्वत्वनाशोत्पत्तिपक्षे निधित्ववारणाय विशिष्टान्तं स्वत्वनाशविशेषणम्। औपादानिकस्वत्वोत्पत्त्यव्यवहितप्राक्क्षणे निधित्वसम्पादनायौपादानिकेतरत्वं प्रथमस्वत्वविशेषणम्। औपादानिकत्वञ्च स्वत्वनिष्ठजातिविशेषः। पूर्वस्वत्वनाशमादाय स्वत्ववद्दशायामपि निधित्ववारणाय विशेष्यदलम्। न च पितृमरणानन्तरमेकदेश एव स्वत्वस्योत्पत्तौ विभागानन्तरमिव

(१) 'अनीशाः' अस्वामिनः।

विभागात् पूर्वमपि अन्यदीयांशेन ममेदमिति प्रत्ययापत्तिः, गुटिकापातादेरेव तादृशनिश्चयजनकत्वे पितृजीवनदशायामपि तादृशप्रत्ययानुपपत्तिरिति वाच्यम् । इष्टत्वात्, अन्यथा सामुदायिकस्वत्वाभ्युपगमेऽपि घटवत्यपि कपाले ध्वंसप्रागभावकालावच्छिन्नघटात्यन्ताभावमादाय घटो नास्तीतिप्रत्ययवत् विभागोत्तरकाले पितृमरणकालावच्छिन्नतदत्यन्ताभावमादाय तादृशप्रत्ययापत्तेर्दुर्वारत्वात् । नचैवं स्वत्वस्य आंशिकत्वे पितुर्मरणानन्तरमविभक्तयोस्तदीयांशयोरेकांशमादाय भ्रात्रा धनार्जने पश्चात्तदंशस्यार्जकेनैव भ्रात्रा गुटिकापातादिना लाभेऽर्जकस्य द्वावंशौ भ्रात्रन्तरस्य चैकांश इति सर्वसम्मतं विरुद्ध्येत, तदा भ्रात्रन्तरस्य स्वत्वाभावेन तेनार्जितधनेऽपि तस्य स्वत्वाभावादिति वाच्यम् । भ्रात्रन्तरस्य स्वत्वोत्पत्तौ बाधकाभावात् । कारणान्तरजन्यपितृस्वत्वनाशेऽपि जातस्वत्वविशिष्टद्रव्यकरणकार्जनत्वेनैव धनघटितसामानाधिकरण्यप्रत्यासत्त्या पुत्रस्वत्वविशेषं प्रति हेतुत्वात् । नचैवं विभागोत्तरमपि तदंशेनार्जितधने भ्रात्रन्तरस्य स्वत्वोत्पादापत्तिरिति वाच्यम् । तदीयस्वत्वं प्रति तदीयस्वत्वाभावविशिष्टस्य तदीयेतरस्वत्वस्य कार्यसहवर्त्तितया प्रतिबन्धकत्वेनार्जकमात्रप्रतियोगिकस्वत्वस्यैव भ्रात्रन्तरस्वत्वोत्पत्तौ तत्र प्रतिबन्धकत्वात् । एतेन स्वत्वस्यांशिकत्वे पितृमरणोत्तरमविभक्तयोस्तदीयांशयोरेकांशमादाय तत्र धनार्जने पश्चात्तदंशस्यार्जकेतरेणैव भ्रात्रा गुटिकापातादिना लाभे तेनार्जितधनस्यार्जकेन सममर्जकेतरस्य समभागापत्तिः अर्जकस्य भ्रमेण तदितरस्य स्वीयांशेनार्जनादित्यपि परास्तम् । तत्रापि अर्जकस्य द्वयोरंशयोः 'अर्जको द्व्यंशमर्हति' इति वचनसिद्धत्वात् । अर्जकस्य पितृस्वत्वनाशोपजातस्वत्वविशिष्टद्रव्याभ्यामर्जकेतरस्यापि पितृस्वत्वनाशोपजातस्वत्वविशिष्टद्रव्यमात्रेणार्जनादंशद्वयोरेवार्जकस्योचितत्वाच्च । नच विभागात् पूर्वमपि स्वत्वस्यांशिकत्वे विभागात् पूर्वमेकेन भ्रात्रा पितृद्रव्यैकदेशेन विहितकर्मानुष्ठाने सर्वेषां भ्रातॄणां फलभागित्वं न स्यात्, एकदेशे सर्वेषां स्वत्वविरहेऽपि तत्र सर्वेषां फलभागित्वस्य वाचनिकत्वात् । तदाह नारदः—

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति वै धर्मो भवेत्तेषां पृथक् पृथक् ॥ इति ।

न च तथापि विभागात् पूर्वमपि स्वत्वस्यांशिकत्वे गुटिकापातादिना वस्तुगत्या यस्य योऽशो निर्णीतो भविष्यति विभागात् पूर्वं तेन तदंशस्य भ्रात्रन्तराय दानेऽपि [illegible] सिद्धत्वापत्तिः विभागा-

त्पूर्वमपि तद्धने प्रतिग्रहीतृस्वत्वाभावादिति वाच्यम् । तद्धने प्रतिग्रहीतृस्वत्वाभावेऽपि विभागात् पूर्वं तद्धने प्रतिग्रहासिद्धेर्वाचनिकत्वात् । तदाह नारदः—

साक्षित्वं प्रातिभाव्यञ्च दानं प्रतिग्रहमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥ इति ।

प्रतिभूः लग्नक इत्याहुः । तदसत्—

स्थावरस्य समस्तस्य गोत्रसाधारणस्य च ।
नैकः कुर्यात् क्रयं दानं परस्परमतं विना ॥ इति

व्यासवचने समस्तेतिविशेषणात् सर्वेषां स्वत्वप्रतीतेः ।

स्वतन्त्रास्तु पितृमरणोत्तरं ततस्वत्वनाशरूपस्य कारणस्योत्पत्तिसम्बन्धेन सर्वत्राविशिष्टतया सर्वत्रैव पितृधने सर्वेषां भ्रातृणां स्वामिभेदेन विभिन्नानि नानास्वत्वानि युगपज्जायन्ते, तदीयस्वत्वं प्रति तदीयस्वत्वाभावविशिष्टस्य तदीयेतरस्वत्वस्य तत्त्वेन कार्यसहवर्त्तितया प्रतिबन्धकत्वकल्पने गौरवात् । तानि च स्वत्वानि विभागनाश्यानि, किन्तु विभागप्राक्कालावच्छेदेनैव सर्वत्र पितृधने वर्त्तन्ते न तु तदुत्तरकालावच्छेदेन, विभागोत्तरकाले यस्य योंऽशस्तत्रैव तत्स्वत्वस्य वृत्तिः न त्वन्यांशेऽन्यस्वत्वस्य वृत्तिः, यथा न्यायनये नित्योऽपि घटात्यन्ताभावो घटवति भूतले घटापसरणदशायामेव वर्त्तते न तु घटसत्त्वदशायां, यथा वा मीमांसकनये नित्यापि दाहिका शक्तिर्वह्नौ प्रतिबन्धकासमवधानदशायामेव वर्तते न तु प्रतिबन्धकसमवधानदशायां, यथा वा एकदासदास्यादिमात्रस्य पैतृकस्वत्वस्थले कालभेदेन एकस्यामेव स्वत्वव्यक्तौ तत्पुरुषनिरूपितत्वानिरूपितत्वे । एतेन स्वत्वान्तरतत्प्रागभावध्वंसानां विभागस्य तन्नाशकत्वस्वत्वान्तरोत्पादकत्वयोश्च कल्पनायां गौरवरूपस्य मैथिलमतोक्तदूषणस्य नात्रावकाशः, विभागोत्तरं प्रागुत्पन्नस्वत्वनाशकत्वस्वत्वान्तरोत्पादकत्वयोरनभ्युपगमात्, विभागस्य प्रमात्वञ्च मैथिलमतवदुपादनीयमिति प्राहुः ॥

इति स्वत्वजनकतावाद (३४) वीचिः ।

---

## अथ स्वत्वजनकतावाद(३५)वीचिः ।

स्वत्वं तावत्—स्वत्वमुत्पन्नं स्वत्वं विनष्टं तव स्वं मम स्वं देवस्वं ब्रह्मस्वमित्यादिप्रतीतिसिद्धं पदार्थान्तरमेव । तच्च वृत्तिनियामकविशेषणताविशेषेण स्वर्णादिद्रव्यनिष्ठम् 'सुवर्णं स्वत्वमिति प्रत्ययात्, वि

पकताख्यविशेषणताविशेषेण स्वामिनिष्ठम्, अत्रास्य स्वत्वमिति प्रत्ययात्। नचैतस्मिन् पुरुषे एतत्द्रव्यस्वामित्वमेतत्द्रव्यपतित्वमिति प्रतीतिः कथं स्यात्, निरूपकतासम्बन्धस्य वृत्त्यनियामकत्वात्, निरूपकतासम्बन्धस्य प्रकृते वृत्तिनियामकताभ्युपगमे चास्मिन् पुरुषे एतद्द्रव्यस्य स्वत्वमिति प्रत्ययस्य दुर्वारत्वादिति वाच्यम्। नहि निरूपकतासम्बन्धेन स्वत्वमेव स्वामित्वम्, अपितु अयमस्य स्वामी अयमस्य पतिरित्यादिप्रतीतिसिद्धं, तदपि पदार्थान्तरं, तच्च वृत्तितानियामकविशेषणतया स्वामिनिष्ठम् 'अस्मिन् पुरुषे एतद्द्रव्यस्वामित्वमि'ति] प्रत्ययात्, निरूपकताख्यविशेषणताविशेषेण च धननिष्ठम्, अत्र पुरुषे एतद्द्रव्यस्य स्वामित्वमिति प्रत्ययात् एतद्द्रव्येऽस्य पुरुषस्य स्वामित्वमित्याद्यप्रत्ययाच्च।

अथैवं स्वत्वस्वामित्वयोर्भिन्नपदार्थत्वात् चैत्रस्य धनमित्यादौ स्वत्वं स्वामित्वं वा षष्ठ्यर्थ इत्यत्र विनिगमनाविरहः, स्वत्वस्य षष्ठ्यर्थत्वे निरूपितत्वसम्बन्धेन प्रकृत्यर्थविशेष्यतया स्वाश्रयतासम्बन्धेन धनविशेषणतया तदन्वयवत् स्वामित्वस्य षष्ठ्यर्थत्वेऽपि निष्ठतासम्बन्धेन प्रकृत्यर्थविशेष्यतया निरूपकतासम्बन्धेन धनविशेषणतया तदन्वयस्य सुवचत्वात्। न च स्वामित्वस्य षष्ठ्यर्थत्वे चैत्रस्य धनमितिवत् धनस्य चैत्र इत्यपि प्रत्ययः स्यात् चैत्रस्य धननिरूपितस्वामित्वाश्रयत्वादिति वाच्यम्। स्वत्वस्य षष्ठ्यर्थत्वेऽपि तादृशप्रत्ययस्य दुर्वारत्वात् धननिष्ठस्वत्वनिरूपकत्वाच्चैत्रस्य। षष्ठ्यर्थस्वत्वस्य निरूपितत्वसम्बन्धेनैव प्रकृत्यर्थविशेष्यतया आश्रयत्वसम्बन्धेनैव च अनुयोगिविशेषणतयाऽन्वयो न तु सम्बन्धान्तरेणेति व्युत्पत्तिकल्पने स्वामित्वस्य षष्ठ्यर्थत्वेऽपि षष्ठ्यर्थस्वामित्वस्य निष्ठतासम्बन्धेनैव प्रकृत्यर्थस्य विशेष्यतया निरूपकत्वसम्बन्धेनैव चानुयोगिविशेषणतयाऽन्वयो नतु सम्बन्धान्तरेणेति व्युत्पत्तेरपि सुवचत्वादिति चेन्न।

स्वामित्वस्य षष्ठ्यर्थत्वे चैत्रीयधनेऽपि नेदं चैत्रस्येति व्यवहारापत्तेः स्वामित्वस्य चैत्रवृत्तितया तदभावस्य सुतरां धने सत्त्वात्। न च निरूपकतासम्बन्धेनैव षष्ठ्यर्थस्य स्वामित्वस्याभावो नञा बोध्यते, स च धने न वर्तत इति वाच्यम्। निरूपकतासम्बन्धस्य वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वात्। न चैवं स्वत्वस्य षष्ठ्यर्थत्वेऽपि धनस्वामिन्यपि नायं धनस्येति व्यवहारापत्तिः, धननिरूपितस्वामित्वस्य पुरुषवृत्तित्वेऽपि धननिष्ठस्य स्वत्वस्य पुरुषावृत्तित्वादिति वाच्यम्। इष्टत्वात्, अन्यथा स्वामित्वस्य षष्ठ्यर्थत्वेऽपि तत्र निष्ठतासम्बन्धेनैव प्रकृत्यर्थान्वयस्य व्युत्पन्नतया तादृशव्यवहारस्य दुर्वारत्वात्, दासदास्यात्मकधननिष्ठस्वामित्वस्य निरूपकतासम्बन्धेनाश्रयतासम्बन्धेन च पुरुषेऽभावात्। न च

तथापि वृत्त्यनियामकसम्बन्धस्याप्यभावप्रतियोगितावच्छेदकत्वनये स्वामित्वस्य षष्ठ्यर्थत्वे न किमपि बाधकमिति वाच्यम्। तन्नये प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणत्वस्यैवाभावविरोधितया गगनादिसंयोगिघटादौ संयोगसम्बन्धावच्छिन्नगगनाभाववत् चैत्रनिष्ठस्वामित्वनिरूपकेऽपि धने निरूपकतासम्बन्धावच्छिन्नचत्रनिष्ठस्वामित्वाभावस्य वृत्तौ बाधकाभावेन तादृशव्यवहारापत्तेर्दुर्वारत्वात्। नचैवं संयोगसम्बन्धावच्छिन्नगगनाद्यभावस्येव विषयतासम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाद्यभावस्यापि केवलान्वयित्वं स्यात्, स्याच्च विषयतासम्बन्धावच्छिन्नप्रतियोगिताकघटाभावादेरपि केवलान्वयित्वं विषयिताविषयितयोरधिकरणत्वानियामकतया तेन सम्बन्धेन ज्ञानाद्यधिकरणत्वस्यैवाप्रसिद्धेरिति वाच्यम्। इष्टत्वात्, प्रतियोग्यधिकरणानिरूपितवृत्तिमदत्यन्ताभावप्रतियोगितानवच्छेदकत्वस्य केवलान्वयित्वघटकतया विषयतासम्बन्धावच्छिन्नज्ञानाद्यभावस्य केवलान्वयित्वेऽपि विषयतासम्बन्धेन ज्ञानादेः केवलान्वयित्वसम्भवात्। यदि च वृत्त्यनियामकसम्बन्धस्याप्यभावप्रतियोगितावच्छेदकत्वेन तत्सम्बन्धेन प्रतियोगिसम्बन्धित्वमेवाभावविरोधि, अत एव प्रलयकाले एव परमाण्वुत्पत्तिकाले एवावयविनि संयोगसम्बन्धावच्छिन्नगगनाद्यभावो नान्यदा, अत एव च विषयतासम्बन्धावच्छिन्नज्ञानाद्यभावोऽलीक इति मतमाद्रियेत, तदास्तु विनिगमकाभावात् स्वत्वस्वामित्वोभयं षष्ठ्यर्थः किन्नश्छिन्नं तात्पर्यग्रहस्य नियामकत्वादेव चत्रस्य धनमित्यादौ स्वत्वस्वामित्वयोरवगम इति सम्प्रदायः।

केचित्तु स्वत्वमेव पदार्थान्तरं न तु स्वामित्वं, किन्तु तन्निरूपकत्वं स्वामित्वम्, निरूपकतासम्बन्धस्य वृत्त्यनियामकत्वेऽपि निरूपकत्वस्य स्वरूपसम्बन्धेन वर्तमानत्वादेवात्र पुरुषेऽस्य द्रव्यस्य स्वामित्वमिति प्रत्ययोपपत्तेः, एवञ्च गौरवादेव स्वामित्वं न षष्ठ्यर्थोऽपि तु स्वत्वमेवेत्याहुः।

तदसत्, विनिगमकाभावात् स्वामित्वमेव पदार्थान्त तन्निरूपकमेव स्वत्वमिति वैपरीत्यस्यापि सुवचत्वात्, स्वामित्वनिरूपकत्वस्य स्वत्वरूपत्वे स्वशब्दादेः शक्यतावच्छेदकत्वेन गौरवात्, स्वत्वनिरूपकत्वस्य स्वामित्वरूपत्वेऽपि स्वामिशब्दादेः शक्यतावच्छेदकत्वेन गौरवात्।

नव्यास्तु स्वत्वं स्वामित्वञ्च एक एव पदार्थः, स च विलक्षणविषयतासम्बन्धेन अत्र स्वामित्वं इदं स्वमित्यादिव्यवहारकारकः, न तु स्वत्वस्वामित्वयोर्भेदः तयोर्भेदेऽपि धनपुरुषनिष्ठपरस्परविलक्षणविषयताभ्युपगमात्। एतेन विषयित्वादिकमपि व्याख्यातं, तयोरप्येकपदार्थत्वात्। स च विलक्षणविषयतासम्बन्धेन अत्र विषयत्वमयं विषय इत्यादिव्य-

वहारकारकः, विलक्षणविशेषणतया चात्र स्वामित्वम् अयं स्वामी अत्र पतित्वम् अयं पतिरित्यादिव्यवहारकारकः, विलक्षणविषयतया चात्र विषयित्वमिदं विषयीत्यादिव्यवहारकारक इति प्राहुः।

अत्र स्वत्वं क्रयप्रतिग्रहादिवत्पित्रादीनां मरणपातित्यप्रव्रज्योपेक्षाभ्यो-ऽप्युत्पद्यते, पित्रादिधनेषु पित्रादीनां मरणपातित्यप्रव्रज्योपेक्षाभ्यः स्वत्व-नाशे सत्यव्यवधानेनैव पुत्रादीनां स्वत्वोत्पादस्य वाचनिकत्वात्। उपेक्षा च न ममेदमिति सङ्कल्पविशेषः। अत एव जीवत्पितृकविभज्यमानधने पुत्रस्य न स्वत्वानुपपत्तिः, तत्र पितुरुपेक्षाया एव पितुः स्वत्वनाश-कत्वात्।

अथ पातित्यस्य स्वपूर्ववात्तस्वत्वनाशकत्वे तदनन्तरं प्रायश्चित्तानुष्ठा-नेऽपि पूर्वार्जितधने क्रयणादिकं विनाऽधिकारो न स्यात् स्वत्वोत्पादकाभा-वात्। न च प्रायश्चित्तप्रागभावविरहविशिष्टपातित्यमेव स्वत्वनाशकमिति वाच्यम्। विशेष्यविशेषणभावे विनिगमनाभावेन गुरुतरकार्य्यकारण-भावद्वयप्रसङ्गात् मानाभावाच्च, असति प्रामाणिकवचने संग्रहकर्तुर्लि-खनस्यानुपादेयत्वात् प्रागभावस्यैवासिद्धत्वाच्च इति चेन्न।

पातित्योत्तरप्रायश्चित्तानुष्ठानेऽपि पूर्वार्जितधने क्रयणादिकं विनाऽ-धिकाराभावस्येष्टत्वात्। नचैवं पातित्यपूर्वार्जितधनेन प्रायश्चित्तानुष्ठान-मेव कथं स्यात्, तत्र स्वत्वविरहादिति वाच्यम्। अत्र स्वधनेन प्राय-श्चित्तानुष्ठानस्याशास्त्रार्थत्वात्, पातित्योत्तरं भिक्षादिना धनान्तरमर्ज-यित्वैव तेन धनेन प्रायश्चित्तानुष्ठानम् इत्यस्यैव लाघवेन कल्पनात्।

ननु तथापि पितृमरणादीनां पुत्रादिस्वत्वं प्रति केन रूपेण कार्य-कारणभावः। न च तत्पितृमरणत्वेन तदीयस्वत्वविशेषत्वेन तच्च क्रयादिजन्यतत्पुत्रस्वत्वव्यावृत्तो जातिविशेष इति वाच्यम्। पितृमरणो-त्तरं पितृधन इव तत्कालोत्पन्नस्वत्वनाशविशिष्टाऽन्यदीयधनेऽपि पुत्र-स्वत्वोत्पत्तिप्रसङ्गात् विनिगमकाभावात् वाय्वाकाशादौ निधित्वापन्न-द्रव्ये पितृमरणात् पुत्रस्वत्वोत्पादप्रसङ्गाच्च। न च मरणं स्वप्रतियो-ग्याश्रयनिरूपितस्वत्वसम्बन्धेनैव हेतुरिति वाच्यम्। पुत्रस्वत्वोत्पत्ति-पूर्वं पितृधने पितुः स्वत्वाभावेन व्यभिचारप्रसङ्गात्, स्वत्ववति स्वत्वा-न्तरानुत्पत्त्या मरणेन पितृस्वत्वनाशानन्तरमेव पितृधने पुत्रस्वत्वोत्पा-दसम्भवात्। न च स्वत्वाधिकरणत्वमेव सम्बन्धः स्वत्वनाशेऽपि स्वत्वा-धिकरणत्वसत्त्वाच्च न व्यभिचार इति वाच्यम्। पितृमरणात्पूर्वं निधि-त्वापन्ने पितृविक्रीतादिद्रव्ये पितृमरणोत्तरं पुत्रस्वत्वोत्पत्तिप्रसङ्गात् स्वत्वनाशेऽपि स्वत्वाधिकरणत्वसत्त्वात्। एतेन तन्मरणादिजन्यतदीय-

पुत्रस्वत्वविशेषं प्रति तदीयद्रव्यत्वेनापि समवायिकारणतया तन्मरणान्तरं तदीयद्रव्ये तत्पुत्रस्वत्वविशेषोत्पत्तिरित्यपि परास्तम्। द्रव्यस्य तदीयत्वं यदा कदाचित् तत्स्वत्वाश्रयत्वं तत्स्वत्वविशिष्टत्वं वा? नाद्यः, पितृमरणात् पूर्वं प्रतिनिधित्वापन्ने पितृविक्रीतद्रव्येऽपि तत्सत्त्वेन पितृमरणोत्तरं तत्रापि पुत्रस्वत्वोत्पत्तिप्रसङ्गात् । नान्त्यः कारणतावच्छेदकपूर्वसत्त्वस्य कार्योत्पत्त्यप्रयोजकत्वात् स्वत्ववति स्वत्वान्तरानुत्पत्त्या पुत्रस्वत्वोत्पत्तिपूर्वं पितृधने स्वत्वाभावेन व्यभिचारप्रसङ्गाच्च इति चेत्।

अत्र प्राञ्चः—मरणपातित्यादेः स्वजन्यस्वत्वनाशोत्पत्तिसम्बन्धेन धननिष्ठतया पुत्रस्वत्वविशेषं प्रति तन्मरणत्वेन हेतुत्वम्; परस्परव्यावृत्तस्वत्वनिष्ठवैलक्षण्यस्य कार्यतावच्छेदकतया न परस्परं व्यभिचारः, पुरुषभेदेन कार्यकारणभावानन्त्यस्यानायत्याभ्युपगमात्, अत एव तन्मरणादीनां तत्पुत्रमृतपितृकतत्पौत्रमृतपितृपितामहकतत्पुत्रपौत्रस्वत्वविशेषं प्रति जनकत्ववत् तत्पत्न्यादिस्वत्वविशेषं प्रत्यपि जनकताया वाचनिकतया पुत्रपौत्रप्रपौत्रान्यतमसत्त्वेऽपि पतिमरणोत्तरं पतिधने पत्न्यादेः स्वत्वोत्पादापत्तिः। सामग्रीसत्त्वे कार्योत्पादस्य दुर्वारत्वात्, विना कारणविरहं कार्यानुत्पादस्यासम्भवाच्चेति निरस्तम् । पुरुषभेदेन कार्यकारणभावस्य विभिन्नतया पुत्राद्यन्यतमपुरुषीयमरणादेरेव पत्न्यादिस्वत्वजनकत्वात् पूर्वपूर्वविरह एवोत्तरेषां धनाधिकारस्य सकलस्मृतिसिद्धत्वात्। न च तथापि यस्य पुरुषस्य पातित्यपूर्वार्जितधने पातित्येन स्वत्वनाशात् पुत्रस्वत्वोत्पत्तिः ततः पुत्रसामान्यनाशः ततः प्रायश्चित्तात् पातित्यनाशः ततो धनान्तरार्जनं पुनः पातित्यं ततः प्रायश्चित्तान्तरार्जितधने स्वत्वोत्पत्त्यनुरोधेन पत्नीस्वत्वविशेषं प्रत्यपि तत्पुरुषीयपातित्यस्य प्रयोजकत्वावश्यकत्वात् प्रायश्चित्तपूर्वार्जितधनेऽपि पत्नीस्वत्वप्रस :, एवं प्रव्रज्योपेतामादायाप्यतिप्रसङ्ग इति वाच्यम् । तादृशपुरुषीयपत्नीस्वत्वं प्रति कार्यसहभावेन तत्पुरुषस्वत्वस्य धननिष्ठतया प्रतिबन्धकत्वाभ्युपगमात्, प्रतिबध्यतावच्छेदकञ्च तत्पुत्रनिरूपितस्वत्वत्वं कन्यादिसकलोत्तराधिकारिसाधारणम्, कारणतावच्छेदककोटौ उत्पत्त्यप्रवेशे पुत्रादिना विक्रयाद्युत्तरं स्वामिनि शेषनिधित्वापन्ने पितृमरणाद्युत्तरं न स्वपितृधने पुनः पुत्रस्वत्वोत्पत्तिप्रसङ्गः, मरणादिजन्यपितृस्वत्वनाशस्य तदानीमपि सत्त्वात्प्रतिबन्धकान्तरविरहाच्चातस्तन्निवेशः, परन्तु यदीयस्वं निधित्वापन्नं भवति तन्मरणादेः कारणतायामेव सम्बन्धकोटौ उत्पत्तिः प्रवेशनीया न तु सर्वत्र, पुरुषभेदेन कार्यकारणभावभेदात्। एतेन-

पितृमरणोत्तरं पुत्रविक्रीतपितृधनक्रेतुः स्वत्वोत्पत्तिसमकालं पुत्रस्यापि
पुनः स्वत्वोत्पत्तिप्रसङ्गः मरणजन्यपितृस्वत्वनाशस्य तदानीमपिसत्त्वात्,
एवं पुत्रमरणोत्तरं पुत्रसंक्रान्तपितृधने पौत्रादिस्वत्वोत्पत्तिसमकालं मृ-
तपुत्रस्यापि स्वत्वोत्पत्तिप्रसङ्गः मरणजन्यपितृस्वत्वनाशस्य तदानीमपि
सत्त्वात्, स्वामिजीवनस्य सर्वत्र हेतुतायाश्चाग्रे निरसनीयत्वात्–इत्यपि
निरस्तम्, तत्राप्युत्पत्तेः कारणतावच्छेदकसम्बन्धत्वाभ्युपगमात् ।

ननूत्पत्तेः कारणतावच्छेदकसम्बन्धत्वे पितृमरणोत्तरं पत्न्यादिरहित-
भ्रातृसंक्रान्तधने भ्रातृमरणोत्तरं भगिन्यास्तत्सुतस्य वा स्वत्वोत्प-
त्तिप्रसङ्गः, उत्पत्तेः क्षणिकतया पितृस्वत्वनाशोत्पत्तेस्तदानीमभावात् ।
न च तद्भगिन्यादेस्तादृशस्वत्वविशेषे स्वजन्यस्वत्वनाशोत्पत्तिस-
म्बन्धेन भ्रातृमरणमेव हेतुर्न तादृशसम्बन्धेन पितृमरणमिति वाच्यम् ।
तथासति भ्रातृमरणोत्तरं भ्रातुः संक्रान्तपैतृकधनवत् भ्रातुः स्वापार्जि-
तधनेऽपि जातेः स्वत्वोत्पत्तिसमकालं भगिन्यादेस्तादृशस्वत्वविशेषोत्पा-
दकतापत्तेः । न च भगिन्यादेस्तादृशस्वत्वविशेषे पितृमरणस्य केवलस्व-
जन्यस्वत्वनाशसम्बन्धेन भ्रातृमरणस्य च स्वजन्यस्वत्वनाशोत्पत्तिसम्ब-
न्धेन दण्डचक्रवत् धननिष्ठतया हेतुत्वमिति वाच्यम् । भ्रातुर्भ्रात्रन्तरात्
क्रीतधनेऽपि भ्रातृमरणोत्तरं जातिवत् भगिन्यादेस्तादृशस्वत्वविशेषोत्पा-
दस्य दुर्वारत्वादिति चेन्न ।

भगिन्यादेस्तादृशस्वत्वविशेषे भ्रातृमरणस्यैव स्वजन्यस्वत्वविशेष-
नाशोत्पत्तिसम्बन्धेन हेतुत्वात् । भ्रातृस्वत्वनिष्ठविशेषः पितृमरणादिज-
न्यतावच्छेदकजातिरूपः, तेन भ्रातुः स्वोपार्जितधनव्युदासः । नच
तथापि उत्पत्तेः कारणतावच्छेदकसम्बन्धत्वे यत्र ऋतुमपेक्ष्यैव पिता
मृतः तत्रापि पितृमरणाधीनस्वत्वनाशाच्चिरविलम्बजातस्य पुत्रस्य
स्वत्वोत्पादो न स्यादिति वाच्यम् । इष्टत्वात्, किन्तु भाविपुत्रोत्पत्त्यैव
विद्यमानपुत्रस्वत्वं विनाश्य युगपत्सर्वेषां स्वत्वं जन्यते इत्यभ्युपगमात्,
तदाह मिताक्षरायां गौतमः—

"उत्पत्त्यैवार्थस्वामित्वन्न भवेत्' इति । यस्मिन् गर्भस्थे पिता मृतः
तदुत्पत्तिरेव तस्य पितृधने स्वत्वहेतुरिति तदर्थः ।

वस्तुतः वक्ष्यमाणरीत्या स्वामिनस्तज्जीवनस्य वा सर्वत्र स्वत्वहेतु-
त्वे मानाभावेन तत्र पितृमरणात् स्वत्वनाशाव्यवहितोत्तरमेव वि-
द्यमानपुत्रवदजातपुत्रस्यापि स्वत्वमुत्पद्यते इति न काचिदनुपपत्तिः। गात-
मसूत्रविरोधः जीवनस्वत्वहेतुतानिराकरणावसर एव निरस्तः । नचैवं
रूपेण कार्यकारणभावे पितृमरणपातित्याद्युत्तरं तद्धने पतितसंन्यस्तपुत्रा-

णामपि स्वत्वोत्पादापत्तिरिति वाच्यम्। निरूपकतासम्बन्धेन मरणादिज-न्यस्वत्वविशेषोत्पत्तिं प्रति स्वामिनिष्ठ पातित्याद्यभावस्यापि हेतुत्वात्। पातित्यं चाधर्मविशेषः, तेन यवनादिपुत्रस्य पितृमरणोत्तरं तद्धने न स्व-त्वानुपपत्तिः, न वा पितुः पातित्योत्तरं जातपुत्रस्य पितृमरणे तद्धने-स्वत्वानुपपत्तिः। न चैवं पितुः पातित्यपूर्वार्जितधनेऽपि पातित्यपूर्वजात-पुत्रवत् तदुत्तरजातपुत्रस्यापि पितृमरणोत्तरं स्वत्वापत्तिरिति वाच्यम्। पितुः पातित्योत्तरार्जितधने पूर्वजातपुत्रवत्पातित्यपूर्वार्जितधनेऽपि पाति-त्योत्तरजातपुत्रस्यापि स्वत्वोत्पत्तेरिष्टत्वात्। नचैवं "पिण्डं दद्यात् धनं हरेत्" इति नियमभङ्गः इति वाच्यम्। मरणादिसमनन्तरोत्पन्नपुत्रस्य पिण्डदातृत्वाभावेन तादृशनियमस्य व्यभिचारोऽनर्थतया धनघटितसा-मानाधिकरण्यस्यैव प्रत्यासत्तितया(१) तन्मरणानन्तरं तत्पुत्रनिरूपि-तस्वत्वं निरूपकतासम्बन्धेन तत्पुत्र एव जायते, नतु तद्भिन्न इत्यत्र नियामकाभावः निरूपकतासम्बन्धस्यापि प्रकृते पातित्याभावकार्य-तावच्छेदकतया कारणनियम्यत्वात्। निरूपकता सम्बन्धेन तत्पुत्र-निरूपितस्वत्वोत्पत्तिं प्रति अव्यवहितपूर्वकालावच्छेदेन तादात्म्यसम्ब-न्धेन तत्पुत्रत्वेनापि हेतुत्वाभ्युपगमे पितृमरणोत्तरजातपुत्रस्य पितृधने-स्वत्वमुत्पद्यते इति प्रागुक्तविरोधापत्तेः वर्तमानकालस्यातीतानागतव-स्तुनः तादात्म्यादिसम्बन्धेन वृत्तावनवच्छेदकत्वादिति चेन्न।

निरूपकतासम्बन्धेन तत्पुत्रनिरूपितस्वत्वोत्पत्तिं प्रति विशेष्यतास-म्बन्धेन तत्पुत्रत्वप्रकारकप्रमाया हेतुत्वात्सर्वत्रैवान्ततो भगवतो वा तत् पुत्रत्वप्रमासत्वेन व्यभिचाराभावादित्याहुः।

तदसत्, मरणपातित्यादिभेदेन बहुतरकार्यकारणभावापत्तेः। एतेन तन्मरणत्वेन तत्पुत्रस्वत्वविशेषत्वेन कार्यकारणभावः। स्वप्रतियोग्याश्रय-निरूपितस्वत्वञ्च कारणतावच्छेदकसम्बन्धः, तेन तन्मरणोत्तरं तदीयधन एव तत्पुत्रस्वत्वमुपजायते न तु धनान्तरे। यद्वा कालिकसामाना-धिकरण्यमेव प्रत्यासत्तिः धनघटितसामानाधिकरण्यप्रत्यासत्त्या दण्डच-क्रवत् स्वस्वस्यापि पृथक् हेतुतय। च धनान्तरनिरासः। पितृस्वत्वनाश-पुत्रस्वत्वयोर्युगपदुत्पादाभ्युपगमे न व्यभिचारः नचोत्पन्नस्वत्वस्य पुनरु-त्पाद-क्रयादिजन्यकामिकस्वत्वोत्पादयोर्वारणाय स्वत्वावच्छिन्नं प्रति स्व-त्वेन पूर्ववर्तितया प्रतिबन्धकत्वस्य आवश्यकत्वात् कथं पितृस्वत्वना-शोत्पत्तिसमये पुत्रस्वत्वोत्पत्तिरिति वाच्यम्। तन्निरूपितस्वात्वावच्छि-

(१) अत्र पाठः त्रुटितः प्रतिभाति।

...नं प्रति तन्निरूपितस्वत्वत्वेनैव प्रतिबन्धकतया सामान्यतस्तादृशप्रतिब-ध्यप्रतिबन्धकभावविरहात्। न च पातित्यप्रव्रज्ययोः स्वाश्रयनिरूपितस्व-त्वसम्बन्धेन तादृशस्वत्वसहकारेण वा पुत्रस्वत्वविशेषोत्पादकत्वे पाति-त्याद्युत्तरार्जितधने पितुः स्वत्वेऽपि पुत्रस्वत्वापत्तिः, एवं पितुरुपेक्षायाः स्वाश्रयनिरूपितस्वत्वसम्बन्धेन तादृशस्वत्वसहकारेण वा पुत्रस्वत्वो-त्पादकत्वात् यत्र धने पितुरुपेक्षा तद्धनवदनपेक्षिततदीयधनेऽपि पुत्र-स्वत्वापत्तिरिति वाच्यम्। पातित्यादिस्थले प्राचीनोक्तरीतेरेवानुसर्त्तव्य-त्वादिति पण्डितम्मन्यमतमपास्तम्। मरणपातित्यादिभेदेन कार्यका-रणभावचतुष्टयापत्तेः, निरूपकपुरुषभेदेन स्वत्वं प्रति स्वत्वस्यानन्तप्र-तिबध्यप्रतिबन्धकभावापत्तेश्च।

नव्यास्तु पित्रादीनां मरणादिर्न पुत्रादिस्वत्वहेतुः, अपि तु तज्जन्य-स्वत्वनाश एवोत्पत्तिसम्बन्धेन पुत्रनिष्ठतया तद्धेतुः। तदाह बौधायनः– "पितुः स्वत्वापगमे सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति"। अपगमो विनाशः मरणादिनेत्यादि• अङ्गजेषु तद्गामी तेषां स्वत्वाश्रयः, तथाच मरणपा-तित्यादिजन्यसकलस्वत्वनाशसाधारणदानविक्रयाद्यजन्यस्वत्वनाशत्वे-नैव तत्पुत्रस्वत्वविशेषं प्रति विशेषणताविशेषावच्छिन्नोत्पत्तिसम्बन्धे-न धननिष्ठतया हेतुत्वम्, विशेषणत्वञ्च क्रयप्रतिग्रहादिजन्यस्वत्वव्यावृ-त्तो निखिलपितृमरणपातित्याद्यधीनस्वत्वसाधारणो जातिविशेषः। सम्ब-न्धकोटावुत्पत्तिप्रवेशप्रयोजनञ्च पूर्ववत्।

वस्तुतस्तु तत्स्वत्वनाशत्वेनैव पुत्रनिरूपितस्वत्वविशेषत्वावच्छिन्नं प्रति विशेषणताविशेषावच्छिन्नोत्पत्तिसम्बन्धेन जनकत्वं, नतु दानवि-क्रयाद्यजन्यत्वमपि तत्र निवेशनीयम्। नचैवं दानविक्रयादिजन्य-तत्स्वत्वनाशात् तदीयपुत्रस्वत्वविशेषोत्पत्तिप्रसङ्ग इति वाच्यम्। सामान्यतस्तादृशस्वत्वविशेषत्वावच्छिन्नं प्रति तादृशस्वत्वविशेषा-तिरिक्तस्वत्वस्य कार्यसहभावेन प्रतिबन्धकत्वात्, सा प्रतिपुरु-षंविभिन्ना, कार्यकारणभावेषु दानविक्रयाद्यजन्यत्वप्रवेशमपे-क्ष्य सर्वसाधारणातिरिक्तप्रतिबध्यप्रतिबन्धकभावकल्पनाया लघु-त्वात्। नचैवं पितुः स्वत्वनाशस्य हेतुत्वाभ्युपगमो व्यर्थः तादृशा-प्रतिबध्यप्रतिबन्धकभावमात्रस्यैव सम्यक्त्वात् इति वाच्यम्। पितृमरणोत्तरं पितृधन इव निधित्वापन्नधनेऽपि पुत्रस्वत्वापत्तिवारणाय तद्धेतुत्वस्यावश्यकत्वात्, सम्बन्धकोटावुत्पत्तिप्रवेशादेव पितृमरणात् पूर्वं निधित्वापन्ने पितृदत्तविक्रीतद्रव्यस्य पितृस्वत्वनाशप्रतिबन्धकस्व-त्वान्तरविरहयोः सत्त्वेऽपि पितृमरणोत्तरं स्वपुत्रस्वत्वोत्पत्तिः। अस्तु

वा विशेषणताविशेषावच्छिन्नोत्पत्तिसम्बन्धेन तत्र स्वत्ववन्नाशत्वेनैव जनकत्वम्। नाशस्य स्वत्ववत्त्वञ्च दानविक्रयादिनाश्यस्वत्वव्यावृत्त-प्रतियोगितानिरूपकत्वसम्बन्धेन विवक्षितम्, अतो न दानविक्रयादि-जन्यतत्स्वत्वनाशात् तत्र पुत्रस्वत्वविशेषोत्पत्तिः। सम्बन्धाननुगमस्या-दोषतया तत्र प्रतियोगिताव्यक्तीनामननुगमेऽपि न क्षतिः। एवञ्चातिरि-क्तप्रतिवध्यप्रतिवन्धकभावकल्पनेऽपि नानुपपत्तिः।

एतेन पितामहादिमरणात् पौत्रादिस्वत्वोत्पादोऽपि व्याख्यातः। तदीयपुत्रस्वत्वविशेषवत् तदीयपौत्रस्वत्वविशेषं प्रत्यपि मरणादिजन्य-तत्स्वत्वनाशस्योक्तरीत्या हेतुत्वात्।

अथैवं पितामहादिमरणे तदीयधनेषु मृतपितृकस्वत्वोत्पत्तिसमकालं जीवत्पितृकपौत्रस्यापि स्वत्वोत्पत्तिप्रसङ्गः, तदीयपौत्रत्वस्याविशेषात्।

यद्यपि जन्यतावच्छेदकभेदेन जन्यत्वस्य विभिन्नतया तदीयसकल-पौत्रसाधारणस्य तदीयपौत्रत्वस्य एकस्याभावात् पितामहपौत्रव्यक्तीः प्रातिस्विकरूपेणोपादाय तत्तद्व्यक्तिनिरूपितस्वत्वविशेषं प्रति तत्तद्व्य-क्तिस्वत्वनाशत्वेनैव हेतुतया जीवत्पितृकपौत्रव्यक्तिनिरूपितस्वत्वविशेषं प्रति तादृशपितामहव्यक्तिस्वत्वनाशस्याहेतुत्वात् न तत्स्वत्वनाशात् तत्र स्वत्वोत्पादप्रसङ्गः। यदि च तत्पौत्रत्वस्य तदीयसकलपौत्रसाधार-णस्यैकस्याभावेऽपि सम्बन्धमर्य्यादया तस्य घटकतया सामान्यत एव तत्र स्वत्वनाशस्य तदीयसकलपौत्रसाधारणैककार्यकारणभावः सम्बन्धाननुगमस्यादोषत्वादिति विभाव्यते, तदा पितामहमरणोत्तरजी-वत्पितृकपौत्रव्यक्तिनिष्ठपौत्रत्वव्यक्तीनां सम्बन्धाघटकतयैव पितामहम-रणे जीवत्पितृकपौत्रव्यक्तेः स्वत्वोत्पादवारणसम्भवः, सम्बन्धाननुगम-स्यादोषतायास्त्वयैव स्वहस्तितत्वात्।

तथापि यस्य पुंसः पातित्यपूर्वार्जितधने पातित्येन स्वत्वनाशात् पुत्रमृतपैतृकपौत्रयोः स्वत्वोत्पत्तिः ततश्च पुत्रमरणं ततश्च प्रायश्चित्ता-त्पातित्यनाशः ततो धनान्तरार्जनं ततः पुनः पातित्यं ततः प्रायश्चित्तोत्त-रार्जितधने प्रथमपातित्यपूर्वंमृतपितृकपौत्रतदुत्तरपितृकपौत्रयोर्द्वयोरेव स्वत्वोत्पत्तिः, तस्य पुंसः प्रथमपातित्यपूर्वार्जितधने तत्पूर्वमृतपितृकपौ-त्रस्वत्वोत्पत्तिसमकालं तदुत्तरमृतपितृकपौत्रव्यक्तेरपि स्वत्वापत्तिर्दु-र्वारा, प्रायश्चित्तोत्तरार्जितधने स्वत्वोत्पत्त्यनुरोधेन तद्व्यक्तिस्वत्ववि-शेषं प्रत्यपि तदीयस्वत्वनाशस्य हेतुताया आवश्यकत्वात्, एवं प्रव्रज्यो-पेक्षामादायातिप्रसङ्गो दुर्वार इति चेत्।

मैवम्, पुत्रस्वत्वं प्रति पितृस्वत्वध्वंसोत्पत्तिसम्बन्धेन समवाय-

सम्बन्धेन वा कार्यसहवर्त्तितया प्रतिबन्धकत्वाभ्युपगमादिति न का-र्यानुपपत्तिरिति समासः ॥

स्वत्वविशेषं प्रति पितृमरणादिवत्स्वत्वसामान्यं प्रति जीवनमपेक्षित-मिति प्राञ्चः ।

तदसत्, मानाभावात् अजीवद्दशायां क्रयप्रतिग्रहादिरूपस्वी-कारासम्भवादेव तज्जन्यस्वत्वोत्पादासम्भवात्, अत एव स्वत्वमपेक्ष्यैव यत्र पिता मृतः तत्र पितृमरणानन्तरमेव पितृधने विद्यमानपुत्रवत् तदा-नीमजातपुत्रस्यापि युगपत्स्वत्वोत्पादः । न च भाविपुत्रोत्पत्त्यनन्तरमेव भाविपुत्रस्वत्वोत्पत्तिः न तु विद्यमानपुत्रस्वत्वोत्पत्तिसमकालमिति वा-च्यम् । प्रागुक्तयुक्त्या मरणादिजन्यपित्रादिस्वत्वनाशस्योत्पत्तिस-म्बन्धेनैव धननिष्ठतया पुत्रादिस्वत्वहेतुत्वेन भाविपुत्रोत्पत्त्यनन्तरं ततो भाविपुत्रस्वत्वोत्पत्तेरसम्भवात् स्वत्ववति स्वत्वान्तरानुत्प-त्त्या विद्यमानपुत्रस्वत्वावरुद्धत्वेन भाविपुत्रोत्पत्त्यनन्तरं भाविपुत्रस्व-त्वोत्पत्तेरसम्भवाच्च ।

अथ भाविपुत्रोत्पत्त्या विद्यमानपुत्रस्य स्वत्वं विनाश्य युगपत् स-र्वेषां पुनः स्वत्वान्तरं जन्यते, अत एवोत्पत्त्यैवार्थे स्वामित्वानुभव इति मिताक्षरायाम्, गौतमः—"यस्मिन् गर्भस्थे पिता मृतस्तस्यैव तद्विषय-त्वात्, अत एव क्वचित् जन्मनैवार्जनं यथा पित्र्यधने इति प्रवदन्ति प्रामाणिकाः, तत्रापि तस्यैव विषयत्वादिति चेन्न ।

भाविपुत्रोत्पत्तेः स्वत्वनाशकत्वस्वत्वान्तरजनकत्वयोः कल्पने विद्य-मानपुत्राणां स्वत्वान्तरकल्पने च गौरवात्, मिताक्षराधृतगौतमवचनस्य लिखितप्रामाणिकप्रवादस्य च पितृमरणोत्तरजातपैतृकदासदास्यादिज-न्यापत्यपरस्पररूपार्थविषयकत्वात् तादृशार्थे तादृशार्थोत्पत्तेरेव स्वत्व-प्रयोजकत्वात् । न च प्रकृते निरूपकतासम्बन्धस्य पातित्याद्यभावका-र्यतावच्छेदकतया पितृमरणानन्तरं तत्पुत्रनिरूपितस्वत्वविशेषस्य नि-रूपकतासम्बन्धेन तत्पुत्र इव तत्पुत्रभिन्नेऽपि उत्पत्तिवारणाय निरूपक-तासम्बन्धेन तत्पुत्रनिरूपितस्वत्वविशेषोत्पत्तिं प्रति तादात्म्यसम्बन्धेन तत्पुत्रत्वेनापि हेतुत्वावश्यकतया कथमजातपुत्रस्य पितृमरणात्स्वत्ववि-शेषोत्पत्तिः, वर्त्तमानकालस्य अनागतवस्तूनां तादात्म्यसम्बन्धेन वृत्ता-वनवच्छेदकत्वादिति वाच्यम् । तद्वारणाय तत्पुत्रत्वप्रकारकप्रमाया एव विशेष्यतासम्बन्धेन हेतुत्वाभ्युपगमात् । न च तथापि पितृमरणोत्तर-जातपुत्रस्यापि स्वत्वोत्पादे सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति बौधायनसूत्रविरोध इति वाच्यम् । तत्र सत्स्वङ्गजेष्वित्यस्य तदानीम-

मृतेष्वित्यर्थात् लक्षणाया अविशेषात्। न च सत्सु इत्यस्य विद्यमाने-ष्वित्यर्थात् न लक्षणेति वाच्यम्। तत्रापि लाघवात् सत्ताजातेरेव स-च्छब्दप्रवृत्तिनिमित्ततया लक्षणाया दुर्वारत्वात्। अस्तित्वापरनाम्नः सामान्यतः कालसम्बन्धित्वरूपस्य विद्यमानत्वस्य सत्शब्दप्रवृत्तिनि-मित्तत्वमतेऽपि प्रकृतेऽपि स्वपरकालवर्त्तमानत्वरूपविशेषपरतया लक्ष-णाया आवश्यकत्वात्, सामान्यशब्दे सामान्यरूपेण विशेषेण भ्रातृ-सुतपरत्वस्य मरणाभावकालविशिष्टत्वेऽपि सुवचत्वात्। न च तथा-पि जीवनस्य स्वत्वहेतुत्वे यत्र धातुमपेक्ष्यैवानपत्यो मृतस्तत्र भर्तृ-मरणोत्तरं तदीयधने पत्नीस्वत्वोत्पत्तिसमकालमेव चिरविलम्बि भावि पुत्रस्य स्वत्वोत्पत्तिप्रसङ्गः, पत्नीस्वत्वस्य तत्र कार्यसहभावेन प्रति-बन्धकत्वाभ्युपगमे च तदपेक्ष्य जीवनस्य हेतुता उचिता गौडीयेन तत्स्वत्वं प्रति तदनिरूपितस्वत्वस्य कार्यसहभावेन प्रतिबन्धकत्वान-भ्युगमादिति वाच्यम्। तत्र चिरविलम्बिभाविपुत्रस्यैव स्वत्वोत्पत्तेः न तु पत्न्याः,

> "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
> तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः॥
> एषामभावे पूर्वेषां धनभागुत्तरोत्तरः।
> स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥"

इति याज्ञवल्क्यवचनस्य "अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृ-गामि तदभावे मातृगामि तदभावे भ्रातृगामि तदभावे भ्रातृपुत्रगामि तदभावे बन्धुगामि तदभावे सकुल्यगामि तदभावे सहाध्यायिगामि तदभावे ब्राह्मणधनवर्जं राजगामीति" विष्णुवचनस्य च यस्य भावि-पुत्रोऽपि न सम्भवति तत्परत्वात् लाघवेन तथैव कल्पनात्। अत एव जीवनस्याहेतुत्वे एतदपि बाधकम्। तदभ्युपगमे यथोक्तस्थले पत्नी-स्वत्वस्य भाविपुत्रोत्पत्तेस्तन्नाशकत्वस्य चाधिकस्य कल्पनापत्तेः। सब्रह्मचारिणः सहाध्यायिनः, एषामिति निर्धारणे षष्ठी, अभावे पूर्वपू-र्वस्याभावे, स्वर्यातस्य मृतस्य, अपुत्रस्य पुत्रपौत्ररहितस्य, अपुत्रधनं पुत्रपौत्रप्रपौत्ररहितधनम्।

ननु स्वामिजीवनस्य स्वत्वाहेतुत्वे पितृमरणपूर्वमृतस्यापि पुत्रस्य पितृमरणोत्तरं जीवत्पुत्रस्योत्पत्तिसमकालं स्वत्वोत्पत्तिप्रसङ्गः तदीयपु-त्रत्वस्याविशेषात्। न च तदर्थं स्वामिशरीरावच्छेदेनाव्यवहितपूर्वकाल-निष्ठतया निरूपकतासम्बन्धेन स्वत्वोत्पत्तौ निमित्तमस्तु किन्तज्जीवनस्य हेतुत्वेनेति वाच्यम्, तथासति स्वजातपुत्रस्यापि स्वत्वोत्पत्तेरसम्भ-

वात् पितृमरणपूर्वमृतविद्यमानशरीरेऽपि पितृमरणोत्तरं जीवत्पुत्रस्वत्वोत्पत्तिसमकालं स्वत्वापत्तेर्दुर्वारत्वाच्च। न च पितृमरणपूर्वमृतपुत्रव्यक्तीनां स्वत्वं प्रति तदनिरूपितस्वत्वाभावस्य कार्यसहभावेन हेतुतया पितृमरणानन्तरं जीवत्पुत्रस्वत्वोत्पत्तिसमकालं न तत्स्वत्वोत्पत्तिरिति वाच्यम्। तदपेक्ष्य जीवनस्य हेतुताया लघुत्वात्, गौडीयैरपि पितृमरणानन्तरं जीवत्पुत्रव्यक्तीनां स्वत्वं प्रत्येव तदनिरूपितस्वत्वानां कार्यसहभावेन प्रतिबन्धकत्वाभ्युपगमादिति चेन्न।

जन्यतावच्छेदकभेदेन तदीयसकलपुत्रसाधारणस्य पुत्रत्वस्यैकस्याभावात् पुत्रव्यक्तीः प्रातिस्विकरूपेणोपादाय तत्तद्व्यक्तिस्वत्वविशेषं प्रति तत्तद्व्यक्तिस्वत्वनाशत्वेन हेतुतया पितृमरणपूर्वमृतव्यक्तेः स्वत्वं प्रति तत्पितृव्यक्तिस्वत्वनाशस्य हेतुत्वाकल्पनादेव पितृमरणेन तत्पूर्वमृतपुत्रव्यक्तीनां स्वत्वोत्पत्तेरसम्भवात्। यदि च तत्पुत्रत्वस्य सकलतदीयपुत्रसाधारणस्यैकस्याभावेऽपि सम्बन्धमर्यादया तस्य घटकतया सामान्यत एव तत्स्वत्वनाशस्य तदीयसकलपुत्रस्वत्वसाधारण एक एव कार्यकारणभावः सम्बन्धाननुगमस्यादोषत्वादिति विभाव्यते, तदा पितृरहितपूर्वमृतपुत्रनिष्ठजन्यताव्यक्तीनां सम्बन्धघटकतयैव पितृमरणेन तत्पूर्वमृतपुत्रस्वत्वोत्पत्तेर्वारणसम्भवः सम्बन्धाननुगमस्यादोषतायास्त्वयैव स्वहृस्तितत्वात् इति।

अथ तथापि जीवनस्य स्वत्वहेतुत्वे जीवत्पितृदशायां पित्रपेक्षितकियत्पितृधनमादाय विभक्तस्य पितृमरणपूर्वमृतस्य पुत्रस्य पितृमरणाव्यवहितोत्तरं निधित्वापन्नेऽवस्थितपितृधने निधित्वप्राप्तिद्वितीयक्षणे स्वत्वोत्पत्तिप्रसङ्गः, उत्पत्तिसम्बन्धेन पितृस्वत्वनाशस्य सत्वात्, विभागलब्धधने स्वत्वोत्पत्त्यनुरोधेन तत्पुत्रव्यक्तिस्वत्वविशेषं प्रत्यपि तत्पितृव्यक्तिस्वत्वनाशस्यावश्यं हेतुत्वात्, तत्पुत्रव्यक्तिनिष्ठजन्यताया अपि कार्यतावच्छेदककोटावश्यं निवेश्यत्वाच्च, तदानीं कस्यापि स्वत्वानुत्पादेन स्वत्वान्तरस्यापि प्रतिबन्धकताया वक्तुमशक्यत्वात्। एवं यत्र जीवत्पितृदशायां पित्रपेक्षितकियत्पितृधनमादाय विभक्तस्य द्वयादेर्मध्ये एकः पितृमरणात् पूर्वमेव मृतस्तत्र पितृमरणाव्यवहितोत्तरमवस्थिते पितृधने जीवत्पुत्रस्वत्वोत्पत्तिसमकालं पूर्वमृतपुत्रस्यापि स्वत्वोत्पत्तिप्रसङ्गो दुर्वारः, विभागलब्धधने स्वत्वोत्पत्त्यनुरोधेन मृतपुत्रस्वत्वव्यक्तिं प्रत्यपि तत्पितृव्यक्तिस्वत्वस्यावश्यं हेतुत्वात्, मृतपुत्रव्यक्तिनिष्ठजन्यताया अपि कार्यतावच्छेदकसम्बन्धघटकत्वस्यावश्यकत्वाच्च, तन्निरूपितस्वत्वं प्रति तदनिरूपितस्वत्वस्य कार्यसहभावेन प्रतिबन्धकत्वाभ्युपगमे तदपेक्ष्य जीवनस्यैव हेतुत्वमुचितं लघुत्वादिति चेन्न।

तादृशस्थलविशेषे पितृमरणपूर्वंमृतपुत्रव्यक्तीनां पितृमरणाद्युपजात-स्वत्वं प्रति तदीयजीवनस्य हेतुत्वेऽपि सर्वत्र स्वामिजीवनस्य स्वत्वहेतुत्वे मानाभावात् तादृशव्यक्तीनामनन्तत्वेनानन्तकार्यकारणभावापत्त्या सामान्यतो निरूपकत्वसमवायोभयघटितसामानाधिकरण्यप्रत्यासत्त्या जीवनस्य स्वत्वहेतुत्वे उक्तस्थले भाविपुत्रव्यक्तीनामनन्तानां स्वत्वोत्पत्तेः विद्यमानपुत्रस्वत्वान्तरजनकत्वयोः कल्पनस्य विद्यमानपुत्राणां स्वत्वान्तरकल्पनस्य च सत्वात् स्वत्वगौरवापत्तेः फलमुखगौरवस्यादोषतया नव्यैरभ्युपगमात् ।

वस्तुतः सामान्यतो निरूपकतासम्बन्धेन स्वत्वत्वावच्छिन्नं प्रति चरमप्राणशरीरसंयोगध्वंसात्मकमरणस्य विशेषणताविशेषसम्बन्धेनाभाव एव शरीरनिष्ठतया हेतुर्लाघवात् न तु जीवनं हेतुः । चरमत्वञ्च स्वजनकतावच्छेदकतया सिद्धो निखिलचरमप्राणक्रियाव्यक्तिजन्यतावच्छेदकजातिव्यापको जातिविशेषः, तादृशप्राणक्रियाजन्यगगनादिसंयोगेऽपि तत्सत्त्वे क्षतिविरहः, परकीयशरीरे च परकीयप्राणसंयोगे मानाभावः, अतीतशरीरेऽपि अतीततादशायां विशेषणताविशेषेण निरुक्तमरणं वर्त्तत एव अत्र रूपं नष्टमित्यादिप्रत्ययाभावात् आश्रयनाशजन्यगुणनाशस्य विशेषणताविशेषेणावृत्तित्वेऽपि स्वाश्रयोत्पन्नगुणादिनाशस्य विशेषणताविशेषेणाश्रयस्य वर्त्तमानतादशायामिवातीततादशायामाश्रये सत्त्वात्, अन्यथा ध्वंसप्रागभावयोरत्यन्ताभावविरोधितावादिनां प्राचां नये रूपसामान्याभाववान् घटत्वादित्यादेरसद्धेतुत्वानुपपत्तेः सर्वस्मिन् घटेऽतीततादशायां रूपध्वंसतत्प्रागभावानामसत्त्वेन तद्दशायामत्यन्ताभाववृत्तौ विरोधाभावात् । न च यदा कदाचित्ध्वंसाद्यधिकरण एवात्यन्ताभावो न वर्त्तते इति न तस्य सद्धेतुत्वमिति वाच्यम् । तथासति आश्रयस्यातीततादशायां तत्र नाशस्यानभ्युपगमे तन्नये घटस्यातीततादशायां रूपध्वंसतत्प्रागभावानामसत्त्वेन तद्दशायां घटे इदानीं रूपं नास्तीति प्रत्ययानुपपत्तेः ध्वंसप्रागभावात्यन्ताभावानां त्रयाणामेव तदानीमसत्त्वात् प्रकृते लाघवानुरोधेनैवाश्रयोत्पन्नगुणादिनाशस्याश्रयातीततादशायामप्यभ्युपगमात् बाधकविरहाच्च । मरणञ्च तत्राप्याश्रयनाशजन्यं खड्गादिच्छेदेन मरणस्थलेऽपि शरीरावयवखड्गाभिघातोत्पत्तिदशायां खड्गाभिघातोदयात् शरीरावयवसंयोगनाशोत्पत्तिसमय एव प्राणशरीरसंयोगनाशोदयात् । अत एव प्राणो हि खड्गाभिहतः सन् तत्क्रामति इति सिद्धान्त इति समासः ॥

नतु दानं स्वत्वजनकं नवेति चेदत्र प्राञ्चः दानं स्वत्वजनकमेव,

कार्य्यकारणभावस्तु तदुद्देश्यकदानत्वेन तत्स्वत्वविशेषत्वेन,विषयत्वाश्रयत्वोभयसम्बन्धेन धनघटितसामानाधिकरण्यं प्रत्यासत्तिः, अन्यथा ब्राह्मणादिसंप्रदानकदानात् ब्राह्मणादीनां दत्तद्रव्ये स्वत्वोत्पादो न स्यात् । न च प्रतिग्रहाख्यस्वीकार एव तत्र स्वत्वजनको न तु दानं, दानन्तु प्रतिबन्धकीभूतदातृस्वत्वध्वंसजननमात्रोपक्षीणं, कार्यकारणभावस्तु कर्तृत्वाश्रयत्वोभयघटितसामानाधिकरण्यप्रत्यासत्या तत्पुरुषीयप्रतिग्रहत्वेन तत्पुरुषीयस्वत्वविशेषत्वेन, प्रतिग्रहत्वस्य जातिविशेषस्य फलबलकल्प्यतया दानोत्तरस्वीकार एव तत्सत्त्वेनातिप्रसङ्गविरहादिति वाच्यम् । तथापि विनिगमनाविरहेण दानस्यापि स्वत्वविशेषहेतुताया दुर्वारत्वात् , तत्पुरुषत्वावच्छिन्नोद्देश्यकदानत्वतत्पुरुषीयप्रतिग्रहत्वयोः समशरीरतया कारणतावच्छेदकगौरवाभावात् । न च "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्ज्जयेदिति" याज्ञवल्क्यवचनेन प्रतिग्रहस्य स्वत्वजनकत्वबोधनात् तदेव विनिगमकम् , तत्र प्रतिग्रहपदस्य स्वोद्देश्यकदानपरत्वे लक्षणापत्तिरिति वाच्यम् । तद्वचनेन हि प्रतिग्रहाव्यवहितपूर्ववर्त्तिकस्वत्वस्यैव इष्टसाधनत्वं बोध्यते न तु प्रतिग्रहादेः स्वत्वजनकत्वं याजनादेः स्वत्वाजनकत्वात् ।

वस्तुतो दानमेव स्वत्वजनकं न तु प्रतिग्रहः, प्रतिग्रहस्य स्वत्वजनकत्वे यत्र दानानन्तरं विलम्बेन सम्प्रदानस्य स्वीकारः तत्र द्रव्यस्य स्वीकारात् पुर्वं निधितया अन्येन ग्रहणे तस्य तत्र स्वत्वापत्तिः, प्रत्यवायानुत्पादापत्तिश्च चौर्य्यस्यैव प्रत्यवायहेतुत्वात् ।

अथ प्रतिग्रहं विनापि दानादेव स्वत्वोत्पादे यत्र चाण्डालादिना देशान्तरस्थभद्रब्राह्मणमुद्दिश्य द्रव्यं दत्तं तत्र ब्राह्मणस्य प्रतिग्रहं विनापि स्वत्वोत्पत्त्यापत्तिः चाण्डालादिकर्तृकदानाधीनस्वत्वमात्रवृत्तिवैलक्षण्येन पापविशेषजनकतावच्छेदकतया सिद्धेन पातित्यं प्रति हेतुत्वात् पातित्यापत्तिश्च । न च पातित्यं प्रति चाण्डालीयप्रतिग्रहो हेतुर्न तु स्वत्वं तत्र पूर्वोक्तापत्तिद्वयस्यासत्वात् इति वाच्यम् । चाण्डालीयत्वस्य चाण्डालनिरूपितस्वत्वस्वरूपस्य विशेषणत्वोपलक्षणत्वविकल्पग्रस्ततया पातित्यं प्रति प्रतिग्रहहेतुत्वस्य दुर्वचत्वात्, समूहालम्बनात्मके चाण्डालद्रव्ययवनद्रव्ययोरुभयोः प्रतिग्रह परस्परविलक्षणपातित्यद्वयप्रयोजकसाङ्कर्यापत्त्या प्रतिग्रहनिष्ठवैजात्येनापि पातित्यहेतुत्वस्य दुर्वचत्वाच्चेति चेन्न ।

तत्र प्रतिग्रहं विनापि ब्राह्मणस्य स्वत्वोत्पादेऽपि पातित्यजनकतावच्छेदकस्वत्वनिष्ठवैजात्यस्य [illegible]वच्छेदकस्वत्वनिष्ठवैजात्य-

व्याप्यतायाः फलबलकल्प्यत्वेन तत्स्वत्वव्यावृत्ततया प्रत्यवायानुत्पादात्। न च तादृशस्वत्वमेव तत्र कुतो नोत्पद्यते चाण्डालकर्तृकदानस्यापरदानेनाविशेषादिति वाच्यम्। तादृशस्वत्वं प्रति तादृशेतरस्वत्वस्य कार्यसहवर्त्तितया प्रतिबन्धकत्वेन तत्र तदनुत्पादात्, अन्यथा प्रतिग्रहस्य स्वत्वजनकत्वमतेऽपि तादृशस्वत्वोत्पादस्य दुर्वारत्वात्। न च तन्मते तद्वैलक्षण्यस्य प्रतिग्रहजन्यतावच्छेदकजातिव्याप्यतया प्रतिग्रहरूपसामान्यकारणाभावादेव न तदुत्पत्तिरिति वाच्यम्। तथापि ब्राह्मणादिद्रव्यप्रतिग्रहस्थले तदुत्पादस्य दुर्वारत्वात्, चाण्डालीयत्वस्य विशेषणत्वोपलक्षणत्वविकल्पग्रस्ततया तदवच्छिन्नं प्रति चाण्डालीयद्रव्यप्रतिग्रहत्वेन कारणत्वस्य दुर्वचत्वात्, तत्र ब्राह्मणस्य स्वत्वमेव वा नोत्पद्यते स्वत्वविशेषजनकतावच्छेदकदानत्वस्य फलबलकल्प्यतया तद्व्यावृत्तत्वाभ्युपगमात् तस्य प्रतिग्रहाख्यस्वीकारोपहितत्याग एवाभ्युपगमात, अतो दानानन्तरं नियमतः प्रतिग्रहापेक्षा दानेन पुण्यजननेऽपि दक्षिणावत्प्रतिग्रहस्याप्युत्तराङ्गतया प्रतिग्रहानुपहितत्यागे दानव्यवहारस्तु भक्तेः।

एतेन स्वीकारस्य स्वत्वाहेतुत्वे देवतासम्प्रदानकदानात् देवताया गवादितिर्यक्सम्प्रदानकग्रामादिदानात् गवादितिर्यक्ष्वपि च स्वत्वापत्तिः। न चेष्टापत्तिः, कथमन्यथा देवताग्रामो हस्तिग्राम इति व्यवहार इति वाच्यम्। मनुष्येतरस्य न स्वत्वोत्पाद इति तिर्यक्प्रकरणे प्रतिपादितत्वात्, देवताया ग्राम इत्यादिव्यवहारे च देवतोद्देशेन त्यक्तस्य लक्षणया षष्ठ्यर्थत्वाद्देवतोद्देशेन त्यक्तो ग्राम इत्यर्थादित्यपि परास्तम्। तत्र दानत्वाभावात्, उद्देश्यभेदेन दानस्वत्वयोः कार्यकारणभावस्य भिन्नतया देवताद्यन्तर्भावेण दानस्य स्वत्वजनकत्वाकल्पनादेव तत्र दानत्वसत्त्वेऽपि स्वत्वोत्पादवारणसम्भवाच्च श्राद्धविवेके दायभागकारोऽप्येवमित्याहुः।

नव्यास्तु दानं न स्वत्वजनकं किन्तु प्रतिग्रहाख्यस्वीकार एव। प्रतिग्रहं विना दानस्य स्वत्वजनकत्वे श्राद्धादावपि मृतपित्रादेः स्वत्वोत्पादापत्तेः "पितृभ्यो दद्यादि"त्यादिविधौ तत्रापि दानव्यवहारेण तस्यापि दानत्वात्। न च तत्र दानपदं त्यागमात्रे भाक्तम्, मुख्ये बाधकाभावात्। न च जीवनस्य स्वत्वसामान्यहेतुतया तदभावादेव श्राद्धान्नेन मृतपित्रादेः स्वत्वोत्पत्तिरिति वाच्यम्। दानजीवनयोः स्वत्वजनकताकल्पनमपेक्ष्य प्रतिग्रहस्यैकस्य स्वत्वजनकताकल्पनाया एव युक्तत्वात्। न च प्रतिग्रहस्य स्वत्वजनकत्वे प्रतिग्रहात् पूर्वं द-

द्रव्यस्य निश्चितयाऽन्यस्याप्युपादानात् तत्र स्वत्वोत्पत्तिबलेन तद्द्रव्यग्रहणे प्रत्यवायानुत्पादापत्तिरिति बाधकात् प्रामाणिकं गौरवं न दोषाय इति वाच्यम् । प्रतिग्रहपूर्वमुपादानादन्यस्वत्वोत्पत्त्यविष्टापत्तेः, प्रत्यवायजनकतावच्छेदकस्य चौर्यत्वस्य देवतोद्देश्यकत्यक्तद्रव्यग्रहणवत्तादृशान्यग्रहणेऽपि सत्त्वेन प्रत्यवायोत्पादात् चौर्यत्वस्य परस्वत्ववद्ग्रहणत्वव्याप्यत्वे मानाभावात् देवद्रव्ये व्यभिचाराच्च । किञ्च प्रतिग्रहस्य जनकत्वं वचनसिद्धम्, यथाऽह मनुः—

"सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥" इति

वित्तागमा वित्तनिष्ठस्वत्वजनकाः, धर्म्या अधर्माजनकाः, सप्तेति तदर्थः । दायः दायत्वं मरणादिजन्यपित्रादिस्वत्वनाश इति यावत्, प्रयोगो धनं दत्वा शास्त्रोक्तलभ्यग्रहणम्, कर्मयोगः कृष्यादि, तथाचैतद्वचनानुरोधात्प्रतिग्रहस्य स्वत्वजनकत्वाभ्युपगमे किं दानस्य स्वत्वजनकत्वेन तद्बोधकस्य वचनस्य सद्भावादेतद्बोधकवचनस्य विरहाच्च । न च तत्र सत्प्रतिग्रहपदं सत्कर्तृकदानपरं, मुख्ये बाधकाभावात् । न च प्रतिग्रहस्य स्वत्वजनकत्वे यत्र देशान्तरस्थपात्रमुद्दिश्य दानानन्तरं प्रतिग्रहात् पूर्वमेव पात्रस्य नाशः तत्र तद्द्रव्ये तत्पुत्रस्य स्वत्वं न स्यात् मरणादिजन्यपित्रादिस्वत्वनाशस्य तत्राभावात् ।

परोक्षे कल्पितं दानं पात्राभावे कथं भवेत् ।
पुत्रदारेषु तद्दद्यात् अभावे गोत्रबन्धुषु ॥

इति प्रचेतोवचनेन तत्पुत्रादेः स्वत्वबोधनेन इष्टापत्तेरसम्भवात् । 'अभावे, पुत्रदाराणामभावे, गोत्रबन्धुषु दद्यादिति सम्बध्यते । तद्वचनबलात् पित्राद्यभावसहकृतपित्राद्युद्देश्यकदानजन्यस्वत्वनाशस्यापि पुत्रादिस्वत्वोत्पादकत्वकल्पने महागौरवमिति वाच्यम् । गौरवभीत्या वेदे लक्षणाकल्पने बहुतरधर्मविलोपापत्तेः । किञ्च प्रतिग्रहं विनापि दानस्य स्वत्वजनकत्वे यत्र चाण्डालेन देशान्तरस्थपात्रमुद्दिश्य द्रव्यदानानन्तरं चिरविलम्बेन पात्रस्य प्रतिग्रहः तत्र प्रतिग्रहात्पूर्वमेव पात्रस्य स्वत्वोत्पत्त्या तत्पूर्वमेव पतितत्वापत्तिरिष्टापत्तौ प्रतिग्रहात्पूर्वमेवाव्यवहार्यतापत्तिः, तत्पूर्वं तज्जन्यपुत्रादेरपि पतितोत्पन्नतया पतितत्वापत्तिश्च । तस्माद्दानं प्रतिबन्धकीभूतदातृस्वत्वनाशकं प्रतिग्रहश्च स्वत्वोत्पादक इत्येव युक्तमिति प्राहुः ।

इति दाने स्वत्वजनकत्वखण्डनवाद ( ३५ ) वीचिः समाप्तः ।

## अथ विषयतावाद(३६)वीचिः ।

॥ श्रीविश्वेश्वराय नमः ॥

विषयता च स्वरूपसम्बन्धविशेषो ज्ञानादीनां विषयेण, न त्वतिरिक्ता मानाभावादिति प्राञ्चः । तदसत् । तथाहि विषयताया ज्ञानस्वरूपत्वे घटवद्भूतलमित्यादिज्ञाननिरूपितानां घटभूतलादिवृत्तिविषयतानामभेदापत्त्या तादृशज्ञानानन्तरं घटप्रकारकज्ञानवानहमित्यादिप्रतीतिवद् भूतलप्रकारकज्ञानवानहमित्यादिप्रत्ययप्रसङ्गात्, घटनिष्ठप्रकारताख्यतज्ज्ञानरूपविषयताया एव भूतलवृत्तित्वात् । एवं घटपटावित्यादिसमूहालम्बनधियो भ्रमत्वापत्तिश्च, पटनिष्ठतज्ज्ञानरूपविशेष्यताया घटनिष्ठघटत्वप्रकारतानिरूपिततज्ज्ञानरूपविशेष्यत्वाभिन्नतया तादृशज्ञानस्य घटत्वप्रकारतानिरूपितपटनिष्ठविशेष्यताशालित्वात् । विषयस्वरूपत्वे च घटभूतलसंयोगा इत्याकारकसमूहालम्बनज्ञानीयघटादिनिष्ठतत्स्वरूपविषयतानां घटवद्भूतलमित्यादिविशिष्टबुद्धिनिरूपितघटादिनिष्ठविषयतानां च तत्स्वरूपत्वेनाविलक्षणतया समूहालंबनविशिष्टबुद्ध्योर्वैलक्षण्यानुपपत्तेः । न च विशिष्टज्ञाने सम्बन्धसम्बन्धोऽप्यधिको भासते न तु समूहालम्बने इत्यत एव तयोर्वैलक्षण्यमुपपद्यत इति वाच्यम् । सम्बन्धसम्बन्धमादायापि समूहालम्बनसम्भवात् । तस्मात् ज्ञानविषयाभ्यामतिरिक्तमेव विषयत्वमिति अनन्यगतिकतया स्वीकरणीयम् । तच्चाश्रयतया विषये ज्ञाने च निरूपकतया वर्त्तत इति ॥ एतेन विषयित्वमपि व्याख्यातम् । न च विषयताप्रतियोगित्वमेव विषयित्वमस्तु, किं तस्यातिरिक्तत्वस्वीकारेणेति वाच्यम् । विषयित्वमेवातिरिक्तं तत्प्रतियोगित्वमेव विषयत्वमित्यस्यापि सुवचत्वात् । तस्माद्विनिगमनाविरहेणोभयमप्यतिरिक्तम् ॥ विषयत्वादिकं तु विषयभेदेन भिद्यते, अन्यथा घटवद्भूतलमित्यादिज्ञानीयघटभूतलादिविषयतानां घटपटावित्यादिज्ञानीयविषयतानाञ्चाभेदप्रसङ्गेन पूर्वोक्तानुपपत्तितादवस्थ्यात्, नतु ज्ञानभेदेनापि तद्भेदः, मानाभावात् ॥ तच्च द्विविधं विषयत्वानिरूपितं तन्निरूपितं च । तत्र निर्विकल्पकनिरूपितविषयता विषयत्वानिरूपिता, निर्विकल्पकघटत्वादिविषयतायां घटादिविषयतानिरूपितत्वे मानाभावात् । विशिष्टबुद्धिविषयताश्च विषयत्वान्तरनिरूपिताः, प्रकारताविशेष्यतासंसर्गतारूपाणां तासां परस्परनिरूप्यनिरूपकभावसत्त्वात्, अन्यथा घटवद्भूतलं पर्वतो वह्निमानित्याकारकज्ञानविषयताया घटवान् पर्वतो वह्निमद्भूतलमित्याकारकज्ञानविषयतायाश्च अवैलक्षण्यप्रसङ्गात्, मन्मते प्रथमे घटप्रकारत्वभूतलविशेष्यत्वयोर्वह्निप्रकारत्वपर्वतविशेष्यत्वयोश्च प-

त्वपरनिरूप्यनिरूपकभावः, द्वितीये च घटप्रकारत्वपर्वतविशेष्यत्वयोर्व-ह्निप्रकारत्वभूतलविशेष्यत्वयोरिति वैलक्षण्योपपत्तिः । एवं घटवद्भूतलं घटवान् पर्वत इत्यादिसमूहालंबने घटादिरूपैकप्रकारनिष्ठप्रकारताया अपि भूतलपर्वतादिविशेष्यताभेदेन, घटवद्भूतलं पटवच्चेत्यादिसमू-हालंबने च भूतलाद्येकविशेष्यनिष्ठविशेष्यताया अपि घटपटादिप्रकार-ताभेदेन भेदो बोध्यः, उभयविशेष्यतानिरूपितत्वस्यैकप्रकारतायामुभय-प्रकारतानिरूपितत्वस्य चैकविशेष्यतायां स्वीकारे तादृशसमूहालम्बना-दावतिरिक्तविषयताकल्पनप्रसङ्गात्, मन्मते तु घटवद्भूतलमित्याद्या-कारकप्रत्येकज्ञाननिरूपिताभ्यां प्रत्येकविशेष्यतानिरूपितप्रकारताभ्यां प्रत्येकप्रकारतानिरूपितविशेष्यताभ्यामेवोपपत्तेः । समूहालम्बने प्रकार-ताभेदेन विशेष्यताभेदस्यानुपगमे घटवद्भूतलं पटवच्चेत्यादिसमूहा-लम्बनादेकत्र द्वयमिति रीत्या एकधर्मिणि नानाधर्मवैशिष्ट्यावगाहिनो घटवद्भूतलं पटवदित्यादिज्ञानस्यावैलक्षण्यप्रसङ्गः, मन्मते तु समूहा-लंबने प्रकारताभेदेन विशेष्यताभेदो न त्वेकत्र द्वयमितिरीत्या तादृशबोध इति समूहालंबनतस्तस्य वैलक्षण्योपपत्तिरिति ।

विशेष्यत्वं प्रकारत्वं च द्विविधम् किञ्चिद्धर्मावच्छिन्नं निरवच्छिन्नं च । तत्र किञ्चिद्धर्मावच्छिन्नविशेष्यता भूतलत्वाद्येकविशेषणविशिष्टे घटादिरूपापरधर्मावगाहिज्ञाने, तत्र घटादिप्रकारतानिरूपितभूतलविशे-ष्यताया भूतलत्वाद्यवच्छिन्नत्वात्, अन्यथा केवलमेकत्र द्वयमिति रीत्या तदुभयवैशिष्ट्यावगाहिनो भूतलं घटवदिति ज्ञानात् विशिष्टवैशिष्ट्यबो-धस्य वैलक्षण्यानुपपत्तिः । किञ्चिद्धर्मावच्छिन्नप्रकारता च विशिष्टनि-रूपितवैशिष्ट्यावगाहिनि घटवदित्याकारकज्ञाने, तत्र घटादिप्रकारताया घटत्वाद्यवच्छिन्नत्वात्, अन्यथा केवलं विशेष्ये विशेषणं तत्र च विशेष-णान्तरमिति रीत्या घटघटत्वाद्यवगाहिनस्तथाविधज्ञानाद्विशिष्टवैशिष्ट्य-बोधस्य वैलक्षण्यानुपपत्तिः । प्रपञ्चितं चेदमन्यत्र । तदंशे विशेषणताप-न्नस्यैव तन्निष्ठविषयतावच्छेदकत्वमिति बोध्यम् । तद्धर्मावच्छिन्न-विशेष्यता च न तद्धर्मप्रकारतानिरूपिता, तस्यास्तथात्वे मानाभावात् । न चैवं भूतलं घटवदित्यादिज्ञानानां भूतलत्वादिप्रकारतानिरूपितविशे-ष्यताशालित्वानुपपत्तिरिति वाच्यम् । केवलमेकत्र द्वयमितिरीत्या भूत-लत्वघटवैशिष्ट्यावगाहिज्ञानीयभूतलत्वाद्यनवच्छिन्नभूतलत्वादिप्रकार-तानिरूपितविशेष्यतानियामकसामग्र्या अपि तादृशविशिष्टवैशिष्ट्यबो-धपूर्वकाले सत्त्वात्तस्य तादृशविषयताशालित्वस्यावश्यकत्वात् ।

वस्तुतस्तु विशिष्टवैशिष्ट्यबोधविचारे निरवच्छिन्नविषयत्वादीनां

निखिलविशिष्टवैशिष्ट्यबोधसाधारण्यस्य खण्डितत्वात्, तादृशविशेष्यताशून्यबोधस्य भूतलत्वादिप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालित्वोपपत्तये भूतलत्वावच्छिन्नविशेष्यताया एव तत्प्रकारतानिरूपितत्वं स्वीकरणीयम्।

अथैतादृशज्ञानस्य भूतलत्वप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालित्वात् भूतलत्वादिविशिष्टे वैशिष्ट्यावगाहिनो भूतलं भूतलमित्याकारकज्ञानाद् भूतलं घटवदित्याकारकज्ञानस्य वैलक्षण्यानुपपत्त्या तादृशज्ञानानन्तरं भूतलत्वविशिष्टे भूतलत्ववैशिष्ट्यावगाहिस्मरणस्यापत्तिरिति चेन्न। घटवद्भूतलमित्याद्याकारज्ञानीयभूतलत्वावच्छिन्नविशेष्यताया भूतलत्वप्रकारतानिरूपितत्वेऽपि तस्या भूतलत्वावच्छिन्नत्वविशिष्टविशेष्यतात्वेन न तन्निरूप्यत्वं, किन्तु भूतलविशेष्यतात्वेनैव, भूतलं भूतलमित्यादौ च भूतलत्वावच्छिन्नविशेष्यताया भूतलत्वावच्छिन्नत्वविशिष्टविशेष्यतात्वेन भूतलत्वप्रकारतानिरूप्यत्वोपगमात् तावतैव वैलक्षण्योपपत्तेः।

अवच्छेदकत्वमपि द्विविधं सावच्छिन्नं निरवच्छिन्नं च। तत्र सावच्छिन्नमवच्छेदकत्वं 'जातिमद्घटवदि'त्यादौ, तत्र भूतलत्वादिनिष्ठविशेष्यतावच्छेदकताया जातित्वावच्छिन्नत्वात्। 'भूतलं घटवदि'त्यादिज्ञानीयभूतलत्वादिनिष्ठविशेष्यतावच्छेदकत्वादिकं तु निरवच्छिन्नमिति। एवमवच्छेदकतानिरूपितावच्छेदकतात्वमपि व्याख्यातम्। अवच्छेदकतावच्छेदकं तु अवच्छेदकांशे विशेषणतापन्नमेवेति बोध्यम्।

विषयतावद्विशेष्यतादिभेदेनाननुगतानां विषयतानामनुगमकं विषयतात्वमपि अतिरिक्तमास्थेयम्, अन्यथा घटो ज्ञानविषयः पटो ज्ञानविषय इत्याकारिकाया अनुगताकारप्रतीतेरनुपपत्तेः, घटत्वादिविशिष्टबुद्धित्वावच्छिन्नं प्रति घटत्वादिविषयकज्ञानत्वादिना हेतुतानुपपत्तेः, घटत्वाद्येकैकवृत्तिविषयतानामेव प्रकारताविशेष्यताभेदेन नानाविधतया कारणतावच्छेदकाननुगमेन व्यभिचारप्रसङ्गात्।

एवं विषयतात्ववत्तदवान्तरावच्छेदकतात्वप्रकारतात्वविशेष्यतात्वादिकमपि अनुगतप्रतीतिबलात् अतिरिक्तमुपगन्तव्यम्, अत एव पर्वतत्वाद्यवच्छिन्नविशेष्यताकवह्न्याद्यनुमितित्वावच्छिन्नं प्रति पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमादिप्रकारताशालिज्ञानत्वादिना अनुगतहेतुत्वकल्पनमुपपद्यते, अन्यथा तत्तद्धूमादिभेदभिन्नानां प्रकारत्वादीनामननुगमेन तदनुपपत्तः॥ प्रकारतात्वविशेष्यतात्वादिकं च न मिथो विरुद्धं, घटवद्भूतलमित्यादिज्ञाने घटत्वादिप्रकारतानिरूपित-

घटादिनिष्ठविशेष्यताया एव भूतलत्वाद्यवच्छिन्नविशेष्यतानिरूपितप्रकारतारूपतया तत्र विशेष्यतात्वप्रकारतात्वयोः समावेशात्। तत्र तादृशप्रकारताविशेष्यत्वयोर्भेदे 'घटवद्भूतलं द्रव्यं च, द्रव्यवद् भूतलं घटश्चे'ति ज्ञानयोर्वैलक्षण्यानुपपत्तेः, उभयत्रैव घटत्वप्रकारतानिरूपिताया द्रव्यत्वप्रकारतानिरूपिताया एव घटविशेष्यताया घटत्वप्रकारतानिरूपितभूतलविशेष्यतायाश्च सत्त्वात्, मन्मते प्रथमे घटत्वप्रकारतानिरूपिता घटविशेष्यता भूतलनिष्ठविशेष्यतानिरूपितप्रकारत्वाभिन्ना द्रव्यत्वप्रकारतानिरूपितविशेष्यता च तद्भिन्ना, द्वितीये द्रव्यत्वप्रकारतानिरूपितघटविशेष्यता भूतलविशेष्यतानिरूपितप्रकारत्वाभिन्ना घटत्वप्रकारतानिरूपितविशेष्यता च तद्भिन्ना इति वैलक्षण्योपपत्तिः। एवं 'रक्तदण्डवान् पुरुष' इत्याकारकज्ञाने रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यतैव पुरुषविशेष्यतानिरूपितप्रकारतारूपा, तद्भेदे 'रक्तो दण्डः दण्डवान् पुरुष' इत्यादिसमूहालम्बनात् तादृशविशिष्टबुद्धेर्वैलक्षण्यानुपपत्तेः, उभयत्रैव रक्तत्वप्रकारतानिरूपितदण्डविशेष्यताया दण्डप्रकारतानिरूपितपुरुषविशेष्यतायाश्च सत्त्वादिति।

केचित्तु विशेष्यताप्रकारतावत् उद्देश्यताविधेयत्वे अपि विषयताविशेषौ। न च किञ्चिद्धर्मावच्छिन्नविशेष्यत्वमेवोद्देश्यत्वं, तादृशविशेष्यतानिरूपितप्रकारत्वमेवविधेयत्वमस्तु, किं तयोरतिरिक्ततास्वीकरणेनेति वाच्यम्। तथासति 'वह्निमान् पर्वतो घटवानि'त्याद्यनुमितेः पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्न्यादिविधेयताशालित्वात् 'पर्वतो वह्निमानि'त्याकारकानुमित्यनन्तरमिव तादृशानुमित्यनन्तरमपि पर्वते वह्निमनुमिनोमीत्याकारकानुव्यवसायापत्तेः, मन्मते तादृशज्ञानव्यावृत्तायाः पर्वतादिविशेष्यतानिरूपितप्रकारताविलक्षणायाः पर्वतादिनिष्ठोद्देश्यतानिरूपितवह्न्यादिविधेयताया एव तादृशानुव्यवसायविषयत्वाभ्युपगमात् तत्र तदभावादेव तादृशानुव्यवसायापत्त्यसम्भवात्।

अथ पर्वतविशेष्यकवह्निप्रकारकानुमितित्वमेव तादृशानुव्यवसायविषयः, विषयतासम्बन्धेन तादृशानुव्यवसायं प्रति च पर्वतविशेष्यकवह्निव्याप्यवत्ताज्ञानजन्यानुमितित्वेन तादात्म्यप्रत्यासत्त्या हेतुत्वोपगमात् न 'वह्निमान् पर्वतो घटवान्' इत्याकारकानुमित्यनन्तरं तथाविधानुव्यवसायापत्तिरिति किमतिरिक्तविधेयतया। न च तादृशगुरुधर्मावच्छिन्नस्य तथाविधानुव्यवसाये हेतुत्वकल्पनापेक्षया पर्वतविशेष्यतानिरूपितवह्निविधेयताकानुमितिहेतुत्वकल्पने लाघवादतिरिक्तविषयता सेत्स्यतीति वाच्यम्। लाघवमात्रेणातिरिक्तविषयतासिद्धौ धूमपरामर्श-

जन्यतावच्छेदकतयापि विलक्षणविषयतासिद्धिप्रसङ्गात्, क्लृप्तविषयतायास्तज्जन्यतावच्छेदकत्वे तस्या आलोकादिलिङ्गकानुमितिसाधारणतया तत्र व्यभिचारवारणायाऽव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटिप्रवेशे महागौरवप्रसङ्गात्। अथातिरिक्तविधेयतानभ्युपगमे सिद्ध्यभावजन्यतावच्छेदकं दुर्वचम्, तथाहि पर्वतो वह्निमानित्यादिसिद्ध्यभावजन्यतावच्छेदकं न पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निप्रकारकानुमितित्वं, 'वह्निमान् पर्वतो घटवानि'त्येतादृशानुमितौ व्यभिचारात्। नापि पर्वतत्वावच्छिन्नविशेष्यताकवह्निव्याप्यवत्ताज्ञानजन्यानुमितित्वं, 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान् घटव्याप्यवांश्चे'त्याकारकसमूहालम्बनजन्यायां तथाविधानुमितौ व्यभिचारादिति चेन्न। वह्नित्वान्यधर्मावच्छिन्नप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकानुमितित्वस्यैव पर्वतो वह्निमानित्येतादृशसिद्ध्यभावजन्यतावच्छेदकत्वसम्भवात्, वह्निमान् पर्वतो घटवानित्याकारकानुमितिनिष्ठविशेष्यताया वह्नित्वान्यघटत्वावच्छिन्नप्रकारतानिरूपितत्वेन व्यभिचारानवकाशात्। न चैवमपि 'वह्निमत्पर्वतवान् देश' इत्याकारकानुमितौ व्यभिचारो दुरुद्धर एव तादृशानुमितिविशेष्यताया वह्नित्वान्यधर्मावच्छिन्नप्रकारत्वानिरूपितत्वादिति वाच्यम्। तादृशमुख्यविशेष्यताया एव निवेशनीयत्वात्। न चैतदपेक्षया पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयतायास्तादृशसिद्ध्यभावजन्यतावच्छेदकत्वे लाघवात् तत्सिद्धिरिति वाच्यम्। लाघवेनातिरिक्तविषयतासिद्धेः प्रागेव निराकृतत्वादिति चेत्।

मैवम्, अतिरिक्तविधेयतानभ्युपगमे वह्निं नानुमिनोमीतिप्रतीतेरनुमितिनिष्ठो वह्निप्रकारकत्वाभाव आत्मनिष्ठो वह्निप्रकारकानुमितित्वावच्छिन्नाभावो वा विषयो वाच्यः, तथा च वह्निमान् पर्वतो घटवान् वह्निमत्पर्वतवान् देश इत्याद्यनुमितिकाले तथाविधप्रतीतेरनुदयप्रसङ्गः, तादृशानुमितौ वह्निप्रकारकत्वाभावस्यात्मनि च तथाविधानुमितित्वावच्छिन्नाभावस्यासत्त्वात्, मम तु वह्निविधेयकत्वाभावस्यानुमितौ वह्निविधेयकानुमितित्वावच्छिन्नाभावस्यात्मनि तादृशप्रतीतिविषयत्वोपगमान्नानुपपत्तिः। न च तदानीं भ्रमरूपा तादृशप्रतीतिरभ्युपेयते तत्र विषयासत्त्वमकिञ्चित्करमिति वाच्यम्। यथाकथञ्चित् प्रमात्वस्य शक्योपपादनत्वे प्रतीतेर्भ्रमत्वकल्पनाया अन्याय्यत्वात्। न च वह्निव्याप्यवत्ताज्ञानजन्यानुमितित्वावच्छिन्नाभावस्यैव तद्विषयत्वोपगमात् तादृशानुमितेश्चातथात्वात् अतिरिक्तविधेयतानभ्युपगमेऽपि न तथाविधप्रत्ययानुपपत्तिरिति वाच्यम्। तथासत्यपि पूर्वोक्तसमूहालम्बनज्ञानजन्यतथावि-

धानुमिस्यनन्तरं निरुक्तप्रतीत्यनुपपत्तेस्तादवस्थ्यात्, अनुमितिपरामर्शयोः कार्यकारणभावाग्रहदशायामपि तादृशप्रत्ययस्य सर्वानुभवसिद्धत्वेन तादृशाभावस्य विषयत्वासम्भवाच्च ।

अथैवमपि विधेयत्वमेवातिरिक्तमास्ताम् उद्देश्यत्वं तु विशेष्यत्वमेवास्तु, किञ्च विधेयतावद् विधेयतात्वमपि अतिरिक्तमवश्यं स्वीकरणीयम्, अन्यथा विधेयतानां तत्तद्विधेयादिभेदेन भिन्नतयाऽननुगमात् तद्घटितोपदर्शितधर्मावच्छिन्नप्रतियोगिताकाभावस्यैकत्वासम्भवात्, अभावकूटस्य च दुर्ज्ञेयतया तादृशप्रतीत्यनुपपत्तितादवस्थ्यात्, तथाचातिरिक्तविधेयत्वादिकमनर्थकं, पर्वतो वह्निमान् इत्यादिप्रत्यक्षादिसाधारणवह्न्यादिप्रकारतायां विधेयतात्वस्वीकारेणैवोपपत्तेः। न च तादृशप्रत्यक्षादिसाधारणवह्न्यादिप्रकारतातो वह्निमान् पर्वतो घटवानित्यादिज्ञानीयवह्निप्रकारतायां वैलक्षण्ये मानाभावात् तत्र विधेयतात्वस्वीकारे तथाविधानुमितिदशायां वह्निं नानुमिनोमीत्यादिव्यवसायानुपपत्तितादवस्थ्यम् । 'वह्निमान् पर्वतो घटवानित्या'दिज्ञानीयवह्निप्रकारताया घटादिप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपिततया पर्वतो वह्निमानित्यादिज्ञानीयवह्न्यादिप्रकारतायाश्चातथात्वेन तयोर्भेदस्यावश्यकत्वादिति चेत् ।

नैवम्, प्रकारताद्यतिरिक्तविधेयतानभ्युपगमे पर्वते वह्निरित्यादिवाक्यजन्यशाब्दबोधस्य वह्न्यादिविधेयकपर्वतोद्देश्यकत्वाद्यनुपपत्तेरतिरिक्तविधेयत्वादिकल्पनमावश्यकमेव। न च तत्र नास्त्येव पर्वतवह्न्योरुद्देश्यविधेयभावः किन्तु विशेष्यविशेषणभावापन्नयोर्वह्निपर्वतवृत्तित्वयोरेवेति वाच्यम्। शाब्दबोधस्थले प्राङ्निर्दिष्टस्यैवोद्देश्यतया चरमनिर्दिष्टपदार्थस्यैव विधेयतया तादृशवाक्यजन्यशाब्दबोधे वन्हिपर्वतवृत्तित्वयोरुद्देश्यविधेयभावासम्भवात्, अन्यथा 'वह्निः पर्वते पर्वते वन्हि'रित्येतादृशवाक्यजन्यशाब्दबोधयोर्विशेषणविशेष्यभावावैलक्षण्येन लक्षणानुपपत्तेः, अत एव गुणानां गुणत्वमित्यत्र गुणत्वस्यैवोद्देश्यतावच्छेदकत्वं तस्यैव विधेयत्वमित्यभिप्रायेण ग्रन्थकृता उद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबोधानुपपत्तिराशङ्किता । यदि च विशेष्यविशेषणभावापन्नयोरेवोद्देश्यविधेयभावस्तदा तत्र गुणस्वत्वस्य विशेष्यतावच्छेदकतया गुणवृत्तित्वत्वस्य च विशेषणतावच्छेदकतया गुणत्वस्यातथात्वेन तदत्यन्तासङ्गतमेव स्यात् । एवं विधेयत्वादीनां प्रकारताविशेषादिरूपत्वे इतरत्वव्यापकीभूताभावप्रतियोगिमती पृथिवीत्यादिपरामर्शजन्यायाः पृथिव्यामितरभेद इत्याकारिकाया अनुमितेस्तद्विधेयकत्वा-

नुपपत्त्या तदुत्तरमितरभेदं नानुमिनोमीत्याकारकव्यवसायापत्तिः। न च तादृशज्ञानीयेतरभेदविशेष्यतायामेव विधेयतात्वोपगमान्न तादृशानुमितेरितरभेदादिविधेयकत्वानुपपत्तिरिति वाच्यम्। तथासति पृथिवीव्याप्यवानितरभेद इत्याकारकपरामर्शजन्याया आधेयतासम्बन्धेन पृथिव्यादिसाध्यकतथाविधानुमितेरपि इतरभेदादिविधेयकत्वापत्तेः, तथाविधानुमित्योर्विशेष्यतावैलक्षण्याभावादिति।

अथ पर्वते वह्निरिति शाब्दबोधे पृथिव्यामितरभेद इत्याद्यनुमितौ चातिरिक्तविधेयत्वादिसिद्धावपि 'पर्वतो वह्निमान् पृथिवीतरभेदवतो'त्याद्याकारकानुमित्यादौ प्रकारत्वाद्यतिरिक्तविधेयत्वादौ मानाभावः। वह्न्यादिवृत्त्यैकैकप्रकारत्वादिनिरूपकीभूतानन्तानुमित्यादिव्यक्तिषु अतिरिक्तविषयताकल्पनापेक्षया तादृशप्रकारत्वादौ विधेयतात्वादिकल्पनाया एवोचितत्वात् इति चेन्न।

प्रत्यक्षादिसाधारणप्रकारतायां विधेयतात्वाङ्गीकारेऽनुमित्यादिस्थले बाधबुद्धीनां प्रतिबन्धकतायामिच्छाधीनप्रत्यक्षे व्यभिचारवारणाय प्रत्यक्षान्यत्वस्य प्रतिबध्यतावच्छेदककोटौ निवेशनीयतया गौरवप्रसङ्गात्। मन्मते विधेयताया एव तादृशप्रतिबध्यतावच्छेदककोटौ निवेशनीयतया तस्याश्च प्रत्यक्षसाधारण्यानभ्युपगमेनाहार्यप्रत्यक्षे व्यभिचारविरहेण प्रत्यक्षान्यत्वस्यानिवेशात्। न च परोक्षत्वजातेः प्रतिबध्यतावच्छेदकत्वोपगमेनैवाहार्यत्वप्रत्यक्षे व्यभिचारवारणसम्भवेन मयापि प्रत्यक्षान्यत्वं न निवेश्यत इति वाच्यम्। परोक्षत्वजातेरन्यत्र दूषितत्वात्।

अथ लाघवेनातिरिक्तविधेयतासिद्धेः प्रागेव निरस्तत्वात् कथमेतादृशयुक्त्या तादृशानुमित्यादावतिरिक्तविधेयता सिद्ध्यतीति चेन्न।

एतादृशयुक्त्या तादृशविषयता न कल्प्यते, किन्तु पर्वते वह्निः पृथिव्यामितरभेद इत्याकारकशाब्दानुमित्योः पूर्वोक्तयुक्त्या सिद्धस्य विषयताविशेषस्य पर्वतो वह्निमान् पृथिवी इतरभेदवतीत्याकारकानुमित्यादावेतादृशलाघवेन सम्बन्धः कल्प्यत इति न काप्यनुपपत्तिरिति।

अथ पृथिव्यामितरभेदः पृथिवीतरभेदवतीत्याकारकानुमित्योरेकविधेयतास्वीकारे साध्यप्रसिद्धेः साध्यविशेष्यकानुमितौ प्रतिबध्यतावच्छेदकं दुर्वचं, तथाहि इतरभेदज्ञानस्य प्रतिबध्यतावच्छेदकं यदीतरभेदविशेष्यकानुमितित्वं, तदा इतरभेदः पृथिवीव्याप्यवानित्यादिपरामर्शजन्येतरभेदपक्षकानुमितौ व्यभिचारः, इतरभेदविधेयकत्वे सति तद्विशेष्यकानुमितित्वस्य प्रतिबध्यतावच्छेदकत्वेऽपि 'पृथिवी इतरभेदव्याप्यवती इतरभेदः पृथिवीव्याप्यवानि'त्याकारकसमूहालम्बनज्ञानजन्यायां 'पृथिवी-

इतरभेदवती पृथिव्यामितरभेद' इत्याकारकसमूहालम्बनानुमितौ व्यभिचारः, तादृशानुमितेरितरभेदविधेयकत्वात्तद्विशेष्यकत्वाच्च, मन्मते तु प्रकारताभिन्नेतरभेदविधेयता इतरभेदज्ञानप्रतिबध्यतावच्छेदिकेति न व्यभिचारः, तादृशसमूहालम्बनानुमितिनिरूपितेतरभेदविधेयतायाः प्रकारतारूपतया तदन्यत्वाभावादिति चेन्न ।

इतरभेदविशेष्यकपरामर्शजन्येतरभेदविशेष्यकानुमितित्वस्यैव मम मते इतरभेदज्ञानप्रतिबध्यतावच्छेदकत्वोपगमात् । पृथिवीव्याप्यवानितरभेद इत्याकारकपरामर्शजन्यानुमितेरितरभेदविशेष्यकपरामर्शजन्यत्वेन व्यभिचारानवकाशात् । नचैतादृशगुरुधर्मस्य साध्यप्रसिद्धिप्रतिबध्यतावच्छेदकत्वे गौरवात् पृथिवीतरभेदवतीत्याकारकानुमितिप्रत्यक्षादिसाधारणेतरभेदप्रकारतायां विधेयतात्वकल्पनमेवोचितमिति वाच्यम् । तथासति धर्मितावच्छेदकभेदेनानन्तबाधबुद्ध्यादिप्रतिबन्धकतायां प्रतिबध्यतावच्छेदककोटौ प्रत्यक्षान्यत्वनिवेशे गौरवात् तदपेक्षया धर्मिविशेषामिश्रितसाध्यप्रसिद्धिप्रतिबन्धकतायां तादृशधर्मस्य प्रतिबध्यतावच्छेदककोटौ निवेशनस्योचितत्वात् ॥

एवमापत्तिस्थले आपाद्यत्वमपि विषयताविशेषः, आपत्तिनिरूपितप्रकारतासामान्यस्यापाद्यतारूपत्वे वह्निमान् पर्वतो घटवान् स्यादित्याकारकापत्तेरपि वह्न्यादेरापाद्यत्वापत्तिः, पर्वतो वह्निमानित्याकारकवह्न्याद्यवच्छिन्नविशेष्यताशालिज्ञानीयप्रकारताविलक्षणवन्ह्यादिप्रकारतायास्तत्रोपगमेऽपि वह्निमान् पर्वतः पर्वतो घटवान् स्यादित्याकारकापत्तौ वन्ह्यादेस्तथात्वापत्तेर्दुर्वारत्वात् ।

अथ स्वव्यतिरेकनिर्णयजन्यतदापत्तिविषयत्वमेव स्वस्य तदापत्तिनिरूपितमापाद्यत्वमस्तु किमतिरिक्तविषयतास्वीकारेण, उक्तापत्तौ च घटव्यतिरेकनिर्णयस्यैव हेतुतया वन्ह्यादेस्तदापत्त्यसम्भवादिति चेन्न ।

स्वव्यतिरेकनिर्णयजन्यत्वानुपस्थितावपि वन्ह्यादिनिष्ठापाद्यत्वावगाहिनो वह्निमापादयामीत्यनुव्यवसायस्यानुभवसिद्धतया आपाद्यत्वस्य स्वव्यतिरेकनिर्णयजन्यतदापत्तिविषयतारूपत्वासम्भवात् ।

अथ वह्न्यादिप्रकारकापत्तित्वमेव तादृशानुव्यवसायविषयः, उक्तधर्मप्रकारतानिरूपितविषयतासम्बन्धेन तादृशानुव्यवसायं प्रति वन्ह्यभाववत्तानिर्णयजन्यताया हेतुत्वान्नोपदर्शितसमूहालम्बनाद्यनन्तरं तादृशानुव्यवसायप्रसङ्गः । आपत्तित्वं च मानसत्वव्याप्यो जातिविशेषः वह्निमापादयामीत्याद्यनुव्यवसायसाक्षिक एव । न चातिरिक्तविषयताया अनभ्युपगमे वह्न्यादिव्याप्यवत्तानिर्णयादिजन्यतावच्छेदकं वह्न्यादि-

प्रकारकापत्तित्वमेव वाच्यं, तथाच तादृशसमूहालम्बनापत्त्यादौ व्यभिचार इति वाच्यम्। अनुमितिस्थलीयकार्यकारणभाव इव कारणवैशिष्ट्यं निवेश्यैव व्यभिचारस्य वारणीयत्वात्, भवन्मतेऽप्यन्यापादककापत्तौ व्यभिचारवारणाय तद्वैशिष्ट्यनिवेशस्यावश्यकत्वात्। एवं वह्न्यभावादिमत्तानिर्णयजन्यतावच्छेदककोटावपि तद्वैशिष्ट्यस्य निवेशनीयतया न तस्य समूहालम्बनादौ व्यभिचारः। भवन्मतेऽपि वह्निमद्भेदादिनिर्णयजन्यवह्न्याद्यापत्तौ व्यभिचारवारणाय तद्वैशिष्ट्यनिवेशस्यावश्यकत्वात्। न च पर्वतत्वावच्छिन्नविशेष्यकवह्निविशिष्टबुद्धौ पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावादिमत्तानिर्णयाभावहेतुतायां पर्वतो वह्निमान् स्यादित्यापत्तौ व्यभिचारवारणाय पर्वतत्वावच्छिन्नविशेष्यकवह्न्यापत्त्यन्यत्वं जन्यतावच्छेदककोटौ निवेश्यमिति तज्जन्यतावच्छेदककोटिप्रविष्टतया विषयताविशेषसिद्धिः, वह्निप्रकारकापत्त्यन्यत्वस्य तत्र निवेशे वह्निमान् पर्वतः पर्वतो घटवान् स्यादित्यादिसमूहालम्बनानां तादृशबाधदशायामापत्तिरिति वाच्यम्। जन्यतासम्बन्धेन वह्न्यभाववत्तानिर्णयवदन्यत्वस्यैव तत्र निवेशनीयतया व्यभिचारापत्तेर्वारणसम्भवात्। जन्यत्वनिवेशापेक्षया विषयिताविशेषनिवेशे लाघवात्तत्सिद्धिरिति तु न वाच्यम्। कार्यतावच्छेदकलाघवेनातिरिक्तविधेयतासिद्धौ तत्तदापादकवत्ताज्ञानजन्यतावच्छेदकतयापि विषयताविशेषसिद्धिप्रसङ्गात्।

वस्तुतस्तु बाधाभावजन्यतावच्छेदककोटौ जन्यतासम्बन्धेन बाधवदन्यत्वनिवेशनमेवोचितम्। न च बाधकालीने बाधहेतुताया अप्रामाणिकतया तदनुरोधेन तत्कल्पने च गौरवात् इच्छाया उत्तेजकत्वमावश्यकमिति वाच्यम्, आपत्तिस्थले बाधबुद्धेर्हेतुताया आवश्यकत्वात् तत्रापत्तित्वमनिवेश्य इच्छाकालीनज्ञानसाधारणतादृशबाधाव्यवहितोत्तरत्वस्यैव जन्यतावच्छेदकत्वोपगमेनातिरिक्तकारणताया अकल्पनात्। न चैवमापत्त्यात्मकज्ञानस्य बाधकालीनेच्छां विनापत्तिरिति तत्रेच्छाहेतुत्वकल्पने गौरवमिति वाच्यम्। इच्छाया उत्तेजकत्वे अप्रामाण्यग्रहादिभिः समं इच्छाभावस्य विशेष्यविशेषणभावे विनिगमनाविरहेणानन्त्यादिच्छाया हेतुत्वस्यैवोचितत्वादिति चेत्।

मैवम्, आपाद्यत्वरूपविषयताविशेषानभ्युपगमे वन्ह्यादिप्रकारकापत्तित्वावच्छिन्नाभावो वह्निं नापादयामीत्यनुव्यवसायविषयो वाच्यः, न तु वह्न्यादिव्यतिरेकनिर्णयजन्यत्वविशिष्टापत्त्यभावस्तादृशजन्यत्वाद्यनुपस्थितिदशायां तादृशप्रतीतेः सर्वानुभवसिद्धत्वात्। तथाच पूर्वो-

पस्थितसमूहालम्बनदशायां, घटमापादयामि न वह्निमित्याद्यनुव्यवसायानुपपत्तिरिति तादृशविषयतास्वीकार आवश्यक इति। एवं च तादृशविषयतानिरूपकत्वमेवापत्तित्वं न तु जातिविशेषो मानाभावात्। आपत्त्यन्यज्ञाने तादृशविलक्षणविषयत्वाभावादेव आपादयामीत्यनुव्यवसायविरहोपपत्तिरिति।

अत्रेदमवधेयम्। विधेयत्वमेवापत्तौ स्वीक्रियते, तथाचापत्तिनिरूपितविधेयत्वमेवापाद्यत्वम्। पर्वतो वह्निमान् पर्वतो घटवान् स्यादित्याकारकापत्तौ च घटस्यैव विधेयत्वं न तु वह्नेरतो न तादृशापत्त्यनन्तरं घटं जानामि न तु वह्निमित्याकारानुव्यवसायानुपपत्तिः। विधेयताया अनुमित्यादिसाधारण्येऽपि तत्रापत्तित्वाख्यजातिविशेषाभावान्न तदनन्तरमापादयामीत्यनुव्यवसायः। आपत्तित्वजातौ मानाभाव इति तु न वाच्यम्। आपादयामीत्यनुव्यवसायस्यैव मानत्वात्। न च तादृशानुव्यवसायस्य विषयताविशेषविषयकत्वेनाप्युपपत्तेर्जातिविशेषविषयकत्वे विवादप्रसङ्ग इति वाच्यम्। विषयभेदेनानन्तविषयताकल्पनापेक्षया तादृशजातिकल्पने लाघवस्यैव विवादभञ्जकत्वात्। न च भवन्मते तादृशबाधबुद्धिप्रतिबध्यतावच्छेदककोटौ तद्विधेयकविजातीयज्ञानभिन्नत्वं निवेशनीयम्, तद्विधेयकान्यत्वनिवेशेऽनुमित्याद्यसंग्रहापत्तेः, मम तु मते तादृशविषयताकान्यत्वमेव निवेश्यत इति लाघवमिति वाच्यम्। इच्छाधीनज्ञाने व्यभिचारवारणाय इच्छाया उत्तेजकत्वकल्पनापेक्षया लाघवेन जन्यतासम्बन्धेन बाधवदन्यत्वस्यैव निवेशितत्वात् तेनवापत्तावपि व्यभिचारवारणात् तदन्यत्वस्यैवानिवेशात् कार्यतावच्छेदकलाघवेन विषयतासिद्धेः प्रतिबन्दिसहस्रकवलितत्वात्। एतेनानुमित्यादिसाधारणविलक्षणविषयताया आपत्त्यादिसाधारण्ये तत्स्थलीयप्रतिबन्धकतायाः प्रतिबध्यतावच्छेदककोटौ प्रत्यक्षान्यत्वं निवेशनीयमिति गौरवमित्यपि परास्तमिति कृतं पल्लवितेन॥

इति श्रीहरिरामतर्कालङ्कारविरचितविषयतावाद-
(३६) वीचिः समाप्तः।

## अथ गदाधरभट्टाचार्यकृत-
## विषयतावाद(३७)वीचिः ।

श्रीगणेशायनमः ॥

बुद्धिर्नाम कश्चिदा(१)त्मविशेषगुणः । तद्व्यवस्थितिः,(२) घटमहं जानामीत्याकारकाऽऽपामरसाधारणानुभवबलादेव । सा च(३) सविषयिका(४), (५)उक्तधर्मिग्राहकप्रतीत्या घटादिविषयकत्वेनैव तदवगाहनात्(६) । घटादिनिष्ठं तद्विषयत्वञ्च तत्प्रतियोगिकः सम्बन्धविशेषः । स च प्रतियोगित्वादिवत् स्वरूपादनतिरिक्त एव, क्लृप्तेन स्वरूपेणैवोपपत्तौ अतिरिक्तकल्पनाया अनवकाशात् । न च तादृशसम्बन्धस्य ज्ञानस्वरूपता विषयस्वरूपता वा स्वीक्रियते इत्यत्र विनिगमनाविरहादुभयस्यैव सम्बन्धता कल्प्या, इति तदपेक्षया लाघवात् सम्बन्धत्वेनातिरिक्तैकविषयताकल्पनमेवोचितमिति वाच्यम् । (७)विषयताया विषयस्वरूपत्वे विषयेण समं तस्या आधाराधेयभावानुपपत्तेः,(८) ज्ञानस्वरूपाया एव तस्या उपगमात् । अभेदेऽपि आधाराधेयभावोपगमे घटो ज्ञानविषयतावानितिवत् घटो घटवानित्यादिप्रतीत्यापत्तेः । न च विषयतात्वावच्छिन्ननिरूपिताधिकरणतैव घटादावुपेयते न घटत्वावच्छिन्नाधिकरणता इति नातिप्रसङ्ग इति वाच्यम् । तदवच्छिन्ननिरूपितत्वस्य तदाश्रयनिरूपितत्वविलक्षणस्य दुर्वचत्वात्(९) ।

अस्तुवा विनिगमनाविरहादुभयमेव(१०) विषयत्वं, तथापि तादृशोभयस्य क्लृप्तत्वात्, अतिरिक्तविषयतायास्तत्र(११)ज्ञानादिसम्बन्धतायाश्च कल्पनाऽपेक्षया तदुभयस्य ज्ञानादिसम्बन्धत्वकल्पने गौरवानवकाश इति सिद्धान्तानुयायिनः ।

नव्यास्तु-विषयत्वं पदार्थान्तरमेव, न तु स्वरूपसम्बन्धविशेषः । तथाहि--ज्ञानविषयताया ज्ञानात्मकत्वे ज्ञानाधिकरणकालस्यापि ज्ञान-

---

(१) गुणत्वव्याप्यवैजात्याश्रयः (२) विजातीयबुद्धिसिद्धिः । (३) बुद्धिः । (४) विषयतानिरूपिका ॥ (५) विषयतायां प्रमाणमाह उक्तेत्यादि ॥ बुद्धिसाधकप्रतीतिरेव प्रमाणमिति भावः । (६) ज्ञानविषयत्वात् ।
(७) विनिगमनाविरहं निराकरोति विषयताया इति ।
(८) अभेदस्य वृत्त्यनियामकत्वेन घटो ज्ञानविषयतावानितिप्रतीत्यनुपपत्तेरित्यर्थः । (९) तथाच घटो घटवानिति प्रतीत्यापत्तेर्दुर्वारत्वमिति भावः ।
(१०) ज्ञानविषयोभयस्वरूपमेव । (११) अतिरिक्तविषयतायाम् ।

विषयत्वापत्तिः, कालनिष्ठतत्सम्बन्धस्यापि तत्स्वरूपानतिरिक्तत्वात्(१)। एवं स्वाभावेन समं प्रतियोग्यनुयोगिभावरूपज्ञानसम्बन्धस्यापि स्वस्वरूपानतिरिक्ततया घटादिज्ञानस्य घटादिविषयकत्ववत् स्वाभावविषयकत्वस्यापत्तिः(२)। कालादौ ज्ञानादिसम्बन्धस्या(३)तिरिक्तत्वे च विनिगमनाविरहात् विषयनिष्ठतत्सम्बन्ध(४)स्याप्यतिरिक्तत्वसिद्धिर्निष्प्रत्यूहैव। एवं विषयताया ज्ञानस्वरूपत्वे घटपटावित्यादिसमूहालम्बनात्मकैकज्ञानीयघटपटादिरूपनानाविषयनिष्ठविषयतानामेकतया तादृशज्ञानानां घटत्वपटत्वाद्यवच्छिन्नपटघटादिनिष्ठविषयताकतया भ्रमत्वापत्तिः, तदवृत्तिधर्म्मावच्छिन्नतन्निष्ठविषयताशालिबुद्धेरेव भ्रमत्वात्(५)। तादृशज्ञानानन्तरं घटत्वेन पटं जानामीत्याकारकानुव्यवसायापत्तिश्च घटत्वावच्छिन्नपटनिष्ठविषयताकज्ञानस्यैव तादृशानुव्यवसायविषयत्वात्। न च तादृशसमूहालम्बनीयघटपटादिनिष्ठविषयताया ऐक्येऽपि सा विषयता घटत्वाद्यवच्छिन्नविषयतात्वेन घट एव वर्त्तते पटत्वाद्यवच्छिन्नविषयतात्वेन पट एव वर्त्तते, अतो न तादृशधियो भ्रमत्वापत्तिः, तदवृत्तिर्यो धर्मस्तदवच्छिन्नविषयतात्वेन तद्वृत्तिर्या विषयता तत्प्रतियोगिन एव ज्ञानस्य भ्रमत्वात्(६), न वा तादृशसमूहालम्बनानन्तरमुक्तानुव्यवसायप्रसङ्गः, घटत्वाद्यवच्छिन्नविषयतात्वेन पटादिवृत्तिविषयताप्रतियोगिन एव ज्ञानस्य तद्विषयत्वादिति वाच्यम्। यतः घटत्वाद्यवच्छिन्नविषयतात्वेन पटादिवृत्तित्वं हि तद्रूपावच्छिन्ननिरूपितपटादिनिष्ठाधिकरणताकत्वं, तादृशी चाधिकरणता यदि शुद्धविषयतात्वावच्छिन्ननिरूपिताधिकरणतातोऽनतिरिक्ता तदा तादृशज्ञानीयपटादिनिष्ठविषयतायामपि तादृशाधिकरणताकत्वमक्षतमेव, अति-

---

(१) घटानुयोगिकघटज्ञानप्रतियोगिकविषयत्वस्य कालानुयोगिकघटज्ञानप्रतियोगिककालिकसम्बन्धस्य च घटज्ञानस्वरूपतयैक्यात् घटज्ञानविषयतावान् काल इति प्रतीत्यापत्तिरिति भावः।

(२) घटज्ञानप्रतियोगिकविषयत्वस्य घटज्ञानप्रतियोगिकानुयोगित्वस्य च घटज्ञानस्वरूपतया ऐक्यात् घटज्ञानविषयतावान् घटज्ञानाभाव इति प्रतीत्यापत्तिरिति भावः। (३) कालिकानुयोगित्वादेः। (४) विषयत्वस्य।

(५) वस्तुविशिष्टविषयताकज्ञानत्वं भ्रमत्वम्, वैशिष्ट्यञ्च स्ववृत्तित्वस्वावृत्तिधर्म्मावच्छिन्नत्वोभयसम्बन्धेन।

(६) वस्तुविशिष्टवृत्तितावद्विषयताकज्ञानत्वं भ्रमत्वम्। वैशिष्ट्यञ्च स्वनिरूपितत्वस्वावृत्तिधर्म्मावच्छिन्नविषयतात्वावच्छिन्नत्वोभयसम्बन्धेन।

रिक्ता चेत्, तर्हि किमपराद्धमतिरिक्तविषयतया(१) इति।

विषयताया विषयस्वरूपत्वे च घटत्वप्रकारकप्रमानिरूपितायाः पटत्वप्रकारकभ्रमनिरूपितायाश्च घटनिष्ठविषयताया ऐक्यप्रसङ्गेन घटत्वप्रकारकप्रमायाअपि भ्रमत्वापत्तिः।

एवं घटवद्भूतलं घटभूतलसंयोगा इति ज्ञानयोरविशेषप्रसङ्गश्च, विषयाणां तदात्मकविषयतानाञ्च अविलक्षणत्वात्। (२)न च प्रथमज्ञाने सम्बन्धावधया भासमानस्य संयोगस्य सम्बन्धोऽपि (३)अधिको भासते न तु समूहालम्बनरूपे चरमज्ञाने, इत्यत एव ४) उभयोर्वैलक्षण्यमित्युपाध्यायमतं सम्यक्। संयोगादिप्रतियोगिकसम्बन्धमादायाऽपि समूहालम्बनसम्भवात्(५) न च संयोगसंसर्गकविशिष्टबुद्धौ संयोगः स्वरूपत एव भासते न तु संयोगत्वेन, सखण्डपदार्थस्यापि सम्बन्धविधया स्वरूपतो भानाभ्युपगमात्, उक्तसमूहालम्बने(६) च संयोगत्वेन संयोगो भासते इति संयोगत्वरूपाधिकविषयभानाभानाभ्यामेव तयोर्विशेष इति वाच्यम्। एवमपि घटवद्भूतलं संयोगश्च घटभूतलसंयोगा इति ज्ञानयोर्विशेषानिर्वाहात्। घटवद्भूतलमिति ज्ञानस्य घटप्रकारकत्वमेव घटविशेष्यकोक्तसमूहालम्बनात् विशेष इति चेत्। घटप्रकारकत्वं हि घटनिष्ठप्रकारताप्रतियोगित्वं, घटविशेष्यकत्वञ्च घटनिष्ठविशेष्यताप्रतियोगित्वं, तत्र च ज्ञानीयप्रकारताविशेष्यते यदि प्रकारविशेष्याभ्यामनतिरिक्ते तदा उक्तविशिष्टबुद्धेरपि घटविशेष्यकत्वम् उक्तसमूहालम्बनस्यापि घटप्रकारकत्वं दुर्वारमेव, घटात्मकयोस्तन्निष्ठप्रकारताविशेष्यतयोर्भवन्मतेऽभिन्नत्वात्। यदि च ते अतिरिक्ते तदा सिद्धं नः समीहितं प्रकारताविशेष्यतयोर्विषयतात्मकत्वात्।

यत्तु भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वं तादृशवैशिष्ट्यानुगित्वं च विशेष्यत्वं न विषयतारूपमिति(७)।

तदसत्। उक्तसमूहालम्बनस्यापि घटप्रतियोगिकवैशिष्ट्यविषयक-

---

(१) घटत्वावच्छिन्नविषयतात्वावच्छिन्नवृत्तित्वविषयतात्वावच्छिन्नवृत्तित्वयोरैक्ये उक्तदोषतादवस्थ्यम्, भिन्नत्वे च विषयताया एव भिन्नत्वमस्तु इति भावः।

(२) नचेत्यस्य सम्यगित्यनेन सम्बन्धः। (३) प्रतियोगित्वानुयोगित्वरूपः।

(४) संयोगप्रतियोगिकसम्बन्धभानाभानाभ्यामेव।

(५) तथाच घटवद्भूतलं घटभूतलसंयोगप्रतियोगित्वानुयोगित्वानीति ज्ञानयोरविशेषप्रसङ्ग इति भावः। (६) घटभूतलसंयोगा इति ज्ञाने।

(७) प्रतियोगित्वानुयोगित्वरूपप्रकारताविशेष्ययोरतिरिक्तत्वे सिद्धेऽपि विषयतायामतिरक्तत्वसिद्धिरित्याशयः।

कतया घटप्रकारकत्वापत्तेः, संयोगादिरूपव्यधिकरणसम्बन्धेन द्रव्यत्वादिभ्रमस्य द्रव्यत्वादिप्रकारकत्वानुपपत्तेः, भूतले घट इत्यादिज्ञानस्य भूतलाद्यनुयोगिकसंयोगादिविषयकतया भूतलादिविशेष्यकत्वापत्तेः, गुणादौ संयोगादिसम्बन्धेन घटादिभ्रमस्य गुणादिविशेष्यकत्वानुपपत्तेश्च ।

अथ वास्तवताद्दृशवैशिष्ट्यप्रतियोगित्वानुयोगित्वे न प्रकारताविशेष्यत्वे येन उक्तदोषाणामवसरः स्यात्, अपि तु वैशिष्ट्यप्रतियोगितया तदनुयोगितया च भासमानत्वमेव प्रकारत्वं विशेष्यत्वञ्च इति चेन्न ।

प्रतियोगितयेत्यादौ तृतीयार्थस्य दुर्वचत्वात्, भासमानत्वस्य ज्ञानविषयतात्मकतया प्रकारताविशेष्यतयोर्विषयतात्वसिद्धेश्च ।

यत्तु विषयत्वं न केवलज्ञानस्वरूपं नापि केवलविषयस्वरूपमपि तु ज्ञानविषयोभयस्वरूपमतो न प्रागुक्तदोषाणामवसरः, तथाहि घटपटावित्यादिसमूहालम्बनीयघटादिनिष्ठतज्ज्ञानघटाद्युभयात्मकघटत्वाद्यवच्छिन्नविषयतायाः पटादिनिष्ठतज्ज्ञानपटाद्युभयात्मकपटत्वाद्यवच्छिन्नविषयतानात्मकतया न ताद्दृशज्ञानस्य भ्रमत्वापत्तिः, न वा उपदर्शितविशिष्टधीसमूहालम्बनयोरविशेषप्रसङ्गः, ताद्दृशसमूहालम्बनस्य तथाविधविशिष्टबुद्धिनिरूपिततज्ज्ञानघटोभयात्मकप्रकारताऽनिरूपकत्वेन विषयतावैलक्षण्यस्य सत्वात् इति ।

तदप्यसत् । घटपटावित्येताद्दृशसमूहालम्बनात्मकज्ञानस्य तज्ज्ञानपटोभयात्मकपटत्वावच्छिन्नपटनिष्ठविषयताकत्वेन घटत्वावच्छिन्नघटनिष्ठतज्ज्ञानघटोभयात्मकविषयताकत्वेन च घटनिष्ठा या पटत्वावच्छिन्ना तज्ज्ञानरूपा विषयता तन्निरूपकत्वेन भ्रमत्वापत्तेर्दुर्वारत्वात् ।

अथ तद्धर्मावच्छिन्नविषयतात्वं तज्ज्ञानतत्तद्विषययोर्व्यासज्यवृत्ति उपेयते, एवञ्च तद्धर्मावच्छिन्नविषयतात्वेन तद्धर्मानधिकरणवृत्तिर्या विषयता तत्प्रतियोगित्वमेव भ्रमत्वम्, उपदर्शितसमूहालम्बने च पटत्वाद्यवच्छिन्नविषयतात्वस्य तज्ज्ञानपटाद्युभयपर्याप्ततया तेन रूपेण तदुभयात्मकविषयता न घटादिवृत्तिः, घटादेस्तद्रूपाश्रयपटाद्यात्मकविषयत्वासम्बन्धित्वात्, स्वाश्रययावद्व्यक्तिसम्बन्धिन एव व्यासज्यवृत्तिधर्मपुरस्कारेण तदाश्रयवत्त्वात्, इति न तस्य भ्रमत्वापत्तिः इति चेत् ।

पटत्वाद्यवच्छिन्नविषयतात्वं स्वरूपादतिरिक्तं न वा ? आद्य किमपराद्धं तद्रूपावच्छिन्नातिरिक्तविषयतया, अन्त्ये च तस्य व्यासज्यवृत्तित्वानुपपत्तिः तत्तत्स्वरूपस्य प्रत्येकविश्रान्तत्वात् ।

एवं तद्रूपेण(१) घटादिवृत्तित्वं विषयतात्वेन घटादिवृत्तित्वादति-रिक्तं न वा ? आद्ये किमपराद्ध नतिरिक्तविषयतया । अन्त्ये च तद्रूपेण घटादिवृत्तित्वं तादृशज्ञानीयस्वात्मकविषयताया अक्षतमेव ।

एवं जातिमान् घट इत्यादौ घटत्वाद्येकविषयवृत्तेरेकज्ञानीयविषय-ताया जातित्वाद्यवच्छिन्नत्वतदनवच्छिन्नत्वाभ्यां द्वैविध्यमनुपपन्नं, ज्ञान-स्यविषयस्य च द्वैविध्यविरहात् तथाच जातिमानित्याद्याकारकैकविघ-टत्वादिविषयताशालिज्ञानात् तादृशज्ञानस्य विलक्षणविषयताशालित्वा-नुपपत्त्या विलक्षणाकारकतानुपपत्तिः, तस्मात् विषयत्वमतिरिक्तमेव ।

अथ विषयतावत् विषयेऽनुयोगिताऽऽख्यस्तत्सम्बन्धो ज्ञाने प्रतियो-गिताऽऽख्यस्तत्सम्बन्धश्च तुल्ययुक्त्याऽतिरिक्त एव उपगन्तव्यः । स्व-रूपानतिरिक्तत्वे(२) ज्ञानविषयनिष्ठयोस्तत्सम्बन्धयोरविलक्षणतापत्त्या ज्ञानस्येव विषयस्यापि सविषयकत्वं विषयवत् ज्ञानस्यापि तद्विष-यत्वमापद्येत । एवं विषयताया ज्ञानघटादिनिष्ठेन सम्बन्धेन समं कालाभावादिनिष्ठसम्बन्धस्यापि(३) अननिरिक्तत्वेन वैलक्षण्यानुप-पत्त्या कालाऽभावादीनामपि घटादिविषयकत्वापत्तिः, घटज्ञानादिवि-षयकत्वापत्तिश्च । एवं तुल्ययुक्त्या तादृशसम्बन्धस्यापि सम्बन्धः तत्सम्बन्धादिरपि अतिरिक्तः स्वीकरणीय इत्यनवस्थितसम्बन्धधारा-कल्पनप्रसङ्गः । एवं विषयतासम्बन्धेऽपि ज्ञानस्य तदीयतानियामको निरूप्यत्वाऽऽख्यसम्बन्धविशेषः तुल्ययुक्त्याऽतिरिक्तः स्वीकरणीयः एवं तत्सम्बन्धादिरपि इति तत्रापि सम्बन्धधाराऽनवस्थापत्तिः इति चेत् ।

का क्षतिः, न हि प्रामाणिकानवस्थाया दूषणावहत्वम् ।

विषयतावत् विषयित्वरूपज्ञानानुयोगिकविषयसम्बन्धोऽपि अति-रिक्त एव, न तु विषयताप्रतियोगित्वमेव विषयित्वम् , विषयित्वमेवा-तिरिक्तं तत्प्रतियोगित्वमेव विषयत्वमित्यस्यापि वक्तुं शक्यतया द्वयोरे-वातिरिक्तासिद्धेरिति ।

विषयता च विषयभेदात् भिद्यते अन्यथा घटपटावित्यादिसमू-हालम्बनीयघटपटादिनिष्ठविषयताया ऐक्ये पूर्वोक्तयुक्त्या तादृश-ज्ञानस्य भ्रमत्वापत्तेः(४) घटाद्येकैकविषयकज्ञानीयैकैकवृत्तिविषय-तातः समूहालम्बने नानाविषयवृत्त्यतिरिक्तैकविषयताकल्पनप्रसङ्गेन

(१) पटत्वावच्छिन्नविषयतात्वेन । (२) विषयतानतिरिक्तत्वे ।
(३) विषयताप्रतियोगिककालिकानुयोगित्वादिरूपस्य ।
(४) तद्वृत्तिधर्मावच्छिन्नविषयताशालिज्ञानस्य भ्रमत्वात् ।

गौरवाच्च, अस्मन्नये समूहालम्बने क्लृप्तप्रत्येकज्ञानीयविषयतानामेवोपगमात् ज्ञानभेदेन विषयताभेदे मानाभावात् ।

एतेन–घट इत्यादिविशिष्टबुद्धेर्विशेष्यविशेषणभावापन्नेषु घटघटत्वादिषु एकैव विषयता, न तु विशेष्यनिष्ठा विशेषणनिष्ठा च विषयता भिन्ना–इति मतं हेयमेव, विशेष्यनिष्ठविशेष्यतात्मकविषयतया समं विशेषणनिष्ठप्रकारतात्मकविषयताया अभेदस्यासम्भवदुक्तिकत्वात् तथासति(१) तादृशबुद्धौ घटप्रकारकत्वघटत्वविशेष्यकत्वयोरापत्तेः । न च प्रकारताविशेष्यतयोर्विषयतारूपतायामेवेयमनुपपत्तिः, सैव(२) न, अपि तु पदार्थान्तरे एव ते,(३) तयोर्विषयतात्वे मानाभावादिति वाच्यम् । विषयेऽतिरिक्तविषयतानां तत्र च विषयतात्वस्य कल्पनामपेक्ष्य विषयवृत्तित्वेन क्लृप्तानां प्रकारताविशेष्यतानां विषयतात्वकल्पनस्यैव न्याय्यत्वात् ।

यत्तु––निर्विकल्पकीया प्रकारताविशेष्यताभिन्नत्वेनोभयमतसिद्धा या विषयता विशिष्टज्ञानस्यापि सैव विषये सम्बन्धः, तत एव च विशिष्टबुद्धेरपि सविषयकत्वनिर्वाहोऽस्तु किं प्रकारतादीनां विषयतात्वोपगमेन, प्रकारतादीनां विषयतानात्मकत्वेऽपि तद्वैलक्षण्यस्य ज्ञानवैलक्षण्यसम्पादकत्वे(४) न कश्चिद्विरोध–इत्यपि हेयमेव । प्रकारताविशेष्यतयोर्विषयतात्वानुपगमे व्याप्यपक्षविशेष्यकपरामर्शयो(५)र्व्याप्यविषयतानिरूपितपक्षविषयताशालित्वेनानुगमय्याऽनुमितिहेतुत्वासम्भवात् कारणताबाहुल्यापत्तेः निर्विकल्पकोयविषयतायाः परस्परं निरूप्यनिरूपकभावविरहात् । एवं संसर्गज्ञानस्यानुपनायकतामते उपनीतभानं प्रति उपनायकज्ञानस्य तत्प्रकारकत्वेन तद्विशेष्यकत्वेन च हेतुताद्वयप्रसङ्गः, मन्मते तु प्रकारताविशेष्यते संसर्गताभिन्नविषयतात्वेनानुगमय्य एकहेतुताकल्पनसम्भवात् । एवं निर्विकल्पकीयविषयताया, विशिष्टबुद्धावुपगमे घटत्वादिनिर्विकल्पकादिव जातित्वादिना घटत्वादिज्ञानादपि स्वरूपतो घटत्वादिप्रकारिकाया घट इत्याद्याकारकविशिष्टबुद्धेरापत्तिः । न च स्वरूपतस्तद्विशिष्टबुद्धौ तद्विशेष्यकतज्ज्ञानत्वेन हेतुत्वात् नायं दोष इति वाच्यम् । तथासति जातिर्घटश्चेत्यादिज्ञानात् घट इत्यादिविशिष्टबुद्ध्यनुपपत्तेरिति ॥

---

(१) अभिन्नत्वे । (२) विषयतारूपतैव । (३) प्रकारताविशेष्यते ।
(४) विशिष्टबुद्धेर्निर्विकल्पकवैलक्षण्यप्रयोजकत्वे ।
(५) वह्निव्याप्यधूमः पर्वते, वह्निव्याप्यधूमवान् पर्वत इति ज्ञानयोः ।

यत्तु—विशिष्टबुद्धिविषयता विशेष्यमात्रे न तु विशेषणेऽपि मानाभावात् । न च विनिगमनाविरहः, घट इत्यादिज्ञानानन्तरं घटं जानामीत्याद्यनुव्यवसायेन घटरूपविशेष्येण समं ज्ञानस्य सम्बन्धावगाहनात् घटादिरूपविशेष्ये ज्ञानस्य विषयतात्मकसम्बन्धस्यावश्योपेयत्वात् । घटत्वं जानामीत्याद्यनुव्यवसायस्तु तत्रासिद्ध एव, तस्य घटत्वत्वविशिष्टवैशिष्ट्यावगाहित्वेन घटत्वत्वप्रकारकव्यवसायानन्तरमेव तत्सम्भवात्(१), घट इत्यादिव्यवसायस्य च स्वरूपत एव घटत्वादिप्रकारकतया घटत्वत्वाद्यप्रकारकत्वात् । ज्ञानांशे स्वरूपतो घटत्वादिविशेषणकोऽनुव्यवसायोऽपि न तत्र सम्भवति, ससम्बन्धिकार्थप्रत्यक्षस्य किञ्चिद्विशिष्टसम्बन्धिवैशिष्ट्यावगाहित्वनियमात् । न चायं घट इत्यादिव्यवसायानन्तरं घटत्वेनेमं जानामीत्याद्याकारकानुव्यवसायेन घटत्वादिरूपविशेषणेनापि समं ज्ञानस्य सम्बन्धावगाहनात् (२)तत्रापि विशिष्टधीविषताभ्युपगम आवश्यक इति वाच्यम् । यतस्तत्र ज्ञानान्वयिवैशिष्ट्यं न तृतीयार्थः, अपि तु द्वितीयार्थविषयतान्वयिघटत्वादिप्रकारकत्वम् । न च विषयतानिष्ठं घटत्वादिप्रकारकत्वं घटत्वादिनिष्ठप्रकारतानिरूपकत्वं तदभ्युपगमे च विशेषणीभूतघटत्वादेर्विशिष्टधीविषयतासिद्धिर्निष्प्रत्यूहैव, प्रकारताया विषयताविशेषात्मकत्वादिति वाच्यम् । यतो विषयतानिष्ठं घटत्वादिप्रकारकत्वं न घटत्वादिनिष्ठप्रकारताख्यविषयतानिरूपकत्वमपि तु घटत्वाद्यवच्छिन्नत्वम्, अवच्छिन्नत्वञ्च प्रतियोगित्वकारणत्वाधिकरणत्वादाविव विषयतादावपि घटत्वादेः सम्बन्धविशेष एव, स च अतिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत् ।

इयांस्तु विशेषः—प्रतियोगित्वादावन्यूनानतिप्रसक्तत्वमवच्छेद्यावच्छेदकभावे तन्त्रं, न तु विषयतास्थले, व्यधिकरणधर्मस्यापि विषयतावच्छेदकत्वात् । विशेषणनिष्ठप्रकारतानिरूपितत्वमेव वा विषयतानिष्ठं तत्प्रकारकत्वम् । अस्तु वा विशेषणे विषयतानिरूपितः प्रकारताख्यधर्म्मविशेषः, तथापि तस्य विषयतात्वे ज्ञानप्रतियोगिकत्वे च मानाभाव—इत्यतिरिक्तविषयतावादिनां प्राचीनैकदेशिनां मतं, तदपि अनुपादेयमेव । विशेषणस्य विशिष्टज्ञानाविषयत्वे तद्धर्म्मविशिष्टज्ञानानन्तरं तद्धर्म्मविशिष्टज्ञानानुपपत्तेः, विशिष्टबुद्धौ विशेषणविषयकज्ञानस्य हेतुत्वात्, भवन्मते तद्विशिष्टज्ञानस्य तद्विषयकत्वाभावेन तदहेतुत्वात् ।

(१) विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वात् ।

(२) विशेषणेऽपि ।

एवं विशिष्टज्ञानात् विशेषणविषयकोपनीतभानस्याप्यनुपपत्तिः, तदुपनीतभाने तद्विषयकज्ञानस्यैव हेतुत्वात्। एतादृशयुक्त्या विशेषणस्य विशिष्टधीविषयताया आवश्यकत्वे च उक्तलाघवात् तन्निष्ठप्रकारताया एव विषयतात्वसिद्धिरित्यवधेयम्।

अथ तद्विशिष्टबुद्धौ तदुपनीतभाने च स्ववृत्तित्वस्वप्रकारकत्वान्यतरसम्बन्धेन तद्विशिष्टा या विषयता तच्छालिज्ञानत्वेनैव हेतुता वाच्या(१), इत्थञ्च विशेषणस्य विशिष्टज्ञानाविषयत्वेऽपि तद्विशिष्टज्ञानात् तद्विशिष्टज्ञानान्तरस्य तदुपनीतभानस्य च नानुपपत्तिः। न चोपदर्शितकारणतावच्छेदकघटकान्यतरसम्बन्धेन तद्विशिष्टस्य विषयतायां निवेशे अन्यतरत्वघटकभेदयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यमिति वाच्यम्। यतस्तादृशान्यतरस्य अन्यतरत्वेन न सम्बन्धता, अपि तु स्वरूपत एव। न चैवमप्यननुगमात् कारणताधिक्यं व्यभिचारश्चेति वाच्यम्। सम्बन्धाननुगमेऽपि तावन्निष्ठसम्बन्धताया ऐक्योपगमेन तद्दोषानवकाशात्। अत एव सम्बन्धाननुगमो न दोषायेति प्राचां प्रवादोऽपि। न चैवमपि स्ववृत्तित्वस्वप्रकारकत्वान्यतरसम्बन्धेन तद्विशिष्टविषयतामपेक्ष्य स्ववृत्तित्वसम्बन्धेन तद्विशिष्टविषयताया लाघवेन तद्विशिष्टबुद्ध्यादिजनकतावच्छेदकत्वसिद्धेर्निष्प्रत्यूहतया विशेषणस्यापि विशिष्टधीविषयत्वं दुर्वारमिति वाच्यम्। प्रकारतायां विषयतात्वोपगमे घटत्वादिरूपेण घटादिविषयकस्मरणादौ तथाविधज्ञानस्य घटत्वादिप्रकारतानिरूपितघटादिनिष्ठविशेष्यताशालिज्ञानत्वेन घटादिनिष्ठविशेष्यतानिरूपितघटत्वादिप्रकारताशालिज्ञानत्वेन वा हेतुत्वे गौरवात्, अस्मन्मते च नैतादृशविनिगमनाविरहावकाशः, विशेष्यतानिरूपितप्रकारताया, ज्ञानप्रतियोगिकत्वाभावेन परम्परासम्बन्धेनैव(२) तस्या जनकतावच्छेदकत्वस्योपगन्तव्यतया तदपेक्षया प्रकारतानिरूपितविशेष्यतायाः प्रतियोगितासम्बन्धेन जनकतावच्छेदकत्वे लाघवस्यैव विनिगमकत्वात्।

मैवम्, उक्तविशेषणज्ञानादिकारणतावच्छेदकलाघवेन प्रकारतायां विषयतात्वस्य ज्ञानप्रतियोगिकत्वस्य च सिद्धावेव दर्शितस्मरणादिहेतुतायां विनिगमनाविरहावतारेण गौरवावतारात्, तादृशगौरवस्य फलमुखत्वेनादोषत्वात्, यत्सिद्धिमुपजीव्य गौरवावतारस्तत्सिद्धौ तस्य

(१) निर्विकल्पकात् विशिष्टबुद्ध्युपपत्त्यर्थं प्रथमसम्बन्धनिवेशः।
(२) स्वनिरूपकविशेष्यताप्रतियोगित्वसम्बन्धेन।

विरोधित्वासम्भवात् । एवं घटवत् भूतलमित्यादिविशिष्टबुद्ध्यनन्तरं भूतलं जानामीत्यनुव्यवसायवत् घटं जानामीत्याद्याकारकस्य ज्ञाने घटादिसम्बन्धावगाहिनोऽनुव्यवसायस्यापि सर्वानुभवसिद्धतया विशेषणेऽपि विषयतात्मकज्ञानसम्बन्ध आवश्यकः । न च तत्र स्वप्रकारकविषयताप्रतियोगित्वरूपपरम्परासम्बन्ध एव ज्ञाने घटस्यानुव्यवसायेन गृह्यते इति वाच्यम् । विशेषणीभूतघटादिरेव तादृशविशिष्टबुद्धिविषयः, न तु भूतलादिरूपविशेष्यं, भूतलं जानामीत्याद्यनुव्यवसायेन तु स्वविशेष्यकविषयताप्रतियोगित्वरूपभूतलादिनिरूपितपरम्परासम्बन्ध एव ज्ञानादौ गृह्यते इत्यस्यापि सुवचतया विनिगमनाविरहेण विशेषणविशेष्ययोरुभयोरेव विशिष्टधीविषयतासिद्धेर्निराबाधत्वात् इत्याहुः ॥

विशेष्यताप्रकारतावत् संसर्गत्वस्यापि विषयताविशेषात्मकत्वात् संसर्गस्यापि विशिष्टधीविषयत्वम् ॥

अत्रोच्छृङ्खलाः-संसर्गस्य विशिष्टधीविषयत्वे मानाभावः, घट इत्यादिज्ञानानन्तरं समवायं जानामीत्याद्याकारकानुव्यवसायस्यासिद्धत्वात् तादृशानुव्यवसायस्य समवायत्वविशिष्टवैशिष्ट्यावगाहितया समवायत्वप्रकारकज्ञानानन्तरमेव तत्सम्भवात् ॥

अथ विशिष्टबुद्धेः संसर्गानवगाहित्वे बाधबुद्धिप्रतिबन्धकतायाः संसर्गविशेषनियन्त्रितत्वासम्भवात् कपालधर्मिकसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभाववत्तानिश्चयस्य समानधर्मिमतावच्छेदकं किञ्चिदेव घटादिप्रकारकं ज्ञानं प्रतिबध्यं न तु सर्वमित्यनुभवव्याकोपः । न च बाधबुद्धिप्रतिबन्धकतायाः सम्बन्धविशेषनियन्त्रितत्वानुरोधेन तत्प्रतिबध्यसधर्मिमतावच्छेदकबुद्धेः सम्बन्धावगाहित्वसिद्धावपि निर्धर्मितावच्छेदकबुद्धेस्तथात्वं नियुक्तिकमिति वाच्यम् । निर्धर्मितावच्छेदकविशिष्टबुद्धेरपि ग्राह्यधर्मिकावृत्तित्वज्ञानप्रतिबध्यतया अवृत्तित्वज्ञानप्रतिबन्धकतायाः सम्बन्धविशेषनियन्त्रितत्वानुरोधेन तत्रापि सम्बन्धावगाहित्वस्यावश्यकत्वात् । एवं प्रमात्वभ्रमत्वयोः सम्बन्धविशेषनियन्त्रितत्वानुरोधेनापि सकलविशिष्टबुद्धीनां सम्बन्धावगाहित्वमावश्यकम्, तयोस्तथात्वानुपगमे कपालविशेष्यकं घटादिप्रकारकं किञ्चिदेव ज्ञानं प्रमा, तथाविधञ्च किञ्चिदेव ज्ञानं भ्रम इति प्रतीतिर्न स्यात्, अपि तु कपालादेः समवायेन घटादिमत्तया तथाविधं सकलमेव ज्ञानं प्रमा स्यात्, संयोगादिसम्बन्धावच्छिन्नघटाद्यभाववत्तया च तथाविधं सकलमेव ज्ञानं भ्रमः स्यात् इति चेन्न ।

विशिष्टबुद्धेः सम्बन्धविषयकत्वानभ्युपगमेऽपि तटस्थेन(१) संसर्गेण समं प्रकारताया अवच्छेद्यावच्छेदकभावोपगमात्, बाधबुद्धिप्रतिबध्यतावच्छेदकस्य प्रमात्वभ्रमत्वयोश्च सम्बन्धविशेषावच्छिन्नप्रकारताघटितत्वादुक्तानुपपत्तिवारणसम्भवात्। न च प्रकारतानिरूपितसांसर्गिकविषयताश्रयत्वमेव संसर्गस्य प्रकारतावच्छेदकत्वमन्यस्य दुर्वचत्वादिति संसर्गस्य विशिष्टधीविषयत्वसिद्धिर्निष्प्रत्यूहैवेति वाच्यम्। प्रतियोगित्वादिनिरूपितायां इव प्रकारतानिरूपिताया अपि संसर्गनिष्ठावच्छेदकतायाः स्वरूपसम्बन्धरूपत्वात् पदार्थान्तररूपत्वाद्वा विषयताविशेषात्मकत्वेऽपि तद्रूपतायास्तुल्यत्वात् तस्या विषयतात्वस्य निर्युक्तिकत्वात्। तादृशावच्छेदकताविशेष एव च संसर्गतापदार्थः, न तु विषयताविशेषः।

अथ संसर्गस्य विशिष्टबुद्ध्यविषयत्वे तत्संसर्गकज्ञानात् तद्विशिष्टबुद्धितदुपनीतभानानुदयप्रसङ्गः। न च ततस्तयोरुत्पादस्यानुभविकत्वाभावादिष्टापत्तिः, तथासति स्वरूपतो मनस्त्वादिविशिष्टवाचकमनःपदाद्यधीनशाब्दबोधानुपपत्तेः, तथाहि मनःपदात् स्वरूपतो मनस्त्वप्रकारिका शाब्दधीर्भविष्यति, तत्र च स्वरूपतस्तत्प्रकारकशक्तिज्ञानपदार्थोपस्थित्यादिः कारणं जातित्वादिना तत्प्रकारकशक्तिज्ञानादितो जातित्वादिनैव तत्प्रकारकशाब्दबोधोदयात्, अन्यथा कदाचित् जातित्वादिना तत्प्रकारकः कदाचित् स्वरूपतस्तत्प्रकारकः शाब्दबोध उत्पद्यते इत्यत्र नियामकाभावप्रसङ्गात्। स्वरूपतस्तत्प्रकारकशक्तिज्ञानपदार्थोपस्थित्यादिकञ्च स्वरूपतस्तद्विषयकज्ञानं विना न सम्भवति, स्वरूपतस्तद्विशिष्टबुद्धौ स्वरूपतस्तद्विषयकज्ञानस्य हेतुत्वात्। स्वरूपतो मनस्त्वादिविषयकञ्च निर्विकल्पकज्ञानं न सम्भवति, अतीन्द्रियस्य निर्विकल्पकावेद्यत्वात् निर्विकल्पकस्यालौकिकत्वनियमात्। स्वरूपतस्तत्प्रकारकज्ञानस्यापेक्षणे च तत्रापि तादृशज्ञानस्यापेक्षणीयतया अनवस्थाप्रसङ्गः, अस्मन्मते च स्वरूपतः संसर्गविधया किञ्चिज्ज्ञाने मनस्त्वादिभानं स्वीकृत्य तन्मूलकात् स्वरूपतस्तत्प्रकारकशक्त्यादिज्ञानात् तथाविधशाब्दधिय उपपत्तिः। न चैवं स्वरूपतो निखिलजातिसंसर्गकज्ञानात् स्वरूपतो निखिलजातिप्रकारकज्ञानसम्भवेन सार्वज्ञापत्तिरिति वाच्यम्। फलबलाद् कस्यचिदेव पदार्थस्य कदाचित्संसर्गविधया भानोपगमेन स्वरूपतः संसर्गविधया निखिलजातिभानस्य कदाप्यनभ्युपगमात् इति चेन्न।

---

(१) विशिष्टबुद्ध्यविषयेण।

तत्संसर्गकज्ञानस्य तद्विशिष्टबुद्ध्याद्यजनकत्वेऽपि स्वरूपतो मनस्त्वप्रकारकस्मरणमूलकतथाविधशक्त्यादिज्ञानात्तथाविधशाब्दबोधनिर्वाहात्। नच स्वरूपतस्तत्प्रकारकस्मरणे स्वरूपतस्तत्प्रकारकानुभवस्यापेक्षिततया तदसम्भवेन तदसम्भव इति वाच्यम्। भवान्तरप्रभवानुभवाहितसंस्कारादेव तथाविधस्मरणोपपत्तेः। नच जन्मान्तरीयतथानुभवेऽपि पर्य्यनुयोगतादवस्थ्यम्, तत्र तत्प्राक्तनजन्मजाततथाविधानुभवाहितसंस्कारमूलकस्मरणस्य गतित्वात्, जन्मप्रवाहस्यानादितया तादृशानवस्थाया अकिञ्चित्करत्वात्।

अथवा जातित्वादिना मनस्त्वप्रकारकैतज्जन्मीयानुभवप्रभवसंस्कारादेव स्वरूपतस्तत्प्रकारकस्मरणमुत्पद्यते सामान्यतस्तत्प्रकारकस्मरणे तत्प्रकारकत्वेनैव ज्ञानसंस्कारयोः कारणत्वात्, स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकत्वेन तयोर्हेतुताया अप्रामाणिकत्वात्। नचैवं जातित्वादिना मनस्त्वादिप्रकारकस्मरणमात्रस्यैव स्वरूपतस्तत्प्रकारकत्वापत्तिरिति केवलं जातिमानित्याकारकस्य स्मरणस्य विलोपप्रसङ्ग इति वाच्यम्। स्वरूपतस्तत्प्रकारकस्मरणे उद्बोधकविशेषस्यैव नियामकत्वात् मन इत्याद्याकारकस्मरणं यत्रानुभवसिद्धं तत्रैव तादृशोद्बोधकस्य फलबलेन कल्पनीयत्वात्, अन्यथा जातित्वेन स्वरूपतो मनस्त्वप्रकारकक्रमिकानुभवद्वयाहितसंस्कारवतः पुंसो भवन्मतेऽपि स्वरूपतो मनस्त्वाप्रकारकजातिमानित्याकारकमनस्त्वप्रकारकस्मरणविलोपापत्तिः। न च जातित्वेन मनस्त्वप्रकारकसंस्कारात्स्वरूपतो मनस्त्वप्रकारकस्मरणं न सम्भवति तत्र मनस्त्वांशे जातित्वभाने बाधकाभावादिति वाच्यम्। तदंशे जातित्वभानेऽपि जातिमन्मनश्चेत्याकारकस्य तदंशे द्विविधविषयताशालिनस्स्मरणस्य सम्भवात्॥

वस्तुतस्तु जातित्वांशे मोषदशायां तथाविधसंस्कारान्मन इत्याकारकस्मरणं निराबाधमेव। तदंशे मोषश्च तद्भासकोद्बोधकासमवधानम्। न च किञ्चिद्रूपेण तत्प्रकारकसंस्कारादपि स्वरूपतस्तत्प्रकारकस्मरणस्य मोषवशादुत्पत्तौ जातित्वादिसामान्यप्रत्यासत्तिजन्यतत्प्रकारकनिखिलजातिविषयकानुभवाहितसंस्काराज्जातित्वाद्यंशे मोषदशायां स्वरूपतो निखिलजातिप्रकारकस्मरणसम्भवात् सार्वज्ञ्यापत्तिरिति वाच्यम्। उद्बोधकस्य फलबलकल्पनीयतया जातित्वाद्यंशे मोषदशायां निखिलजातिभासकोद्बोधकस्याकल्पनेनापत्तिविरहात् इत्यलं पल्लवितेन॥

इत्थं च विशिष्टसंविदस्सम्बन्धानवलम्बिता न कथंचिदपि कञ्चिदनिर्वाहमावहन्तीति युक्तितन्त्रं न तन्त्र[illegible]विरोधः प्रतिरुणद्धि॥

केचित्तु—विशिष्टसंसर्गबुद्धौ विशिष्टसंसर्गघटकविशेषणीयसंसर्गतायां प्रकारतात्वं तथाविधविशेष्यीयसंसर्गतायां विशेष्यतात्वमावश्यकम्, अन्यथा कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नत्वरूपेण प्रतियोगितासंसर्गककम्बुग्रीवादिमान्नास्तीत्याद्याकारकबुद्धेर्भ्रमत्वानुपपत्तेः, तथाहि—तादृशज्ञानमभावांशे प्रतियोगितासम्बन्धेन न घटस्य भ्रमः, तेन सम्बन्धेनाभावस्य घटवत्त्वात्, नापि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितासम्बन्धेन तदंशे तस्य भ्रमः, विशिष्टसम्बन्धाप्रसिद्धेः, नापि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तदंशे कम्बुग्रीवादिमत्त्वस्य भ्रमः, तदंशे तस्याप्रकारत्वात्, तथासति तादृशधर्म्मविशिष्टत्वेनाभावोल्लेखापत्तेः। अत एव प्रतियोगितावच्छेदकत्वसम्बन्धेन तादृशधर्मांशेऽभावस्य भ्रम इत्यपि न, तद्धर्मांशेऽभावस्याप्रकारत्वात्। नापि प्रतियोगित्वांशे कम्बुग्रीवादिमत्त्वावच्छिन्नत्वस्य प्रतियोगितावच्छेदकत्वांशे कम्बुग्रीवादिमत्त्वस्य वा भ्रमः, तस्य संसर्गघटकतयाऽप्रकारत्वादिति। तस्मात्संसर्गताविशेषे प्रकारतात्वविशेष्यतात्वे स्वीकृत्य पश्चात्प्रक्षिप्तपक्ष एवापेक्षणीय इति संसर्गस्यापि विशिष्टधीविषयतासिद्धिः प्रकारतात्वादेर्विषयतात्वव्याप्यत्वादित्याहुः॥

तदपि न शोभनतया प्रतिभाति, उक्तबुद्धौ प्रतियोगिविशेषणतापन्नस्य कम्बुग्रीवादिमत्त्वादेरभावांशे प्रकारतोपगमे क्षतिविरहेण तदंशे तद्भ्रमत्वस्यैव सम्भवात्, स्वातन्त्र्येण प्रकारतास्थल एव विशेषणत्वेन विशेष्योल्लेखात्। अत एव दण्डी चैत्रः कुण्डलीत्यादिविशिष्टानुयोगिकवैशिष्ट्यबुद्धौ समानकालीनत्वसम्बन्धेन विशेष्यतावच्छेदकदण्डादेर्विधेयकुण्डलाद्यंशे प्रकारत्वेऽपि न दण्डवत्कुण्डलीत्याद्याकारकता। न च प्रकारतायाः पारतन्त्र्यं दुर्निर्वचमिति वाच्यम्। उक्तस्थले प्रतियोगिनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदेनैवाभावांशे कम्बुग्रीवादिमत्त्वादेः प्रकारतोपगमात् तद्विशेष्यतानिरूपितप्रकारतावच्छिन्नत्वस्यैव तत्पारतन्त्र्यपदार्थत्वात्॥

यत्तु—तत्र प्रतियोगिविशेष्यतयाऽभावविशेष्यतया च निरूपिता एकैव प्रकारता स्वीक्रियते, स्वातन्त्र्येण प्रकारतास्थले तु विशेष्यभेदेन प्रकारताभेदः तादृशप्रकारताया एकैकसाधारणत्वात्। एवञ्च तदीयविशेष्यतानिरूपितप्रकारताऽभिन्नत्वमेव, तत्पारतन्त्र्यम्। न चैवं सति तादृशज्ञानस्याभावांश इव प्रतियोग्यंशेऽपि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन कम्बुग्रीवादिमत्त्वप्रकारकत्वापत्तिः, अभावविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नप्रकारताया एव भवन्मते प्रतियोगिवि-

शेष्यतानिरूपितप्रकारतात्मकत्वात् तथाच तादृशज्ञानं प्रतियोग्यंशेऽपि तस्य भ्रमः स्यादिति वाच्यम्। तादृशज्ञानस्य हि प्रतियोगिनिष्ठविशेष्यतानिरूपिततत्संबन्धावच्छिन्नकम्बुग्रीवादिमत्त्वप्रकारताशालित्वेऽपि प्रतियोगिनिष्ठविशेष्यतानिरूपिता या तादृशसंसर्गनिष्ठसंसर्गता तन्निरूपकतद्धर्मप्रकारताकत्वं नास्ति तादृशसंसर्गनिष्ठसंसर्गताया अभावविशेष्यतयैव समं निरूप्यनिरूपकभावोपगमात् । इत्थं च तन्निष्ठविशेष्यतानिरूपिततत्संसर्गनिष्ठसंसर्गतानिरूपकतद्धर्मप्रकारताकत्वमेव तदंशे तत्संबन्धेन तद्धर्मप्रकारकत्वमतो न दर्शिताऽतिप्रसङ्ग–इति ।

तदसत्। तथासति प्रतियोग्यंशे तादृशज्ञानीयकम्बुग्रीवादिमत्त्वप्रकारताया अपि अभावपारतन्त्र्यापत्तेः, तद्विशिष्टबोधकशब्देन प्रतियोग्यनुल्लेखापत्तेः ।

अथ प्रतियोगिविशेषणीभूतधर्मस्याभावांशे निरुक्तप्रकारताकल्पनापेक्षया संसर्गतायां प्रकारतात्वादिकल्पनमेवोचितं धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात्। न च भवन्मतेऽपि तद्धर्मावच्छिन्नत्वांशे प्रतियोगिसंसर्गीभूतप्रतियोगित्वविशेषणतया संसर्गतायाः कल्पनीयतया धर्मिकल्पनमावश्यकमिति वाच्यम् । भवन्मतेऽप्यवच्छिन्नप्रतियोगिताकत्वांशे तद्धर्मनिष्ठप्रकारतानिरूपितसंसर्गतायाः कल्पनीयतया संसर्गताकल्पनस्य तुल्यत्वादिति चेन्न ।

अभावांशे प्रतियोगिविशेषणधर्मस्य प्रकारतामते प्रतियोगिप्रकारतानिरूपिता या प्रतियोगित्वनिष्ठसंसर्गता, सैव प्रतियोगिविशेषणनिष्ठप्रकारतानिरूपिता या अवच्छिन्नत्वनिष्ठसंसर्गता तन्निरूपितापि, एतावतैव तादृशधर्मस्य स्वावच्छिन्नप्रतियोगिताकत्वरूपसंसर्गभाननिर्वाहात्। एवञ्च तद्धर्मावच्छिन्नत्वविशेषितप्रतियोगितानिरूपकत्वे प्रतियोगिसंसर्गतावादिनस्तव मम चावच्छिन्नत्वप्रतियोगित्वनिरूपकत्वेष्वेकैकसंसर्गताकल्पनस्य तुल्यतया तव तादृशावच्छिन्नत्वनिष्ठसंसर्गतानिरूपिततत्तद्धर्मनिष्ठसंसर्गतानिरूपिततद्धर्मनिष्ठप्रकारताकल्पनस्य तुल्यतया भवतां संसर्गतायां प्रकारतात्वादिकल्पनस्याधिक्यात्। न च भवन्मतेपि तादृशप्रकारतायाः पारतन्त्र्यनिर्वाहाय तत्र प्रतियोगिनिष्ठविशेष्यतानिरूपितप्रकारतावच्छिन्नत्वकल्पनमधिकमिति वाच्यम्। भवन्मतेऽपि तत्तद्धर्मनिष्ठप्रकारताविशेषात्मकसंसर्गतायामवच्छिन्नत्वानुयोगिकसम्बन्धविशेषावच्छिन्नत्वस्याधिकस्य कल्पनीयतया साम्यात् ।

अथवा किमेतावता सूक्ष्मगवेषणायासेन, अस्तु संसर्गताविशेषाणां प्रकारतादिविशेषरूपता, नैतावतापि संसर्गस्य विशिष्टधीविषयतासि·

द्धिः। झटिति विघटितनिर्युक्तिकसिद्धान्तानुरोधनिस्सङ्कखयश्रृङ्खलानां विषयतात्वस्य प्रकारतात्वादिव्यापकताभङ्गभीरुतया दुरभिभवत्वात् इति वदन्ति॥

संसर्गतया च समं प्रकारताया विशेष्यतायाश्च निरूप्यनिरूपकभावाख्यसम्बन्धविशेषोऽभ्युपगन्तव्यः। स च सम्बन्धः कार्यत्वकारणत्वाधेयत्वाधारत्वप्रतियोगित्वानुयोगित्वादीनां मिथस्तादृशसम्बन्ध इव स्वरूपविशेषः पदार्थान्तरमेव वा, अन्यथा तत्र तेन सम्बन्धेन तत्प्रकारकमित्येतदर्थस्य दुर्वचत्वात्।

न च तत्संसर्गकत्वे सति तन्निष्ठविशेष्यतानिरूपिततत्प्रकारताकत्वमेव तत्र तेन सम्बन्धेन तत्प्रकारकत्वमिति वाच्यम्। तथासति भूतलादौ संयोगेन घटादिकं समवायेन च रूपादिकमवगाहमानाया धियो भूतलांशे संयोगेन रूपादिप्रकारकत्वस्य समवायेन च घटादिप्रकारकत्वस्यापत्तेः। एवं समवायेन कपालांशे संयोगेन च भूतलांशे घटमवगाहमानाया बुद्धेस्समवायेन भूतलांशे संयोगेन च कपालांशे घटप्रकारकत्वापत्तेः। तत्स्वीकारे च तन्निष्ठविशेष्यतानिरूपिततदीयसंसर्गतानिरूपिता या तदीयप्रकारता तत्प्रतियोगित्वमेव तदंशे तेन सम्बन्धेन तत्प्रकारकत्वम्, यस्य यः सम्बन्धो यत्र भासते तदीयविशेष्यतातदीयप्रकारताभ्यामेव तदीयसंसर्गताया निरूप्यनिरूपकभावान्नोक्तातिप्रसङ्गः। न च प्रकारतायाः संसर्गविशेषावच्छिन्नतया तत्संसर्गावच्छिन्नतदीयप्रकारतानिरूपिततदीयविशेष्यताकत्वमेव तेन सम्बन्धेन तदंशे तत्प्रकारकत्वमस्तु, किमुक्तनिरूप्यनिरूपकभावोपगमेनेति वाच्यम्। संसर्गनिष्ठावच्छेदकतानिरूपकत्वरूपसंसर्गावच्छिन्नत्वस्य प्रकारतायां स्वीकृतावेव संसर्गताप्रकारतयोर्निरूप्यनिरूपकभावसिद्धेः, संसर्गतायास्संसर्गनिष्ठावच्छेदकतारूपत्वात्। न चैवमपि प्रकारतयैव समं तस्या निरूप्यनिरूपकभावोऽस्तु, न तु विशेष्यतयापि समयुक्तबुद्धिनिरूपितायाः समवायनिष्ठसंसर्गतानिरूपितघटप्रकारताया भूतलविशेष्यतानिरूपितत्वविरहात्, संयोगनिष्ठसंसर्गतानिरूपिततत्प्रकारतायाश्च कपालविशेष्यतानिरूपितत्वविरहादुक्तातिप्रसङ्गवारणादिति वाच्यम्। विनिगमनाविरहेणैव विशेष्यतयापि समं तस्या निरूप्यनिरूपकभावसिद्धेर्निष्प्रत्यूहत्वात्। एवञ्च विशेष्यताप्रकारतयोस्साक्षान्निरूप्यनिरूपकभावोऽप्रामाणिकः, किन्तु प्रकारतायां विशेष्यतानिरूपितसंसर्गतानिरूपितत्वमेव विशेष्यतानिरूपितत्वम्, विशेष्यतायां प्रकारतानिरूपितसंसर्गतानिरूपितत्वमेव च प्रकारतानिरूपितत्वम्। कार्यकारणभावावच्छेदककोटौ यत्र प्रकारताविशेष्यतयोर्निवेशस्तत्र संसर्गस्याप्यवश्यं निवेशात्, तयोर्निरू-

प्यनिरूपकभावानभ्युपगमेऽपि गौरवानवकाशादिति तु ध्येयम्(१)।

प्रकारता च द्विविधा-निरवच्छिन्ना विशेषणान्तरावच्छिन्ना च। तत्र निरवच्छिन्ना घट इत्याद्याकारकज्ञानीयघटत्वादिप्रकारता तत्र स्वरूपत एव घटत्वादेर्भानात्। तादृशी च प्रकारता जात्यखण्डोपाधिभिन्ने न स्वीक्रियते। सावच्छिन्ना च घटवदित्यादिज्ञानीयघटादिप्रकारता तत्र घटत्वादेरवच्छेदकत्वात्। न च तादृशप्रकारताया घटत्वादिना सममवच्छेद्यावच्छेदकभावो निर्युक्तिकः द्रव्यवदित्यादिज्ञानात्तादृशज्ञानस्य घटांशे विभिन्नप्रकारकतयैव वैलक्षण्योपपत्तेरिति वाच्यम्। तादृशज्ञानीयघटादिप्रकारताया घटत्वाद्यवच्छिन्नत्वानुपगमे द्रव्यवद्भूतलं घटश्चेत्याद्याकारकसमूहालम्बनात्मकज्ञानात् घटवत् भूतलं द्रव्यञ्चेति समूहालम्बनज्ञानस्यैव वैलक्षण्यानुपपत्तेः, उभयोरेव घटांशे द्रव्यत्वघटत्वोभयप्रकारकत्वाद्भूतलांशे घटप्रकारकत्वाच्च, मन्मते पुनराद्ये द्रव्यत्वावच्छिन्ना घटीया प्रकारता अन्त्ये च घटत्वावच्छिन्ना सेति प्रकारतावैलक्षण्यात्तयोर्वैलक्षण्यम्।

वस्तुतस्तु घटत्वादिनिष्ठप्रकारतानिरूपितत्वमेव घटादिप्रकारतायां घटत्वाद्यवच्छिन्नत्वम्। न च प्रकारताविशेष्यतयोरेव निरूप्यनिरूपकभावो न तु प्रकारतयोरपीति वाच्यम्। तत्र घटादिनिष्ठायाः भूतलादिनिष्ठविशेष्यतानिरूपितप्रकारताया एव घटत्वादिप्रकारतानिरूपितविशेष्यतात्मकत्वात् तादृशप्रकारतयोर्निरूप्यनिरूपकभावोपपत्तेः।

केचित्तु—घटत्वप्रकारतानिरूपितविशेष्यतावच्छेदेन भूतलांशे घटस्य प्रकारता घटवदित्येतादृशज्ञाने स्वीक्रियते, अत एवोक्तज्ञानयोर्भेदः इत्याहुः।

तच्चिन्त्यम्।

परेतु—घटवदित्याद्याकारकं विशिष्टविशेषणकज्ञानं द्विविधं विशिष्टवैशिष्ट्यबोधात्मकं, केवलं विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति रीत्या घटत्वाद्यवगाहि च। तत्र प्रथमे घटत्वादेः प्रकारतावच्छेदकत्वम्। द्वितीये तु प्रकारतात्मकविशेष्यतानिरूपितं प्रकारत्वं न तु प्रकारतावच्छेदकत्वमपि-इत्याहुः।

स च विशिष्टवैशिष्ट्यविचारे स्फुटीभविष्यति।

विशेष्यता च क्वचिन्निरवच्छिन्ना क्वचिच्च विशेषणान्तरावच्छिन्ना।

---

(१) विनिगमनाविरहादेव तयोरपि साक्षान्निरूप्यनिरूपकभावसिद्धिरिति केचित्। वस्तुतस्तु संयोगेनावृत्तिर्गुण इति निश्चयप्रतिबध्यतावच्छेदकलाघवात्संसर्गत्वप्रकारतयोः, संयोगेनानधिकरणं गुण इति निश्चयप्रतिबध्यतावच्छेदकलाघवात्संसर्गत्वविशेष्यतयोः, सम्बन्धसामान्येन घटासम्बद्धभूतलमितिनिश्चयप्रतिबध्यतावच्छेदकलाघवात्प्रकारत्वविशेष्यतयोर्निरूप्यनिरूपकभाव आवश्यक इति।

तत्र निर्धर्मितावच्छेदके घट इत्याद्याकारकज्ञाने घटत्वादिप्रकारतानिरूपित-विशेष्यता निरवच्छिन्ना। अयं घट इत्याद्याकारकसधर्मितावच्छेदककघट-त्वादिविशिष्टबुद्धौ च घटत्वादिप्रकारतानिरूपितविशेष्यता इदन्त्वाद्यवच्छि-न्ना। अत एव इदन्त्वादिकं तत्र धर्मितावच्छेदकमित्युच्यते, विशेष्यताव-च्छेदकताया एव धर्मितावच्छेदकतापदार्थत्वात्॥ विशेष्यतानिरूपितमव-च्छेदकत्वं च न तन्निरूपितप्रकारत्वम्, तथासति घट इत्यादिज्ञानेऽयं घट इत्यादिज्ञाने च घटत्वस्य धर्मितावच्छेदकत्वापत्तेः, निर्धर्मितावच्छे-दककविशिष्टबुद्धिविलोपप्रसङ्गाच्च, किन्तु प्रतियोगित्वादिनिरूपिताव-च्छेदकत्ववत् स्वरूपविशेषः पदार्थान्तरमेव वा।

अथवा प्रकारताविशेष एव तत्, अन्यथा सधर्मितावच्छेदकज्ञा-नस्य धर्मितावच्छेदकप्रकारकत्वोपपत्तये तन्निष्ठतज्ज्ञानीयप्रकारतान्तर-कल्पने गौरवात्। न च ज्ञानान्तरक्लृप्ततद्धर्मनिष्ठप्रकारतयैवोपपत्तेर्ना-तिरिक्तप्रकारताकल्पनमिति वाच्यम्। एवमपि तद्धर्मितावच्छेदकस-मानविषयताकानन्तज्ञानेषु तादृशप्रकारताप्रतियोगित्वकल्पनापेक्षया तावत्साधारणंकधर्मितावच्छेदकतायां प्रकारतात्वकल्पने लाघवात्। न चैवमयं घट इत्यादिज्ञाने इदन्त्वादेः स्वस्यापि धर्मितावच्छेदक-त्वापत्तिरिति ततोऽयमयमित्याद्याकारकस्मरणप्रसङ्ग इति वाच्यम्। यतस्तदीयप्रकारतानिरूपितायाः धर्मितावच्छेदकताया आश्रय एव तदीयधर्मितावच्छेदकः, उक्तस्थले चेदन्त्वनिष्ठधर्मितावच्छेदकतायाः स्वात्मकप्रकारतायां निरूप्यनिरूपकभावविरहान्नातिप्रसङ्गः। न चैवम-पीदन्त्वादिकं घटत्वादेरपि धर्मितावच्छेदकं न स्यात्, तन्निष्ठधर्मिता-तावच्छेदकतया घटत्वादिप्रकारताया अपि निरूप्यनिरूपकभावे माना-वात्, परम्परया निरूप्यनिरूपकभावस्य च प्रकृतेऽपि सत्त्वादिति वाच्यम्। एतदनुरोधेनैव धर्मितावच्छेदकत्वविशेषणीयप्रकारत्व-योरपि निरूप्यनिरूपकभावोपगमात्। यत्प्रकारतानिरूपितत्वावच्छेदेन विशेष्यताया यदवच्छेद्यत्वं स एव तद्धर्मितावच्छेदकः, उक्तस्थले च स्वप्रकारतानिरूपितत्वावच्छेदेन न विशेष्यतायास्स्वावच्छेद्यत्वमतो न स्वांशे स्वस्य धर्मितावच्छेदकत्वापत्तिरित्यप्याहुः॥

विशेष्यता च समूहालम्बने प्रकारभेदाद्भिद्यते समूहालम्बनस्य प्रत्येकप्रकारकज्ञानसामग्रीसमाजनियततया प्रत्येकप्रकारकज्ञानीयनाना-विशेष्यताप्रतियोगित्वस्यैव तत्र सत्त्वात्। अयं घटो दण्डी कुण्डलीत्या-द्याकारकैकधर्मितावच्छेदकापरधर्मप्रकारकज्ञाने धर्मितावच्छेदकतायाः प्रकारताविशेषत्वमते उभयप्रकारतानिरूपिता एकैव विशेष्यता। धर्मि-तावच्छेदके ज्ञानान्तरसाधारणप्रकारतान्तरकल्पे तु प्रकारभेदेन

विशेष्यताभेदः। यदि च समूहालम्बनविलक्षणो विशेषणविशेष्यतावच्छेदकभावानापन्नखड्गकुण्डलाद्युभयविशिष्टविषयकः खड्गी कुण्डली चैत्र इत्याद्याकारकबोधोऽनुभवसिद्धस्तदा तत्राप्युभयप्रकारतानिरूपितैकविशेष्यता, अन्यथा समूहालम्बनात्तद्वैलक्षण्यानुपपत्तेः। एवं मिथो विशेषणविशेष्यतावच्छेदकभावानापन्नखड्गकुण्डलोभयादिकं यत्र शौर्य्यादिधर्मितावच्छेदकतया भासते, खड्गी कुण्डली चैत्रश्शूर इत्याद्याकारके तादृशबोधे च खड्गकुण्डलोभयादिप्रकारतानिरूपितैकविशेष्यता, तादृशविशेष्यता च तादृशोभयाद्यवच्छिन्नशौर्य्यादिप्रकारतानिरूपितविशेष्यतातो भिन्नाऽभिन्ना वेति तु पूर्वोक्तवदूहनीयम्। एवं खड्गाद्येकतरधर्मितावच्छेदकतापन्नस्यैवापरस्य कुण्डलादेर्विधेयधर्मितावच्छेदकत्वं यत्र तत्र खड्गादिप्रकारतानिरूपितकुण्डलाद्यवच्छिन्नविशेष्यताविधेयप्रकारतानिरूपितोभयधर्मावच्छिन्नविशेष्यतयोरभेदः, अन्यथा मिथो विशेषणविशेष्यतावच्छेदकभावानापन्नखड्गकुण्डलोभयधर्मावच्छिन्नविशेष्यकशौर्य्यादिविधेयकबोध एव यत्र स्वातन्त्र्येण कुण्डलस्य खड्गधर्मितावच्छेदकतया भानं तादृशसमूहालम्बनात्तस्य वैलक्षण्यानुपपत्तेः। एवञ्च सति खड्गादेः खड्गादिप्रकारतानिरूपितविशेष्यताया अवच्छेदकत्वेऽपि यथा न तस्य स्वधर्मितावच्छेदकत्वं तथोपपादितं प्रागेव॥ तत्रोक्तविशेष्यते भिन्ने एव, किन्त्वेकविशेष्यताऽपरविशेष्यतावच्छेदकभावापन्नेति समूहालम्बनाद्विशेष इत्यप्याहुः॥

इत्थं प्रकारतादिवत् विधेयत्वमपि विषयतान्तरं न तूक्तप्रकारत्वमेव तत्, धर्मितावच्छेदकस्यापि तथात्वापत्तेः।

अथ विशेष्यतावच्छेदकताभिन्नमुख्यविशेष्यतानिरूपितप्रकारतैव विधेयता, पर्वतो वन्हिमानित्यादौ च पर्वतत्वादिरूपधर्मितावच्छेदकनिष्ठप्रकारता धर्मितावच्छेदकतात्मिकैव, धर्मितावच्छेदकतायाः प्रकारतात्वस्य व्यवस्थापितत्वादतो न तत्र पर्वतत्वादेर्विधेयतापत्तिः। तादृशज्ञाने वह्न्यादेरिव वन्हित्वादेर्वन्हिमत्पर्वतवान्देश इत्यादौ च वह्नेर्विधेयतावारणाय मुख्यविशेष्यतानिरूपितत्वं विशेषणम्। मुख्यत्वञ्च विशेष्यतायां प्रकारतानवच्छिन्नत्वं, प्रकारताभिन्नत्वं वा। न च विशेष्यतावच्छेदकताभिन्नत्वाद्युपस्थितिं विनापि पर्वतो वह्निमानित्याद्यनुमित्यनन्तरं पर्वते वन्हिमनुमिनोमीत्याद्याकारकस्य वह्न्यादिविधेयकत्वावगाहिनोऽनुव्यवसायस्योत्पत्त्या निरुक्तप्रकारताया विधेयतात्मकत्वं नोपपद्यत इति वाच्यम्। वन्हिप्रकारकानुमितित्वस्यैव तादृशानुव्यवसायविषयत्वोपगमात्। न चैवं वन्हिमान्पर्वतो घटवानित्यनुमित्यनन्तरमपि तादृशानुव्यवसायापत्तिरिति वाच्यम्। निरुक्ततन्निष्ठप्रकारताक-

त्वस्य तत्प्रकारकानुमितित्वव्यञ्जकतया तादृशापत्त्यसम्भवात्(१)। भवन्मतेऽपि तद्विधेयकानुमितौ यथाकथञ्चिदुपस्थिततद्विधेयकत्वग्रहवारणाय तत्र तद्विधेयकत्वस्य हेतुताया आवश्यकत्वात्। न च तादृशानुव्यवसाये तन्निष्ठविलक्षणविषयतारूपविधेयतायाः प्रतियोगितासम्बन्धेन हेतुकत्वकल्पनापेक्षया निरुक्तनिष्ठप्रकारताया गुरुशरीरायास्तत्संबन्धेन हेतुताकल्पने गौरवाद्विलक्षणविषयतासिद्धिरिति वाच्यम्। कार्यकारणभावलाघवानुरोधेन जात्यतिरिक्त पदार्थसिद्धेः सिद्धान्तविरुद्धत्वादन्यथा धूमादिपरामर्शजन्यतावच्छेदकतयाऽप्यालोकादिलिङ्गकानुमितिव्यावृत्तेर्विलक्षणविषयतासिद्धिप्रसङ्गात्(२)। न च निरुक्तप्रकारतातोऽतिरिक्तैव विधेयताख्यविषयता, अन्यथा धर्मितावच्छेदकताभिन्नत्वाद्यनुपस्थितिदशायां वह्निमान्पर्वतो घटवानित्याद्यनुमित्यनन्तरं पर्वते घटमनुमिनोमि न वह्निमित्याद्याकारकस्य वह्निविधेयकत्वाभावावगाहिनोऽनुव्यवसायस्यापलापप्रसङ्गात्, वह्न्यादिप्रकारकाऽनुमितिविषयकस्य तस्य वह्निप्रकारकत्वसामान्याभावावलम्बनत्वासम्भवादिति वाच्यम्। धर्मितावच्छेदकताभिन्नत्वाद्यनुपस्थितिदशायां तादृशप्रतीतेः प्रामाणिकत्वे निरुक्तप्रकारतायामेव विधेयतात्वाख्यधर्मविशेषं स्वीकृत्य तेन रूपेण निरुक्तप्रकारतायाः प्रतियोगितासम्बन्धावच्छिन्नाभावस्यैव तादृशप्रतीतिविषयतायाः स्वीकरणीयत्वात्। भवन्मतेऽपि संबन्धादिभेदभिन्नविधेयतानामनुगमाय तादृशातिरिक्तधर्मस्वीकारस्यावश्यकत्वात्। अन्यथा विधेयतानामनतिप्रसक्तसामान्यधर्मावच्छिन्नाभावासम्भवेन तत्तद्व्यक्तित्वावच्छिन्नाभावकूटस्यैव तादृशप्रतीतिविषयतायाः स्वीकरणीयतयाऽभावकूटस्य विशिष्य युगसहस्रेणापि ग्रहीतुमशक्यतया तादृशप्रतीतेरेवानुपपत्तेः। विधेयताप्रतियोगिकाभावत्वेन तावदभावानां तद्विषयत्वोपगमे तादृशप्रतीतेः प्रतियोगितावच्छेदकतानवगाहितया वह्निमनुमिनोमीत्यादिप्रतीतेर्विरोधित्वानुपपत्तेरिति चेन्न।

निरुक्तप्रकारताया एव विधेयतात्वे पृथिव्यां जलादिभेदो, ह्रदे धूमाभाव इत्याद्याकारकसाध्यविशेष्यकानुमितीनां तद्विधेयकत्वानुपपत्तेः। तथाविधानुमितिविशेष्यतायां विधेयतात्वोपगमान्नेयमनुपप-

---

(१) विषयतासम्बन्धेन तादृशानुव्यवसायम्प्रति स्वरूपतस्तस्य कारणत्वान्नोक्तदोषः॥

(२) व्यभिचारवारणाय कार्य्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशनं व्यर्थमिति भावः॥

त्तिरिति चेत्। तर्हि तादृशानुमितिविशेष्यतायास्तत्समानप्रकारकसमानविशेष्यकपृथिव्यादिसाध्यकानुमितावपि सत्त्वेन तस्या अपि इतरभेदादिविधेयकत्वापत्तेः।

अथ पृथिव्यादिपक्षकतादृशानुमितितत्साध्यकतादृशानुमित्योर्भिन्नभिन्नैव तादृशी विशेष्यता, एवञ्च साध्यविशेष्यकानुमितिविशेष्यतायामेव विधेयतात्वमभ्युपेयत इति नोक्तातिप्रसङ्ग इति चेन्न।

साध्यविशेष्यकानुमितावतिरिक्तविधेयतात्मकविशेष्यतोपगमे इतरभेदः पृथिव्यामित्याद्याकारकपृथिवीसाध्यकानुमितौ विधेयतानात्मकं विशेष्यतान्तरं, तथाविधप्रत्यक्षे चाऽन्यद्विशेष्यत्वमिति तिसृणां विशेष्यतानां कल्पनापेक्षया प्रत्यक्षानुमितिसाधारण्या एकविशेष्यतायाः साध्यविशेष्यकसाध्यविशेषणकानुमितिसाधारण्या एकस्या विधेयतायाश्च कल्पनस्यैवौचितत्वात्। न चास्मन्मतेऽनुमितौ या विधेयतानात्मिका विशेष्यता सैव प्रत्यक्षेऽपीति न विशेष्यतात्रयकल्पनमिति वाच्यम्। प्रत्यक्षे विधेयतात्मिका तदनात्मिका वा विशेष्यता कल्प्यत इत्यत्र विनिगमनाविरहात्॥

यत्तु साध्यविशेषणकानुमितौ क्लृप्तनिरुक्तप्रकारतैव विधेयता, अतिरिक्तविधेयता तु साध्यविशेष्यकानुमितावेव, अनन्तसाध्यविशेषकानुमितिव्यक्तिषु अतिरिक्तविधेयतासम्बन्धकल्पनापेक्षया तन्निरूपितस्वल्पतरनिरुक्तप्रकारतासु विधेयतात्वकल्पने लाघवादिति।

तदपि न चारु। तादृशप्रकारताया विधेयतात्वोपगमे पर्वतो वन्हिमान्, पर्वतो निर्धूमस्स्यादित्याकारकसमूहालम्बनापरयात्मकज्ञानस्य वह्न्यादिविधेयकत्वापत्तेः। न चेष्टापत्तिः। तथासति तादृज्ञापत्त्यनन्तरं पर्वते धूमाभावमापादयामि न तु वन्हिमित्याकारकवन्हिविधेयकत्वाभावप्रतीतेरनुपपत्तेः। एतेन साध्यविशेष्यकानुमितिरेवाऽप्रामाणिकी, अप्रसिद्धसाध्यकस्थले(१) विशेष्ये विशेषणमिति रीत्या साध्यविशेषणकानुमितिरेवोत्पद्यते विशिष्टबुद्धिसामान्ये विशेषणज्ञानहेतुताया निर्युक्तिकत्वात्, तथाच निरुक्तप्रकारतैव विधेयता, भावसाध्यकस्थले तु साध्यविशेष्यकानुमितेरत्यन्ताप्रामाणिकतया तत्र सुतरामेवेत्यपि निरस्तम्॥

यत्तु अनुमितावापत्तौ च तद्व्याप्यवत्ताज्ञानजन्यत्वमेव तद्विधेयकत्वमिति।

तदसत्। यतोऽतिरिक्तविधेयतानभ्युपगमे तद्व्याप्यवत्ताज्ञानस्य स्वानन्तरोत्पन्नतत्प्रकारकानुमितित्वादिकमेव जन्यतावच्छेदकं वाच्यम्।

(१) साध्यज्ञानं विना व्यतिरेकपरामर्शोत्पत्तिस्थले॥

न तु तत्र तद्विधेयतानिवेशसंभवः, आत्माश्रयप्रसङ्गात् । तथाच सिद्ध्यभावाऽऽपाद्यव्यतिरेकनिश्चयरूपकारणासमवहितवन्हिव्याप्यवत्ताज्ञानानन्तरोत्पन्नयोर्वन्हिमत्पर्वतत्वावच्छिन्नपक्षकघटादिविधेयकानुमित्यापत्त्योरपि तादृशज्ञानजन्यतया वन्हिविधेयकत्वप्रसङ्ग इति पक्षताविशेषादिजन्यत्वस्य विधेयताशरीरघटकत्वे पक्षताद्युपस्थितिविरहकालेऽपि सर्वानुभवसिद्धाया वन्हिं नानुमिनोमीत्याद्याकारकप्रतीतेरपलापप्रसङ्गात् । न च पक्षताविशेषादिजन्यत्वविशिष्टस्वव्याप्यवत्ताज्ञानजन्यत्वसम्बन्धेन वह्न्यादिमदन्यत्वमेव तादृशप्रतीतिविषयोऽस्तु, तत्र च न पक्षताद्युपस्थितेरपेक्षा सम्बन्धज्ञानस्य विशिष्टबुद्धावहेतुत्वादिति वाच्यम् । अनन्तपदार्थघटिततादृशधर्मस्य सम्बन्धत्वे मानाभावात् ।

एवमेतन्मते शाब्दबोधस्य सविधेयकत्वानुपपत्तिः, तस्य व्याप्यवत्ताज्ञानाजन्यत्वात् । न च तत्र निरुक्तप्रकारतैव विधेयतेति वाच्यम् । पर्वते वन्हिरित्यादिवाक्यजन्यशाब्दबोधे वह्न्यादेर्विधेयत्वानुपपत्तेः । न च तत्र वह्न्यंशे पर्वताधेयत्वमेव विधेयं, न तु पर्वतांशे वन्हिरिति वाच्यम् । शाब्दबोधे चरमनिर्दिष्टपदार्थस्यैव विधेयत्वात्(१) । अत एव "न्यक्कारो ह्ययमेव मे यदरयः" इत्यादौ विधेयत्वेन तात्पर्यविषयस्य न्यक्कारादेः प्राङ्निर्दिष्टपदोपस्थाप्यतया तद्विधेयकान्वयबोधासम्भवादालङ्कारिका विधेयाविमर्श(२)दोषमुदाहरन्ति । अत एव "गुणानां गुणत्वमि"त्यादौ गुणत्वस्यैवोद्देश्यतावच्छेदकतया विधेयतया चान्वयबोधानुपपत्तिराशङ्किता, वर्द्धमानोपाध्यायैः । विशेष्यस्य विधेयत्वे तत्र गुणत्वस्य तदनुपपत्त्या तादृशाशङ्कनासङ्गतेः । न च परार्थानुमाने गुणत्वरूपलक्ष्यतावच्छेदकधर्मावच्छिन्ने इतरभेदसाधनाय प्रयुक्तादितरव्यापकीभूताभावप्रतियोगिगुणत्ववानयमित्येतादृशोपनयावयवादन्वयबोधानुपपत्तिरेव तैराशङ्कितेति वाच्यम् । तत्र दण्डवान् रक्तदण्डवानित्यादाविव विधेयांशे व्याप्तिभानाधिक्येन गुणत्वसम्बन्धिन एवाभेदसम्बन्धेन विधेयतया चाऽन्वयबोधानुपपत्तिविरहात् । न च नामार्थयोः साक्षादन्वयस्याव्युत्पन्नतया पर्वते वह्निरित्यादौ पर्वताद्यंशे कथं विधेयतयाऽन्वय इति वाच्यम् । साक्षाद्विशेषणविशेष्यभावेनान्वयस्यैव नामार्थयोरभ्युपगमात्, अत्र परस्परस्यैव विशेष्यविशेषणभावोपगमात् ।

अथ शाब्दबोधे चरमनिर्दिष्टपदार्थस्य विधेयत्वे "वपुर्विरूपाक्षमि"-

---

(१) तदुद्देश्यतानिरूपितविधेयतासम्बन्धेन शाब्दं प्रति तत्पदोत्तरपदोपस्थाप्यत्वं तन्त्रमिति भावः । (२) अविमर्शः अप्रतिपत्तिः ॥

स्यादा(१)वद्यो वैरूप्यस्य विधेयत्वानुपपत्तिः। वैरूप्यविशिष्टस्यादण एव तत्र वपुरंशे विधेयत्वे "अलक्ष्यजन्मते"त्यत्रापि अलक्ष्यजन्मताया एव विधेयतया तात्पर्यविषयत्वमित्यस्य वक्तुं शक्यतया अलक्ष्यताया अविधेयत्वेनाऽविमृष्टविधेयांशोदाहरणताया अनुपपत्तेः। यदि च तत्र शुद्धस्य जन्मनो विवक्षितमहादेवापकर्षासंपादकतया न विधेयत्वेन विवक्षितत्वमपि तु जन्मनोऽलक्ष्यताया एवेति मन्यते, तदा तुल्यं प्रकृतेऽपि इति चेन्न।

समासातिरिक्तस्थले चरमनिर्देशस्य विधेयतानियामकत्वात्।

एवं निरुक्तप्रकारताया विधेयतात्वे "द्वितीयमौर्वीमिवे"त्यादौ(२) विधेयत्वेन विवक्षितस्य समासघटकपूर्वपदेन प्रतिपादने विधेयाविमर्शः, "मौर्वीं द्वितीयामिवे"त्यसमस्तपदेन प्रतिपादने दोषोद्धार इत्यालङ्कारिकप्रवादविरोधश्चेति। विधेयतावत् तन्निरूपितोद्देश्यतापि प्रकारतादिभिन्नविषयताविशेष एव। न चैवं विशेष्यतैवोद्देश्यता पर्वते वह्निरित्यादिवाक्यजन्यशाब्दबोधे साध्यविशेष्यकानुमितेः प्रामाणिकत्वेन तत्र च पर्वतस्योद्देश्यतानुपपत्तेः। न च विधेयतानिरूपकत्वमुद्देश्यत्वं, तच्च तदंशे विधेयत्वं, तस्य विशेष्यत्वे प्रकारत्वे चाक्षतमेवेति किमुद्देश्यताख्यातिरिक्तविषयत्वोपगमेनेति वाच्यम्। उद्देश्यत्वमेवाऽतिरिक्तं तन्निरूपकत्वमेव विधेयत्वमित्यस्यापि वक्तुं शक्यतया विनिगमनाविरहेणोभयस्यैवातिरिक्तता सिद्धेः॥

इदन्त्ववधेयम्। अस्तु विधेयत्वमुद्देश्यत्वञ्चातिरिक्तं, तयोर्विषयतात्वे मानाभावः। पर्वतो वह्निमानित्यनुमितौ पर्वतवह्न्यादिषु तथाविधप्रत्यक्षसाधारणविशेष्यताप्रकारतास्वीकारस्यावश्यकतया तत एव तादृशज्ञानस्य तद्विषयकत्वोपपत्तेः। प्रकारतादीनां तत्रानुपगमे तादृशानुमित्यादीनां बाधाद्यप्रतिबध्यत्वप्रसङ्गः, विरोधिज्ञानाप्रतिबन्धकत्वप्रसङ्गश्च, प्रकारतादीनामेव तादृशप्रतिबध्यप्रतिबन्धकभावावच्छेदकत्वादिति दिक्(३)॥

इति महामहोपाध्यायगदाधरभट्टाचार्यकृतो विषयतावादः (३७) वीचिः समाप्तः।

---

(१) वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु। वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥ इति कुमारसम्भवीयः॥

(२) स्रस्तां नितम्बादवलम्बमानां पुनःपुनः केसरपुष्पकाञ्चीम्। न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य॥ इति कुमारसम्भवीयः॥

(३) तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकबुद्धितत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकनिश्चययोः प्रतिबध्यप्रतिबन्धकभावादिति भावः॥

श्रीगणेशायनमः।

## अथ प्रतिबध्यप्रतिबन्धकभाववाद (३८) वीचिः।

तद्धर्मावच्छिन्नविशेष्यताकतदभाववत्तानिर्णयकाले तद्धर्मावच्छिन्न विशेष्यताकतद्विशिष्टबुद्धेरनुदयात् पर्वतत्वावच्छिन्नविशेष्यताकसंयोगादिसंसर्गकवह्नित्वावच्छिन्नप्रकारताकालौकिकज्ञानत्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यताकदैशिकविशेषणतासंसर्गकसंयोगादिसंसर्गावच्छिन्नवह्नित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रकारकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिर्णयत्वेन प्रतिबन्धकत्वं कल्प्यते। पर्वतत्वावच्छिन्नविशेष्यताकतदभाववत्तानिर्णयकालेऽन्यधर्मावच्छिन्नविशेष्यताकतद्विशिष्टबुद्ध्युदयात् प्रतिबध्यतावच्छेदककोटौ पर्वतत्वावच्छिन्नविशेष्यताकत्वनिवेशः। संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानकाले समवायादिसंसर्गकविशिष्टबुद्ध्युदयात् संयोगादिसंसर्गकत्वनिवेशः।

अथ संयुक्तसंयोगादिसंसर्गकज्ञानस्यापि संयोगसंसर्गकतया संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्तानिर्णयदशायां तदनुदयप्रसङ्गः। किञ्चित्सांसर्गिकविषयतानवच्छिन्नसंयोगादिसांसर्गिकविषयताकत्वं निवेश्य तद्वारणे चावच्छेदकावच्छेदेन वह्निमत्ताज्ञानाद्यसंग्रहः, तत्र विशेष्यतावच्छेदकावच्छिन्नसंयोगादीनामेव संसर्गतया किञ्चित्सांसर्गिकविषयतानवच्छिन्नसंयोगादिसांसर्गिकविषयताकत्वाभावात्। पर्वतत्वाद्यवच्छिन्नत्वनिरूपितसांसर्गिकविषयत्वानवच्छिन्नसंयोगादिसांसर्गिकविषयतानिवेशेऽपि कालिकविशेषणताविशिष्टसंयोगादिसंसर्गकज्ञानं दुःसंग्रहमेवेति चेन्न।

पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपिता या संयोगादिसांसर्गिकविषयता तन्निरूपितवह्नित्वावच्छिन्नप्रकारताकत्वनिवेशनात्, संयुक्तसंयोगादिसंसर्गस्थले च पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितसंयोगादिनिष्ठसांसर्गिकविषयताया वह्न्यादिप्रकारतानिरूपितसांसर्गिकविषयताभिन्नतयाऽनुपपत्त्यभावात्। पर्वतो वह्न्यभाववानित्यादिबाधनिर्णयकाले पर्वतो द्रव्यवानित्याद्याकारकज्ञानोदयात् वह्नित्वाद्यवच्छिन्नप्रकारताकत्वनिवेशः। आनुमानिकभिन्नेन्द्रियजन्यबाधबुद्धिदशायां लौकिकसन्निकर्षजन्यविशिष्टबुद्ध्युदयात् अलौकिकत्वनिवेशः। अलौकिकत्वञ्च न सामान्यतो लौकिकसन्निकर्षजन्यज्ञानभिन्नत्वम् अन्यांशे लौकिकवह्न्याद्युपनीतज्ञानासंग्रहप्रसङ्गात्, किन्तु वह्न्यादिवृत्तिलौकिकसन्निकर्षजन्य-

ज्ञानभिन्नत्वं वह्न्याद्यभाववत्तानिर्णयप्रतिबध्यतावच्छेदककोटौ निवेश्यम् । न च चक्षुःसंयोगत्वकूसंयोगसाधारणलौकिकसन्निकर्षत्वस्य दुर्वचत्वात् कथं लौकिकसन्निकर्षजन्यभिन्नत्वस्य तथात्वमिति वाच्यम्। वह्न्यादिसंयोगजन्यभिन्नत्वस्यैव तथात्वात्, उपनीतज्ञानस्य च वह्न्यादिसंयोगाजन्यत्वेनानुत्पत्त्यसंभवात् । लौकिकसन्निकर्षजन्यज्ञाने उपनीतभानादिविषयताविलक्षणलौकिकविषयताविशेषस्वीकारे तु वह्न्यादिवृत्तिलौकिकविषयताकान्यत्वं ज्ञानांशे, वह्न्यादिप्रकारतायां वा लौकिकविषयताभिन्नत्वं निवेश्यं, न तु लौकिकसन्निकर्षजन्यभिन्नत्वं गौरवात् ।

अथ लौकिकसन्निकर्षजन्यज्ञाने व्यभिचारवारणाय अलौकिकत्वनिवेशे बाधकाले लौकिकसन्निकर्षजन्यसंशयापत्तिः । न च संशयस्यार्थसमाजग्रस्ततया कस्यचिज्जन्यतानवच्छेदकत्वात् तदवच्छिन्नस्यापादनमशक्यम्, तद्विशिष्टबुद्धित्वावच्छिन्नं तु निर्णयात्मकं जायत एवेति वाच्यम् । पर्वतत्वावच्छिन्नविशेष्यकवह्निविशिष्टबुद्धित्वे तथाविधवह्न्यभावविशिष्टबुद्धित्वाद्यवच्छिन्नस्यापत्त्यैव फलतः संशयापत्तेः ।

यत्तु लौकिकसन्निकर्षजन्यसंशयसाधारणं लौकिकनिर्णयान्यज्ञानत्वमेव प्रतिबध्यतावच्छेदकमतो न बाधकाले लौकिकसन्निकर्षजन्यसंशयापत्तिरिति ।

तदसत् । संशयसाधारणतादृशधर्मस्य बाधप्रतिबध्यतावच्छेदकत्वेऽपि उपदर्शितस्थले लौकिकसन्निकर्षादिसामान्यसामग्रीबलात् वह्निविशिष्टबुद्धित्ववह्न्यभावविशिष्टबुद्धित्वावच्छिन्नोत्पत्तौ बाधकाभावेन फलतः संशयापत्तेर्वारयितुमशक्यत्वात्, सामान्यसामग्र्या तादृशप्रतिबध्यतावच्छेदकानाक्रान्तस्य निर्णयस्यैव जनने बाधाभावरूपविशेषसामग्रीविरहस्याकिञ्चित्करत्वात् । निर्णयस्थले च विशेषसामग्र्यन्तराभावात् ।

एतेन संशये लौकिकविषयताऽनभ्युपगमेन लौकिकसन्निकर्षकालीनसंशयोऽपि लौकिकविषयताशून्यज्ञानत्वरूपबाधप्रतिबध्यतावच्छेदकाक्रान्त एवेति न बाधकाले तदापत्तिः । अथ लौकिकविषयतायाः संशयेऽनभ्युपगमे तस्य लौकिकसन्निकर्षजन्यतावच्छेदकानाक्रान्तत्वप्रसंग इति चेत् । का क्षतिः, ज्ञानसन्निकर्षादेव तदुत्पत्तेः, अत एव वह्निसं[illegible]नन्तरं न वह्निं साक्षात्करोमीत्याकारकसाक्षात्कारित्वग्रहः लौकिक[illegible]षयतायाः साक्षात्कारित्वव्यञ्जकत्वादिति । न च लौकिकसन्निकर्षादिकालीनसंशयस्य लौकिकविषयतावत्त्वे बाधकाभाव इति वाच्यम् । तल्लौकिकत्वावच्छिन्नं प्रति तत्कोटिकसंशयसामग्र्याः

अनायत्या प्रतिबन्धकत्वकल्पनात्, संशयसामग्रीदशायां लौकिकविषयताशालिज्ञानसामग्र्यभावस्यैव बाधकत्वात् । अथवा लौकिकान्यविषयतैव बाधप्रतिबध्यतावच्छेदिका, लौकिकसन्निकर्षजन्यसंशये लौकिकालौकिकोभयविषयतैव स्वीक्रियते, अतो भवति सोऽपि बाधप्रतिबध्यः, युज्यते चैतदेव, पूर्वकल्पे लौकिकविषयताकज्ञानं प्रति संशयसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवात् । न च संशये लौकिकविषयतास्वीकारे तत्र साक्षात्कारत्वधीः कथं न स्यादिति वाच्यम् । साक्षात्कारित्वग्रहं प्रति निर्णयत्वेन हेतुत्वं स्वीकृत्यैव संशये साक्षात्कारित्वग्रहवारणसम्भवेनान्यथानुपपत्त्यभावात्, सामग्रीप्रतिबन्धकत्वकल्पनापेक्षया च निर्णयत्वेन हेतुतायां लाघवस्यातिस्फुटत्वादित्यादिकमपास्तम् ।

एतावतापि वह्न्यभावादिनिर्णयानन्तरं लौकिकसन्निकर्षादिघटितसामग्रीबलात् वह्न्यादिबोधे बाधकाभावेनार्थिकसंशयस्य दुर्वारत्वात् इति चेत् ।

नैवम्, पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्न्यादिलौकिकप्रकारताशालिज्ञानं प्रति पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्न्यभावादिप्रकारताशालिज्ञानत्वेन प्रतिबन्धकता कल्प्यते । न चैवमपि समुच्चये व्यभिचार इति वाच्यम् । तदंशेऽव्याप्यवृत्तित्वज्ञानाभावविशिष्टतदभावप्रकारकज्ञानसामग्र्यभावस्य सहकारित्वाभ्युपगमेनापत्त्यभावादिति । एवञ्च वह्न्यभाववत्तानिर्णयानन्तरं वह्नितदभावोभयज्ञानसामग्रीकाले वह्न्यादिलौकिकप्रकारताशालिज्ञानं नापादयितुं शक्यते, एतादृशप्रतिबन्धकस्य प्राक् सत्त्वात्, नापि अलौकिकवह्न्यादिप्रकारताज्ञानम्, तत्प्रतिबन्धकबाधबुद्धेः सत्त्वात्, अन्यादृशतद्विषयताशालिज्ञानं त्वलौकमेवेति नानुपपत्तिगन्धोऽपि । लौकिकसन्निकर्षजन्यज्ञानस्य बाधसामान्याप्रतिबध्यतया तदिन्द्रियजन्यबाधकाले तदिन्द्रियजन्यज्ञानवारणाय लौकिकान्यत्वमनिवेश्य चाक्षुषादिविशिष्टबुद्धौ चाक्षुषादिबाधबुद्धेः पृथगेव प्रतिबन्धकत्वं कल्पनीयम् । पर्वतत्वावच्छिन्नविशेष्यतानिरूपिता या विशेषणताविशिष्टनिष्ठा सांसर्गिकविषयता तन्निरूपितवह्न्यभावनिष्ठप्रकारताशालिचाक्षुषत्वेन प्रतिबन्धकता पर्वतो वह्निमानितिचाक्षुषत्वेन प्रतिबध्यता कल्पनीया इत्यर्थः । शङ्खो न पीतः अयं नोरग इत्यादिबुद्धिदशायां मण्डूकवसाञ्जनादिदोषवशात् शङ्खवंशादौ पीतिमोरगत्वारोपोदयात् तत्र तादृशदोषविशेषाजन्यत्वमपि बाधसामान्याभावकार्यतावच्छेदककोटौ निवेशनीयम् ।

केचित्तु दोषविशेषजन्यज्ञानेऽपि लौकिकविषयताया एवाभ्युपगमात् अलौकिकत्वनिवेशेनैव तत्र व्यभिचारवारणसंभवात् दोषविशेषजन्यत्वस्य न प्रतिवध्यतावच्छेदककोटिप्रवेशः। न च लौकिकसन्निकर्षं विनैव तादृशस्मर्यमाणारोपोदयात् कथं लौकिकविषयताशालित्वं तस्येति वाच्यम्। लौकिकसन्निकर्षवद्दोषविशेषस्यापि तादृशविषयतानियामकत्वाभ्युपगमात्। न चैवमपि तत्र लौकिकसन्निकर्षस्य व्यभिचार इति वाच्यम्। तादृशारोपानन्तरं पीतं साक्षात्करोमीत्याकारकानुव्यवसायोदयेन तत्र तादृशविषयतायाः प्रामाणिकत्वात्, व्यभिचारवारणाय अनायत्या दोषविशेषाजन्यत्वस्य कारणाव्यवहितोत्तरत्वस्यैव वा सन्निकर्षजन्यतावच्छेदककोटौ निवेशनीयत्वादित्याहुः।

प्रतिवन्धकतावच्छेदककोटौ विशेष्यतावच्छेदकधर्मस्य विशिष्य निवेशात् द्रव्यं न वह्निमदित्यादिबुद्धेः न पर्वतो वह्निमानित्यादिज्ञानविरोधिता। कालिकसम्बन्धेन तदभाववत्ताज्ञानस्याविरोधितया दैशिकविशेषणताकत्वनिवेशः। उद्देश्यतावच्छेदकसामानाधिकरण्यमात्रावगाहिन्या बाधबुद्धेस्तादृशविशिष्टबुद्ध्यविरोधितया पर्वतत्वाद्यवच्छिन्नत्वीयसांसर्गिकविषयतावच्छिन्नत्वं विशेषणताविशेषीयसांसर्गिकविषयतायां निवेशनीयम्, एवञ्च पर्वतत्वावच्छिन्नविशेषणताया महानसत्वाद्यवच्छिन्नविशेष्यताकविशिष्टबुद्धौ संसर्गत्वानभ्युपगमे पर्वतत्वाद्यवच्छिन्नत्वं विशेष्यतायां न निवेशनीयम् प्रयोजनाभावात्, किन्तु पर्वतत्वावच्छिन्नविशेषणतावत्संयोगित्वादिरूपपरंपरासम्बन्धित्वावगाहिज्ञानवारणाय विशेष्यतानिरूपितत्वमात्रं तादृशविशेषणताविशेषीयसांसर्गिकविषयतायां निवेशनीयम्।

वस्तुतस्तु वास्तवपर्वतत्वव्यापकत्वविषयतानिवेशे यत्र पर्वतवृत्त्यभावप्रतियोगितावच्छेदकत्वाभावत्वेनाभावान्तरावगाहि ज्ञानं तदसंग्रहः तादृशज्ञानस्य पर्वतवृत्त्यभावप्रतियोगितावच्छेदकत्वाभावघटितव्यापकत्वानवगाहित्वात्, एवं यत्र पर्वतत्वादिना महानसादिकमेव संसर्गघटकतया भातं तस्याप्यसंग्रह इति पर्वतत्वावच्छिन्नसांसर्गिकविषयतावच्छिन्ना या आधेयत्वसांसर्गिकविषयता इत्येवंरीत्या व्यापकताघटकपदार्थकूटविषयता एव निवेशनीयाः। इत्थञ्च तादृशसांसर्गिकविषयतायां विशेष्यतायां वा पर्वतत्वावच्छिन्नत्वं निवेश्यत इत्यत्र विनिगमकाभावेन उभयत्रैव तन्निवेश इति ध्येयम्।

नीलपर्वतत्वावच्छेदेन वह्न्यभाववत्तानिर्णयस्य शुद्धपर्वतत्वसामानाधिकरण्येन विशिष्टबुद्धिं प्रति अविरोधितया पर्वतत्वान्यधर्मानवच्छि-

त्वं तादृशसांसर्गिकविषयतायां विशेष्यतायां वा निवेशनीयम्। न चैवं सामानाधिकरण्यमात्रावगाहिवह्न्यभाववत्ताज्ञानस्यैतादृशप्रतिबन्धकतावच्छेदकानाक्रान्ततया तादृशज्ञानदशायाम् अवच्छेदकावच्छेदेन वह्न्यादिविशिष्टबुद्ध्यापत्तिरिति वाच्यम्। अवच्छेदकावच्छेदेन वह्निविशिष्टबुद्धिं प्रति सामानाधिकरण्यावगाहिबाधनिर्णयस्य प्रतिबन्धकान्तरस्य कल्पनीयत्वात्। संयोगादिसंसर्गकविशिष्टबुद्धौ समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववतो निर्णयस्य वह्नित्वादिना वह्न्यादिविशिष्टबुद्धौ वह्निघटोभयाभाववत्तानिर्णयस्य चाविरोधितया संयोगादिसंसर्गावच्छिन्नप्रतियोगिताकत्वनिवेशः। द्रव्यत्वावच्छिन्नाभाववत्तानिर्णयस्य तदभावव्याप्यवत्तानिर्णयमुद्रयैव वह्नित्वादिना वह्न्यादिविशिष्टबुद्धिविरोधिता। न च महानसीयवह्नित्वाद्यवच्छिन्नप्रतियोगिताया अपि वह्नित्वाद्यवच्छिन्नत्वेन महानसीयवह्न्यभाववानित्याकारकज्ञानस्यापि वह्निमानित्याकारकज्ञानविरोधित्वापत्तिरिति वाच्यम्। वह्नित्वावच्छिन्नेत्यस्यैव वह्नित्वातिरिक्तधर्मानवच्छिन्नेत्यर्थकत्वात्। न च वह्न्यभावत्वादिना घटाभावावगाहिनो ज्ञानस्य वह्न्यादिविशिष्टबुद्धिं प्रति अविरोधित्वप्रसंगः, तस्य वह्नित्वाद्यवच्छिन्नप्रतियोगिताकाभावाप्रकारकत्वादिति वाच्यम्। वह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वसंसर्गावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताया एव प्रतिबन्धकतावच्छेदकघटकत्वात्, तादृशप्रकारताशालिभ्रमात्मकबाधबुद्धेर्वास्तवतादृशाभावानवगाहित्वेऽपि क्षतिविरहात्। वह्नित्वाद्यवच्छिन्नतया घटत्वाद्यवच्छिन्नप्रतियोगितायाः संसर्गतया भानाभ्युपगमे तु तत्संग्रहाय वह्नित्वविषयतावच्छिन्नावच्छिन्नत्वविषयतावच्छिन्नप्रतियोगित्वविषयतात्वेनैव तादृशप्रतियोगित्वविषयता निवेशनीया, न तु वास्तववह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वविषयतात्वेन, अत एव कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताया अप्रसिद्धावपि कम्बुग्रीवादिमत्त्वादिना घटादिविशिष्टबुद्धौ कम्बुग्रीवादिमान्नास्तीत्याकारकबाधबुद्धिप्रतिबन्धकतायां नानुपपत्तिः। आहार्यत्वबुद्धेरविरोधितया अनाहार्यत्वनिवेशः। न चाहार्यज्ञानस्यापि विरोधितया कथमनाहार्यत्वनिवेश इति वाच्यम्। यत आहार्यज्ञानस्य विरोधित्वे आत्मतत्त्वविवेकटिप्पण्यां प्रतियोग्यारोपहेतुताखण्डने अनाहार्यारोपस्य हेतुतां खण्डयित्वा आहार्यज्ञानस्याविरोधितया तद्धेतुत्वं स्यादित्याशंक्य, आहार्यस्याभावबुद्धेः प्रागसंभवादित्यनेन तद्धेतुत्वखण्डनमसङ्गतं स्यात्।

अथ किन्तावदाहार्यत्वं वह्न्यभाववत्ताबुद्धेः? न तावद् स्वाव्यवहि-

तोत्तरोत्पत्तिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन वह्न्यादिनिर्णयवत्त्वम्, वह्निव्याप्यवत्तानिर्णयकालीनेच्छाधीनवह्न्यभाववत्ताज्ञानस्यानाहार्यत्वापत्तेः। नापि तादृशसम्बन्धेन वह्न्यभाववत्ताज्ञानविरोधिज्ञानवत्त्वम्, इच्छाविरहविशिष्टवह्न्यदिमत्ताज्ञानस्यैव वह्न्यभाववत्ताज्ञानविरोधितया इच्छाकालीनवह्न्यादिमत्ताज्ञानस्यातथात्वेनाहार्यवह्न्यभावादिमत्ताज्ञानस्यापि विरोधिज्ञानवत्त्वाभावात्। परोक्षज्ञानप्रतिबन्धकतायामिच्छाया अनुत्तेजकतया इच्छाकालीनज्ञानस्यापि परोक्षवह्न्यभाववत्ताज्ञानविरोधित्वान्नानुपपत्तिरिति चेत्। एवमपि बाधतदभावव्याप्यवत्ताज्ञाननिष्ठानामवच्छेदकभेदेन भिन्नानां विरोधितानामनुगमकरूपाभावेनानुगमकरूपेण निवेशनमशक्यमेव। न च बाधतदभावव्याप्यवत्ताज्ञानकालीनज्ञाननिष्ठाहार्यत्वस्य दुर्वचत्वेऽपि अप्रामाण्यज्ञानानास्कन्दितवह्निमत्तानिर्णयविशिष्टतादृशतद्व्याप्यवत्ताप्रकारकनिर्णयविशिष्टत्वाद्यवच्छिन्नप्रतियोगिताकभेदकूटवत्त्वस्य प्रतिबन्धकतावच्छेदकत्वात् न दोष इति वाच्यम्। एवमपि आनुमानिकबाधतदभावव्याप्यवत्ताज्ञानकालीनलौकिकसन्निकर्षजन्यज्ञानस्याविरोधित्वप्रसङ्गः। तादृशबाधादिविशिष्टलौकिकज्ञानभिन्नत्वनिवेशे तदिन्द्रियजन्यबाधकालीनलौकिकसन्निकर्षजन्यज्ञानस्यापि प्रतिबन्धकत्वापत्तिः, तस्यालौकिकज्ञानभिन्नत्वात्। तदिन्द्रियजन्यबाधविशिष्टतदिन्द्रियजन्यज्ञानभेदस्यापि स्वातन्त्र्येण निवेशान्नेयमनुपपत्तिरिति चेत्। एवमपि आहार्यवह्न्यादिनिर्णयकालीनवह्न्यभाववत्ताज्ञानस्याविरोधित्वप्रसङ्गो दुर्वार एव। न चानाहार्यनिर्णयविशिष्टान्यत्वनिवेशान्न दोष इति वाच्यम्। वह्निमत्ताज्ञाननिष्ठानाहार्यत्वस्यानाहार्यवह्न्यभावादिनिर्णयविशिष्टान्यत्वरूपं विनाऽन्यधर्मस्य दुर्वचत्वात्, तत्र तादृशानाहार्यत्वस्यैव निवेशनीयतया तस्य वह्न्यभाववत्ताज्ञानीयानाहार्यत्वघटितत्वेनान्योन्याश्रयप्रसङ्गात्।

यत्तु आहार्यज्ञाने इच्छाया हेतुत्वोपगमात् जन्यतासम्बन्धेनेच्छावत्त्वमेवाहार्यत्वमिति। तदसत्। इच्छाविरहविशिष्टानुमितिसामग्रीत्वादिना भिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्धकत्वापेक्षया तादृशसामग्रीकालीनप्रत्यक्षादौ इच्छाया हेतुत्वस्यैव लाघवेनाङ्गीकारात्, भिन्नविषयकानुमितिसामग्रीकालीनेच्छाधीनवह्न्यादिप्रत्यक्षस्यापीच्छाजन्यतया आहार्यत्वप्रसङ्गात्। एवमिच्छाजन्यतावच्छेदकं यदि इच्छाविशिष्टवह्न्यभावादिप्रकारकप्रत्यक्षत्वं तदा बाधशून्यकालीनेच्छाविशिष्टज्ञानस्यापि तदाक्रान्तत्वेनेच्छाजन्यतया तस्यापि आहार्यत्वप्रसङ्गः। एवं बाधविशिष्टत्वस्य जन्यतावच्छेदककोटिप्रवेशेऽप्याहार्यवह्निमत्तानि-

र्णयकालीनेच्छाविशिष्टज्ञानस्य तथात्वं दुर्वारमिति । अनाहार्यवह्न्यादिमत्तानिर्णयविशिष्टज्ञानत्वं वह्न्यभावप्रत्यक्षेच्छाजन्यतावच्छेदकं वाच्यम् । वह्निमत्ताज्ञानविशिष्टानाहार्यत्वमपि जन्यतासम्बन्धेनेच्छाविशिष्टभिन्नत्वरूपमेव निवेश्यम्, तादृशज्ञानगोचरेच्छाया अपि कार्यतावच्छेदकमनाहार्यवह्न्यभावादिनिर्णयविशिष्टवह्न्यादिप्रत्यक्षत्वं वाच्यम्; अन्यथा उक्तरीत्या अनुपपत्तितादवस्थ्यात्, एवञ्च वह्निमत्ताज्ञाननिष्ठानाहार्यत्वज्ञाने तद्घटितधर्मावच्छेदेन वह्न्यभावज्ञानेच्छाजन्यत्वग्रहः; तद्ग्रहे च वह्न्यभाववत्ताज्ञानीयानाहार्यत्वग्रहः, तद्ग्रहे च तद्घटितधर्मावच्छेदेन वह्निमत्ताज्ञानेच्छाजन्यत्वग्रह इति दुर्वार एव दुर्ज्ञेयतादोष इति ।

यत्तु आहार्यवह्न्यभाववत्ताज्ञानादौ वह्न्यादेरपि भाने बाधकाभावात् सर्वत्र संशयात्मकमेवाहार्यज्ञानम्, एवञ्च निर्णयत्वनिवेशेनैवाहार्यज्ञानवारणसम्भवात् अनाहार्यत्वनिवेश एव नास्ति, किन्तन्निर्वचनेनेति ।

तदप्यसत्, यत्र भिन्नेन्द्रियजन्यापेक्षाबुध्यात्मकवह्न्यभाववत्तानिर्णयद्वितीयक्षणे वह्निमत्तानिर्णयो लौकिकसन्निकर्षजन्यः, तदनन्तरञ्च वह्न्यभावज्ञानं जायतामितीच्छा तदनन्तरं वह्न्यभावप्रत्यक्षं तत्पूर्वक्षणे वह्न्यभाववत्तानिर्णयरूपप्रतिबन्धकसत्त्वेन वह्निभानासम्भवात्, निर्णयात्मकस्यैवाहार्यज्ञानस्य सम्भवेनानाहार्यत्वनिवेशस्यावश्यकत्वात् । न चात्राहार्यवह्न्यभाववत्ताज्ञानमपि नेष्यत एवेति वाच्यम् । इच्छारूपोत्तेजकसत्त्वे तदुक्तौ बाधकाभावात् । न च बाधप्रतिबन्धकतायामिच्छाया उत्तेजकत्वं न स्वीक्रियते, किन्तु इच्छाजन्यभिन्नत्वमेव प्रतिबध्यतावच्छेदककोटौ निवेश्यते, इच्छायाश्च जन्यतावच्छेदकमिच्छाविशिष्टसंशयत्वमित्यत एककोटिज्ञानस्य प्रतिबध्यतावच्छेदकाक्रान्ततया न तदा एककोटिज्ञानमुत्पत्तुमर्हतीति वाच्यम् । जन्यतायाश्चाक्षुषत्वादिरूपावच्छेदकभेदभिन्नत्वेनेच्छाजन्यत्वावच्छिन्नप्रतियोगिताकैकभेदनिवेशासम्भवेन भेदकूटस्यैव निवेशनीयतया विनिगमनाविरहेण कार्यकारणभावबाहुल्यात्, इच्छाया उत्तेजकत्वकल्पस्यैवान्यत्र व्यवस्थापितत्वादुपदर्शितस्थलेऽनुभवसिद्धस्यापलापासम्भवाच्चेति, तस्मादाहार्यस्य दुर्वचतया कथमनाहार्यत्वेन प्रतिबन्धकत्वमिति ।

मैवम्, अनुगताहार्यत्वस्य दुर्वचत्वेऽपि आहार्यज्ञानानां तत्तद्व्यक्तित्वेनैव भेदकूटस्यैव प्रतिबन्धकताकुक्षौ निवेशनीयत्वात् ।

केचित्तु आहार्यज्ञाने यावदप्रामाण्यं न गृह्यते न भवत्येव तावद्विशिष्टबुद्धिरिति आहार्यत्वस्य निवेश एव नास्तीत्याहुः ।

अप्रामाण्यज्ञानास्कन्दितज्ञानस्याविरोधितया अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशः। तच्च सामानाधिकरण्यविशेष्यतोभयसम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यग्रहाभाववत्त्वम्। भाविज्ञानादिविशेष्यकाप्रामाण्यग्रहकालीनज्ञानस्य विरोधित्वोपपत्तये विशेष्यतानिवेशः। विशेष्यता चाप्रामाण्यप्रकारतानिरूपिता ग्राह्या, अन्यथा पर्वतो वह्न्यभाववानिति विज्ञानं प्रमा, भाविवह्न्यभावज्ञानञ्च वह्निमति वह्न्यभावप्रकारकमित्यप्रामाण्यज्ञानं तदा वह्निविशिष्टबुद्ध्यापत्तिः। न चैवं दीधितिग्रन्थविरोधः, युक्तिनिर्णीतेऽर्थे तस्याप्रयोजकत्वेन हेयत्वात्। पुरुषान्तरीयप्रामाण्यग्रहविषयीभूतस्य ज्ञानस्य विरोधित्वोपपत्तये सामानाधिकरण्यनिवेशः। न चाप्रामाण्यज्ञानाभावस्य प्रतिबन्धकतावच्छेदककोटिनिवेशे आहार्यज्ञानभेदकूटैः सह विशेषणविशेष्यभावे विनिगमनाविरहप्रसङ्गादप्रामाण्यग्रहानुत्तरत्वस्य प्रतिबध्यतावच्छेदककोटौ निवेशनमेवोचितमिति वाच्यम्। तथासति अप्रामाण्यग्रहविशिष्टस्याप्रामाण्यग्रहानास्कन्दितबाधबुद्धिदशायामापत्तिवारणाय तत्राप्रामाण्यग्रहहेतुताकल्पनाप्रसङ्गात्। अप्रामाण्यग्रहानास्कन्दितबाधबुद्धिद्वितीयक्षणे तदनास्कन्दितबाधबुद्धौ सत्यां तदनन्तरमप्रामाण्यग्रहरूपकारणसत्त्वात्तद्विशिष्टबुद्ध्यापत्तेश्च, तस्मादुत्तेजकत्वमावश्यकमेव। अप्रामाण्यग्रहवदव्याप्यवृत्तित्वग्रहस्याप्युत्तेजकत्वं स्वीकरणीयम्, अत एव समुच्चयोत्तरसमुच्चये न व्यभिचारः। न च संशयोत्तरसंशये व्यभिचारवारणाय वह्न्याद्यप्रकारकत्वरूपनिर्णयत्वस्य प्रतिबन्धकतावच्छेदककोटौ अवश्यनिवेशनीयतया समुच्चयात्मकबाधबुद्धेश्च वह्निप्रकारवत्तया तदुत्तरोत्पन्नसमुच्चयात्मकवह्न्यादिविशिष्टबुद्धौ न व्यभिचार इति वाच्यम्। विनश्यदवस्थाव्याप्यवृत्तित्वज्ञानजन्यसमुच्चयानन्तरं संशयादिवारणाय विरोधसंसर्गावच्छिन्नवह्न्यादिप्रकारताशून्यत्वस्यैव प्रतिबन्धकतावच्छेदककोटौ निवेशनीयतया समुच्चयोत्तरसमुच्चये व्यभिचारस्य दुर्वारत्वात्।

केचित्तु समुच्चयोत्तरसमुच्चये व्यभिचारवारणाय विरोधिविषयता बाधाभावजन्यतावच्छेदककोटौ विवेशनीया न तु प्रतिबन्धकतावच्छेदककोटौ अव्याप्यवृत्तित्वज्ञानाभावः, गौरवात्। नचैवं संशयात्मकविशिष्टबुद्धेरेव प्रतिबध्यत्वमापद्यते, न तु निश्चयस्य विरोधाविषयकत्वादिति वाच्यम्। निर्णयात्मकज्ञानेऽपि वह्न्यभाववदवृत्तिसंयोगादीनामेव संसर्गतया भानाभ्युपगमेन तस्यापि विरोधविषयकत्वात्। न च प्रत्यक्षात्मकनिर्णयस्याविरोधसंसर्गकत्वसम्भवेऽपि शुद्धसंयोगादिघटितव्या-

## अस्मत् प्रकाशित ग्रन्थानां संक्षिप्त-सूचीपत्रम् ।





प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस ।

११६ भामती । ब्रह्मसूत्रशाङ्करभाष्यव्याख्या सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता । न्यायाचार्य पं० दुण्डिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता । सम्पूर्णः । ( वेदान्त वि० ११ ) रु० २—

११७ जन्मपत्रदीपकः । सोदाहरण–सटिप्पण–हिन्दीटीकासहितः । ज्यौ० पं० श्रीविन्ध्येश्वरीप्रसादद्विवेदिना विरचितः । ( ज्यौ. वि. ९ ) रु० ०—

११८ गोभिलगृह्यसूत्रम् । सटीकम् । ( कर्म्मकाण्ड वि० १२ ) रु० ३—

११९ सिद्धान्तकौमुदी । व्याकरणाचार्य नेने पं० गोपालशास्त्रि विरचित सरला टिप्पण्या सहिता । "रूपलेखनप्रकार-पङ्क्तिलेखनप्रकाराख्य परिशिष्ट सहिता च । कारकान्तो भागः । ( व्या० वि० १४ ) रु० १—

१२० कात्यायनशुल्वसूत्रम् । कर्कभाष्य–महिधरवृत्ति सहितम् । ( कर्म्म० वि० १४ ) रु० ०—

१२१ व्यक्तिविवेकः । श्रीराजानकमहिमभट्टकृतः । श्रीराजानकरुय्यककृत व्याख्यया साहित्याचार्य पं० श्रीमधुसूदनशास्त्रिरचित मधुसूदनीविवृत्या च समुद्भासिता रु० ४—

१२२ श्राद्धविवेकः । श्रीरुद्रधरकृतः । वेदाचार्य प० अनन्तरामशास्त्रि कृत टिप्पणी सहितः । ( कर्म्म० वि० १३ ) रु० २—

१२३ सांख्यतत्त्वकौमुदी । पण्डितराज श्रीराजेश्वरशास्त्रिद्राविड महोदयनामाज्ञया न्यायाचार्य श्रीहरिराम शुक्ल विरचितया "सुषमाख्य" कौमुदी व्याख्यया समलङ्कृता । ( सांख्य वि० २ ) रु० १—

१२४ वाक्यपदीयम् । श्रीमद्भर्तृहरिमहावैयाकरण विरचितम् । न्याय–व्याकरणाचार्य पं० श्रीसूर्यनारायण शर्म शुक्लेन विरचितया भावप्रदीपाख्य व्याख्यया टिप्पणेन च सम्पादितम् । ( ब्रह्मकाण्डम् ) । ( व्या० वि० १९ ) रु० १—

१२५ प्रौढमनोरमा । भैरवी–भावप्रकाश–सरलाटीकोपेतः लघुशब्दरत्नश्च । [ स्त्रीप्रत्ययान्तो भागः ] ( व्या० वि० १६ ) रु० ६—

१२६ जैमिनीयन्यायमाला । श्रीमन्माधवाचार्यविरचिता । तद्विरचितेन विस्तरेण विभूषिता । मीमांसाचार्य पं० पट्टाभिरामशास्त्रिणा रचितया विषयवाक्यविवरण्या समलङ्कृत्य संशोधिता । [ तृतीयाध्यायान्ता ] ( मीमांसा वि० ७ ) रु० २—

१२७ शतपथब्राह्मणम् । (शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखीयं) वेदविशारद मीमांसाकेसरिणा पण्डित चिन्नस्वामिशास्त्रिणा टिप्पण्यादिभिर्विभूष्यविशोधितम् । [ काण्डचतुष्टात्मकः प्रथमोभागः ] ( वेद० वि० ७ ) रु० २—

१२८ लघुशब्देन्दुशेखरः । म. म. श्रीनागेशभट्टविरचितः । [नपादाम्तत्सूत्रान्तोभागः] नागेशोक्तिप्रकाश व्याख्यया संवलितः । ( व्या० वि० १७ ) रु० २—

१२९ कृत्यसारसमुच्चयः । म. म. श्रीअमृतनाथझा शर्मणा विरचितः । पण्डितश्रीगङ्गाधरमिश्रशर्मणा यथास्थलापयुक्तटिप्पणीभिः प्रयोजनीयविविधपरिशिष्टविषयैश्च समलङ्कृतः । ( धर्म० वि० ४ ) रु० १—

१३०–(१)भावप्रकाशः । श्रीभावमिश्रप्रणीतः । वनस्पतिविशेषज्ञ–रूपनिघण्टुकार–श्रीरूपलालवैश्यवरेण विरचितेन निघण्टुभागीय–सचित्र–विवरणेन समुपबृंहितया भिषग्रत्न–श्रीब्रह्मशङ्करशास्त्रिणा विनिर्मितया विद्योतिनीनामिकया भाषाटीकया संवलितः । [ पूर्वखण्डान्तः ] ( आयुर्वेदवि० ३ ) रु० ९—

१३०–(२) भावप्रकाशः । विद्योतिनी–भाषाटीका सहितः । [ ज्वराधिकारमात्रः ] रु० १

१३१ गादाधरी–सामान्यनिरुक्तिः । गंगाख्यव्याख्या टिप्पणी सहितः (न्या०वि०१९) रु० ३—

१३२ चरणव्यूहसूत्रम् । आचार्यमहिदासकृतभाष्यसहितम् । वेदाचार्य डोगराअनन्तरामशास्त्रिणा टिप्पण्यापरिष्कृत्य संशोधितम् । ( वेद वि० ८ ) रु० ०—

१३३ वैयाकरणभूषणसारः । श्रीहरिवल्लभविरचित–दर्पणटीकया, म. म. श्रीभैरवमिश्रकृतया–परीक्षाटीकया, श्रीकृष्णमित्रकृत–भूषणव्याख्यया, श्रीखुद्दीझाशर्मकृत तिङ्थवादसारेण च सहितः । ( व्या० वि० १८ ) रु० ३—